श्रीवरदराजाचार्यकृतः

# लघुसिद्धान्तकौमुदी

"बालमनोरमा" संस्कृत-हिन्दीटीकासहित

पं० श्रीसूर्यनारायणशुक्लः

वाराणसेय संस्कृत संस्थान
सी २७/६४, ज़गतगंज • वाराणसी

श्रीवरदराजाचार्यकृता

# लघुसिद्धान्तकौमुदी

काशीस्थराजकीयसंस्कृतपाठशालाध्यापकेन
न्याय-व्याकरणाचार्य—
पण्डित श्रीसूर्यनारायणशुक्लेन विरचितया परीक्षोपयोगिन्या
'बालमनोरमा'ख्यया टीकया
समलङ्कृता ।

न्यायव्याकरणाचार्य पं० ब्रह्मदत्त मिश्र प्रणीतया
न्यायव्याकरणाचार्य श्रीरामगोविन्दशुक्लेन परिवर्धितया
हिन्दी व्याख्यया युता सम्पादिता च ।




प्रकाशकः
**वाराणसेय संस्कृत संस्थान**
सी २७/६४ जगत्गंज, वाराणसी-२

# प्रकरण सूची

# भूमिका

अयि व्याकरणशास्त्रप्रणयिनो विद्वांसः ! सुविदितमेवेदं तत्रभवतां भवतां यत् संस्कृतसाहित्यमध्येतुकामानां प्रचरत्यध्ययने द्विविधा प्रणाली। एका अमरकोष-समासचक्र—धातुरूपावली—शब्दरूपावली—काव्यग्रन्थाध्ययनारम्भा, परा च लघुकौमुद्यारम्भा। तत्रादिमा परिशीलिता दक्षिणभारतमलंकरिष्णुभिर्दाक्षिणात्यैर्विपश्चिद्भिः। द्वितीया च उत्तरभारतभुवमलंकरिष्णुभिरौत्तराहैर्विपश्चिद्भिः। तत्र प्रणालीद्वयेनाप्यध्येतुकामानां छात्राणामस्त्यनलषापेक्षा व्याकरणस्य इत्यपि नातिरोहितम्। यतोऽमरकोषादिभिः संस्कृतशब्दानां ज्ञानेऽपि इदं साधु न वेति संशयानैरिव स्थीयते। संस्कृतज्ञैः व्याकरणेन साधुत्वे निश्चिते तु न संशयोन्मेषोऽपीति हृदयेऽनुसंधायैव "काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्" इति कस्य चिद्विपश्चिद्धौरेयस्योक्तिर्यथार्थाक्षरा विदुषां मानसं संवदतीव। इत्थं च तत्र श्रीमद्भोजिदीक्षितविरचिताया वैयाकरणसिद्धान्तकौमुद्या गुरुशरीरतया अनेकवर्षसाध्याध्ययनत्वेन संक्षेपेण शब्दसाधुत्वं ज्ञातुकामानां छात्राणां शास्त्रान्तरे प्रविष्टानां विदुषां च श्रीमद्वरदराजनिर्मिता वैयाकरणलघुसिद्धान्तकौमुद्येवात्यन्तमुपकरोति। तस्याश्च यद्यपि सन्ति बह्व्यो हिन्दीगिरा संस्कृतगिरा चोपनिबद्धाष्टीकाः परन्तु ता न तथा यथार्थबोधनक्षमा यथेयं बालमनोरमा। अस्यां टीकायां सूत्रार्थसमन्वयपूर्वकं प्रयोगाणां साधुत्वं प्रातिपदिकानां धातूनां च रूपाणि प्रदर्शितानि। येनाधुनिकानां छात्राणां सूत्रार्थसमन्वये शब्दरूपविषये च क्लेशो न स्यात्। तात्रतापि स्थलविशेषे संदिग्ध सूत्रार्थो मदन्तेवासिना वस्तीमण्डलान्तर्गत—वखरिया-ग्राम-वास्तव्येन पण्डित-श्रीवंशमणिमिश्रतनूद्भवेन चिरजीविना व्याकरणाचार्य-श्रीब्रह्मदत्तमिश्रेण विवृतो हिन्दीगिरेति महदिदं प्रमोदस्थानम्। बालमनोरमाविरचने महत्साहाय्यमेतेनाप्तुवमिति शुभाशिषा योजयाम्येनमिति।

रामनवमी
१९३७ ई०

विदुषामनुचरः
**सूर्यनारायणशुक्लः**

## द्वितीय संस्करण

## दो शब्द

यह हर्ष का विषय है कि वरदराजाचार्य कृत लघुसिद्धान्तकौमुदी पर पण्डित सम्राट् श्री सूर्यनारायण शुक्ल रचित बालमनोरमा टीका का द्वितीय संस्करण प्रकाशित हो गया। लगभग पचास वर्ष पहले मुद्रित यह टीका विद्वानों और छात्रों के लिए परम उपयोगी सिद्ध हुई। जिसका द्वितीय संस्करण सन् १९४२ में ही हो जाना चाहिए था किन्तु अनेक कठिनाइयों के कारण द्वितीय संस्करण मुद्रित नहीं हुआ। अध्यापकों और छात्रों को निरन्तर प्रेरणा से मैंने द्वितीय संस्करण प्रकाशित किया। इस संस्करण में सूत्रों का हिन्दी अनुवाद जो टीकाकार के अत्यन्त प्रिय शिष्य श्री ब्रह्मदत्त मिश्र जी ने कठिन सूत्रों की ही की थी। मैंने इस संस्करण में सब सूत्रों का हिन्दी अनुवाद पूर्ण कर दिया। कतिपय टिप्पणियाँ जो अपरिहार्य थी और संस्कृत में लिखी गयी थीं उन्हें मूल टीका में सन्निविष्ट कर दिया। इस प्रकार गणपाठ सूत्र सूची वार्तिक सूची और धातु सूची के साथ यह संस्करण अत्यन्त उपयोगी बनाया गया। जिसका प्रकाशन करके वाराणसेय संस्कृत संस्थान ने संस्कृत जगत का महान उपकार किया है। हम भगवान विश्वनाथ के कर कमलों में इसका अर्पण करते हुए अध्ययग अध्यापन में रुचि रखने वाले अध्यापकों और छात्रों के कर कमलों में अर्पित करते हैं।

आशा है लोग इस प्राचीन पद्धति के अध्ययन अध्यापन की परम्परा को अक्षुण्य बनाने के लिए इसे अवश्य संगृहीत करेंगे।

मकर सक्रान्ति
संवत् २०४४

**रामगोविन्द शुक्ल**

॥ श्रीः ॥

# लघुसिद्धान्तकौमुदी

## बालमनोरमासहिता

### अथ संज्ञाप्रकरणम्

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

अइउण् १। ऋॡक् २। एओङ् ३। ऐऔच् ४। हयवरट् ५। लण् ६। ञमङणनम् ७। झभञ् ८। घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४॥

---

बालमनोरमा

यस्यार्द्धं गिरिजा मूर्द्धिन गङ्गा भाले विधोः कला ।
अङ्के कुमारगणपौ तं सदाशिवमाश्रये ॥१॥
माहेश्वरं धनुरुदस्य विकृष्य दूरं संचूर्णयन् प्रमुदितो मुनिनाभिदृष्टः ।
शालीनया जनककन्यकया स तिर्यक्दृष्ट्या विलोकितवपू रघुनायकोऽव्यात् ॥२॥
श्रीसद्गुरोः सपदि चन्द्रधरस्य पादपद्मे नतिर्भवतु भक्तिरसाप्लुता मे ।
यत्सेवनासमतिपूतमनस्थलं मे शाब्दं रहस्यमखिलं प्रतिबिम्बतेऽत्र ॥३॥
न्यायव्याकरणाचार्यमीमांसकशिरोमणेः ।
सूर्यनारायणकवेः कृतिस्ताद्विदुषां मुदे ॥४॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं मङ्गलमाचरन् शिष्यशिक्षायै निबध्नाति नत्वेति ।

अहम् ( वरदाजाचार्य्यः ) शुद्धां—शुद्धस्वरूपां, गुण्यां—प्रशस्तगुणयुक्ताम्, सरस्वतीं देवीं नत्वा—प्रणम्य पाणिनीयप्रवेशाय—पाणिनिप्रोक्तव्याकरणशास्त्रे बालानां झटिति बुद्धिप्रवेशार्थं, लघुसिद्धान्तकौमुदीम्—लघुसिद्धान्तकौमुदीनामकं ग्रन्थं, करोमि-रचयामीत्यर्थः ।

---

सूर्यनारायणं स्वीयमिष्टदेवमुपास्महे ।
यत्प्रकाशात्प्रकाशन्ते पदार्थास्तिमसावृताः ॥

शुद्ध स्वरूप और उत्तम गुणों से युक्त सरस्वती देवी को नमस्कार करके महर्षि पाणिनि रचित व्याकरण शास्त्र में प्रवेश के लिए मैं ( वरदराजाचार्य ) लघुसिद्धान्तकौमुदी की रचना करता हूँ ।

इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्संज्ञकः ।

**१. हलन्त्यम् १।३।६ ॥** 'उपदेशे'ऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ।

---

अइउणित्यादौ सन्धिस्तु न, स्वराणां चादिषु पाठेन निपातसंज्ञायां प्रगृह्यत्वेन प्रकृतिभावात्, वर्णानामसन्दिग्धत्वेन बोधनार्थं संहिताया अविवक्षणाद्वा ।

हयवरडिति सूत्रे हकारग्रहणम् अट् अश् हश् इण् प्रत्याहारेषु हकारग्रहणार्थम्, तेन अर्हेणेत्यादिप्रयोगसिद्धिः । हलितिसूत्रे हकारोपदेशस्तु वल् रल् झल् शल् प्रत्याहारेषु हकारग्रहणार्थः, तेन रुदिहि स्वपिहि, इत्यादिप्रयोगसिद्धिः ।

**इति माहेश्वराणीति** । इमानि चतुर्दशसूत्राणि महेश्वरादागतानि शङ्करवरप्रसादात् पाणिनिना लब्धानीति यावत् । तदुक्तं शिक्षायाम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ इति

तानि च सूत्राणि अणादिसंज्ञार्थानि । अण् अक् अच् इत्यादिसंज्ञासिद्धिरेव तेषां प्रयोजनमित्यर्थः । **एषामिति**—एषां चतुर्दशसूत्राणाम् अन्त्या = अन्ते भवाः णकारादयो वर्णा इतः = इत्संज्ञकाः सन्तीत्यर्थः । **हकारादिष्विति**—हयवरडित्यादिसूत्रे हकारोत्तरमकार उच्चारणार्थ एव, अचं विना व्यञ्जनस्योच्चारणासम्भवात् । सर्वत्राकारस्योच्चारणार्थत्वप्रसक्तावाह—**लण्मध्येत्विति** । लण्सूत्रमध्यस्थाकारस्तु नोच्चारणार्थः, अपि तु इत्संज्ञार्थस्तेन र् प्रत्याहारसिद्ध्या 'उरण् रपरः' इत्यादौ रपर इत्यनेन लपरस्यापि विधानात्तवल्कार इत्यादेः सिद्धिः ।

**हलन्त्यमिति**—अत्र 'उपदेशेऽजनुनासिक इत्' इतिसूत्राद् उपदेशे इति, इदिति चानुवर्तते । हल् अन्त्यमिति छेदः । अन्ते भवमन्त्यमिति विग्रहः । ततश्च उपदेशेऽन्त्यं हल् इत्स्यादिति सूत्रार्थः । उपशब्द आद्यर्थकः, दिशिरुच्चारणार्थकस्तथा च प्रत्यासत्त्या

---

ये माहेश्वर सूत्र हैं और अण् आदि ४२ प्रत्याहार रूपी संज्ञा के लिए हैं, इन सूत्रों के अन्तिम वर्ण की इत् संज्ञा होती है । हकारादि में अकार उच्चारणार्थक है, अर्थात् इत् संज्ञा के बिना ही उनकी निवृत्ति हो जाती है किन्तु लण् सूत्र के मध्य में लकारोत्तरवर्ती अकार की 'उपदेशे अजनुनासिक इत्' से इत् संज्ञा होती है ।

१. उपदेश अर्थात् पाणिनि कात्यायन पतञ्जलिका जो प्रथम उच्चारण उस काल में विद्यमान जो अन्त्य हल् उसकी इत्संज्ञा हो । उपदेश में अन्त्य हल् की

**२. अदर्शनं लोपः १।१।६०॥** प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ।

**३. तस्य लोपः १।३।९** तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः ।

**४. आदिरन्त्येन सहेता १।१।७१॥** अन्त्येनेता सहित आदिर्मध्यगानां

---

एतच्छास्त्रप्रवर्त्तकाचार्याणां पाणिनि-कात्यायन-पतञ्जलीनामाद्योच्चारणमुपदेशः इति फलितम् ।

**सूत्रेऽदृष्टमिति**—यत्पदं सूत्रेषु नास्ति तत्सूत्रान्तरादन्यसूत्रादनुवर्तनीयम् इति-तदर्थः । यथास्मिन् सूत्रे उपदेशपदमित्सदञ्च ।

**अदर्शनमिति** । अस्य सूत्रस्य 'दर्शनाभावस्य लोपसंज्ञे'त्यर्थकरणे त्रपु इत्यादौ क्विपोऽदर्शनस्य लोपसंज्ञायां प्रत्ययलक्षणेन तुगापत्तिरत आह—**प्रसक्तस्येति** । प्रसक्तस्य—शास्त्रतोऽर्थतो वा प्रसक्तस्य अदर्शनं उच्चारणाभावो दर्शनाभावश्च लोपसंज्ञो भवतीति सूत्रार्थः ।

**तस्य लोप इति**—तच्छब्दस्य पूर्वपरामर्शकत्वात् तस्य-इत्संज्ञकस्य लोपो भवतीति सूत्रार्थः ।

**आदिरन्त्येनेति**—अन्ते भवोऽन्त्य इति विग्रहः समुदायं विना अवयवस्यानुपपन्नत्वाद् 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायेन अवयववाचकाभ्यामाद्यन्त-शब्दाभ्यामवयवी समुदाय आक्षिप्यते । 'स्वं रूपमि'ति सूत्रात्स्वपदानुवृत्तिस्तस्य षष्ठ्यन्त-तया विपरिणामोऽन्यथा 'संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते' इति न्यायादादेर्बोधो

---

इत्संज्ञा हो यह अर्थ ठीक नहीं क्योंकि अइउण् प्रभृति सूत्रों में उपदेश काल में इत्संज्ञा नहीं बन सकती क्योंकि अइउण् सूत्र के उपदेश काल में हल् पदार्थ का ही ज्ञान नहीं है पूर्वोक्त अर्थ में तो ठीक है क्योंकि प्रथमोच्चारण काल में अइउण् सूत्र के अन्त्य में विद्यमान जो णकार उसकी इत्संज्ञा हल् प्रत्याहार सिद्धि के अनन्तर हो जायगी ।

२. शास्त्र या अर्थ से प्रसक्त जो कोई उसके दर्शनाभाव की लोप संज्ञा हो । राजा प्रभृति में स्वौजसमौट् शास्त्र से सु का प्रसङ्ग था प्रासादात्प्रेक्षते में अर्थ के बल से आरुह्य का प्रसङ्ग था परन्तु अदर्शन अर्थात् ज्ञान नहीं हो रहा है इससे उन दोनों के दर्शनाभाव का लोप नाम पड़ा ।

३. जिसकी लोप संज्ञा हो उसका लोप होता है ।

४. अन्त्येत् के सहित उच्चार्यमाण जो आदि वर्ण वह मध्यपाती वर्णों का बोधक हो स्व—माने आदिका भी बोधक हो । अन्त्येत् के सहित उच्चार्यमाण आदि कौन अण् उसके मध्यपाती वर्ण इ उ उसका बोधक हुआ । स्वमाने आदि अकार का भी बोधक हुआ । वस्तुतः अन्त्येत्सदृश के सहित उच्चार्यमाण जो आदिसदृश वह

स्वस्य च संज्ञा स्यात् । यथाऽणिति अइउवर्णानां संज्ञा । एवमच्हल्अलित्यादयः ।

**५. ऊकालोऽज्झ्रस्वदीर्घप्लुतः १।२।२७ ॥** उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमु-

---

न स्यात् । ततश्च अन्त्येन इतासहोच्चार्य्यमाण आदिर्वर्णो मध्यपातिनां वर्णाना स्वस्य च बोधको भवतीति सूत्रार्थः । स्वशब्देनादेर्ग्रहणं नान्त्यस्य 'सहयुक्तेऽप्रधाने' इतिसूत्रे विहितया अन्त्येनेत्यप्रधानतृतीयया निर्देशात् सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् ।

प्रत्याहारसिद्धिप्रकारश्चेत्थम् तथाहि—अइउण् इत्यादौ 'हलन्त्यमि तिसूत्रेण णकारस्येत्संज्ञायाम् 'आदिरन्त्येन सहेता' इति सूत्रेण अन्त्येन इता णकारेण सहित उच्चार्यमाण आदिः अकारः मध्यपातिनाम् इ उ इत्यादिवर्णाना स्वस्य अकारस्य च बोधकः इति अण् इत्युच्चारेण अ इ उ वर्णानां बोधो भवति अनयैव रीत्या अक् अल् इत्यादिप्रत्याहारसिद्धिर्बोध्या ।

**ऊकालोऽज्झ्रस्वदीर्घप्लुत इति**—उश्च ऊश्च ऊ३श्च वः, वःकालो यस्येति-विग्रहः । वां काल इव कालो यस्येति मूलोक्तं तु फलितार्थकथनमेव, समानाधिकरण-

---

स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठचरमावयवता 'निरूपक एवं स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठादितानिरूपक, जो समुदाय उसके घटक का वोधक हो । अन्त्येत् कौन अइउण् का णकार उसके सदृश कौन उरण् रपरः सूत्र में अण् का णकार एवं आदि कौन अइउण् का अकार उसके सदृश कौन उरण् रपरः में अण् का अकार इससे अन्त्येत्सदृश सहित , उच्चार्यमाण आदि हुआ अण्' उसका घटक कौन णकार तदनुयोगिक सादृश्य का प्रतियोगी वर्ण कौन अइउण् का णकार तन्निष्ठ चरमावयवता का निरूपक तथा अण् घटक कौन अकार तदनुयोगिक सादृश्य का प्रतियोगी वर्ण कौन अइउण् का अकार तन्निष्ठ आदितानिरूपक समुदाय अइउण् उसका घटक अकारादिवर्ण उनका अण् पद बोधक हुआ ।

चन्द्रसदृशं मुखम् यहाँ पर सादृश्य का प्रतियोगी चन्द्र और सादृश्य का अनुयोगी मुख है उसकी तरह अइउण् णकारसदृश अण्काणकारः यहाँ सादृश्य का प्रतियोगी अइउण् का णकार और सादृश का अनुयोगी उरण् रपरः का णकार है । जिसका सादृश्य बतलाया जाय वह प्रतियोगी, जिसमें सादृश्य बतलाया जाय वह अनुयोगी कहा जाता है ।

५. उकार ऊकार ऊ३कार उच्चारणाधिकरणीभूतकाल के सदृश उच्चारणाधिकरणीभूतकाल है जिस अच् का उसे क्रम से ह्रस्व दीर्घ प्लुत संज्ञा हो । अर्थात् उकार के उच्चारणाधिकरणीभूत काल के सदृश उच्चारणाधिकरणीभूतकाल जिस

दात्तादिभेदेन त्रिधा ।

६. **उच्चैरुदात्तः १।२।२९ ॥** ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ।

७. **नीचैरनुदात्तः १।२।३० ॥** ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ।

८. **समाहारः स्वरितः १।२।३१ ॥** उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरिसंज्ञः स्यात् । स नवविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा ।

---

बहुव्रीहिसम्भवे व्यधिकरणबहुव्रीहेरसाधुत्वात् । ह्रस्वश्च दीर्घश्च प्लुतश्चेति समाहारद्वन्द्वः । इतरेतरयोगद्वन्द्वे तु सौत्रमेकवचनं वाच्यम्, तच्च न युक्तम्, शास्त्रीयैकवचनस्य सौत्रत्वकल्पनापेक्षया लोकसिद्धलिङ्गस्य सौत्रत्वकल्पनस्यैव न्याय्यत्वात् । ऊपदस्य स्वोच्चारणकालसदृशे लक्षणा । ततश्च उकारोच्चारणकालसदृशः कालो यस्याचः स ह्रस्व संज्ञको भवति । ऊकारोच्चारणकालसदृशः कालो यस्याचः स दीर्घसंज्ञको भवति, ऊ३कारोच्चारणकालसदृशः कालो यस्याचः स प्लुतसंज्ञको भवतीति निष्कृष्टोऽर्थः । कुक्कुटशब्दादौ ह्रस्वदीर्घप्लुतानामुकाराणां स्पष्टप्रतीत्या तस्यैव सूत्रे निर्देशो न त्वकारादेरिति तत्त्वम् ।

'ऊकालोऽज्झ्रस्वदीर्घप्लुत' इत्यनेन अचः ह्रस्वदीर्घप्लुतसंज्ञाविधानात् त्रयो भेदाः । प्रत्येकमपि उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरित, इति सूत्रैः क्रमश उदात्त-अनुदात्त-स्वरित-संज्ञया नव भेदाः ।

---

अच् का उसको ह्रस्व करते हैं एवं ऊकार के उच्चारणाधिकरणीभूतकाल के सदृश उच्चारणाधिकरणीभूतकाल जिस अच् का उसको दीर्घ कहते हैं एवं ऊ ३ कार के उच्चारणाधिकरणीभूतकाल के सदृश उच्चारणाधिकरणीभूतकाले जिस अच् का उसे प्लुत कहते हैं ।

६. ताल्वादि जो भागविशिष्ट स्थान उनमें ऊर्ध्वभागावच्छेदेन वायु के अभिघात से उत्पन्न ( अभिव्यक्त ) जो अच् वह उदात्त संज्ञक हो ।

७. ताल्वादि जो भागविशिष्ट स्थान उनमें अधोभागावच्छेदेन वायु के अभिघात ( संयोग ) से निष्पन्न जो अच् उसे अनुदात्त कहते हैं ।

८. उदात्तत्व और अनुदात्तत्व वर्णधर्म समाहृत ( इकट्ठे ) हो जिस अच् में उसे स्वरित कहते हैं ।

**९. मुखनासिकावचनोऽनुनासिकः १।१।८॥** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम्-अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः। ऌवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्।

**१०. तुल्यास्यप्रयत्नं सवर्णम् १।१।९॥** ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद् द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। ( ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम् ) अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। ऋटुरषाणां मूर्धा। ऌतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य।

---

**मुखनासिकावचनोऽनुनासिक इति**—मुखेन सहिता मुखसहिता, मुखसहिता चासौ नासिकेति मध्यमपदलोपी समासः, उच्यतेऽसौ वचनः, मुखनासिकया वचन इति विग्रहस्ततश्चास्य सूत्रस्य मूलोक्तोऽर्थो लभ्यते। तथाचानेन अनुनासिकसंज्ञया अनुनासिकनानुनासिकभेदेन नवविधस्याप्यचः अष्टादश भेदा भवन्ति। एवं सति सर्वेषामचामष्टादशत्वापत्तावाह—**अ इ उ ऋ एषामित्यादि।** अ इ उ ऋ वर्णनामष्टादशभेदाः। दीर्घाभावेन ऌवर्णस्य द्वादश भेदाः। ह्रस्वाभावेन एच्प्रत्याहारस्थवर्णानामपि द्वादश भेदाः।

अष्टादश भेदाश्चेत्थम्—

१ ह्रस्वोदत्तानुनासिकः २ ह्रस्वोदात्ताननुनासिकः ३ ह्रस्वानुदत्तानुनासिकः।
४ ह्रस्वानुदात्ताननुनासिकः ५ ह्रस्वस्वरितानुनासिकः ६ ह्रस्वस्वरिताननुनासिकः।
७ दीर्घोदात्तानुनासिकः। ८ दीर्घोदात्ताननुनासिकः। ९ दीर्घानुदात्तानुनासिकः।
१० दीर्घानुदात्ताननुनासिकः ११ दीर्घस्वरितानुनासिकः १२ दीर्घस्वरिताननुनासिकः।
१३ प्लुतानुदात्तानुनासिकः १४ प्लुोदात्ताननुनासिकः १५ प्लुतानुदात्तानुनासिकः।
१६ प्लुतोदात्ताननुनासिकः १७ प्लुतस्वरितानुनासिकः १८ प्लुतस्वरिताननुनासिकः।

**तुल्यास्येति**—तुलया संमितं तुल्यम्, आस्ये भवमास्यम्, आस्यं च प्रयत्नश्चास्यप्रयत्नौ तुल्यावास्यप्रयत्नौ यस्य तत् तुल्यास्यप्रयत्नमिति विग्रहः। ततश्च-यस्य वर्णस्य ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद् द्वयं यद्वर्णीयताल्वादिस्थानाभ्यन्तरप्रयत्नाभ्यां तुल्यं तयोः परस्परं सवर्णसंज्ञा भवति इति सूत्रार्थः।

---

९. मुख सहित नासिका से उच्चार्यमाणवर्ण की अनुनासिक संज्ञा होती है।

१०. जिस वर्णका ताल्वादि स्थान और आभ्यन्तर प्रयत्न जिसवर्ण के ताल्वादि स्थान और आभ्यन्तरप्रयत्न के साथ तुल्य हो वे दोनों परस्पर में सवर्ण संज्ञक होते

यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा स्पृष्टेषत्स्पृष्टेष-द्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ।

बाह्यप्रयत्नस्त्वेकादशधा—विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्प-प्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्प-प्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः । ≍क ≍ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍प ≍फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनुस्वारविसर्गौ ।

---

कस्य वर्णस्य किं स्थानमित्याकाङ्क्षायामाह **अकुहेति** । अ क ख ग घ ङ ह विसर्गाणां कण्ठः स्थानम् । इ च छ ज झ ञ य शानां वर्णानां तालु स्थानम् । ऋ ट ठ ड ढ ण र षाणां मूर्धा स्थानम् । ऌ त थ द ध न ल सानां दन्ताः ( दन्त-संयुक्तदेशाः ) स्थानम् । उ प फ ब भ मानां ≍प ≍फयोश्च ओष्ठौ स्थानम् । ञ म ङ ण नानां नासिका स्थानम्, तत्तद्वर्गीयकण्ठादि च । ए ऐ एतयोः कण्ठतालु स्थानम् । ओ औ एतयोः कण्ठोष्ठं स्थानम् । व इत्यस्य दन्तोष्ठं स्थानम् । ≍क इत्यत्र ककारात् ≍ख इत्यत्र खकारात्प्रागर्धविसर्गसदृशस्य जिह्वामूलं स्थानम् । अनुस्वारस्य नासिका स्थानम् ।

प्रयत्नो द्विधा भवति आभ्यन्तरबाह्यभेदात् । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदेन आभ्यन्तरप्रयत्नः पञ्चधा भवति । कस्य वर्णस्य कः प्रयत्न इत्याकाङ्क्षायामाह **तत्रेति** । स्पर्शसंज्ञकानां ककारमारभ्य मपर्यन्तानां वर्णानां स्पृष्टःप्रयत्नः । अन्तःस्थ-संज्ञकानां 'य र ल व' एषां वर्णानाम् ईषत्स्पृष्टप्रयत्नः । ऊष्मसंज्ञकानां श ष स हानां वर्णानाम् ईषद्विवृतप्रयत्नः । स्वरसंज्ञकानाम् ( अच्प्रत्याहारस्थानां ) वर्णानां विवृत-प्रयत्नः । ह्रस्वस्यावर्णस्य प्रयोगे संवृतप्रयत्नः । प्रक्रियादशायां तु विवृतप्रयत्न एव ।

बाह्यप्रयत्न एकादशधा भवति-विवार-संवार-श्वास-नाद-घोषाघोषाल्पप्राण-महाप्राणोदात्तानुदात्तस्वरितभेदात् । खर् प्रत्याहारस्थानां वर्णानां विवाराः श्वासाः अघोषाः प्रयत्नाः भवन्ति । हश्प्रत्याहारस्थानां वर्णानां संवारा नादाः घोषाः प्रयत्नाः भवन्ति । क ग ङ च ज ञ ट ड ण त द न प ब म य व र ल

---

हैं । जैसे क और ख दोनों का कण्ठ स्थान और स्पृष्ट प्रयत्न है इससे दोनों सवर्ण-संज्ञक हुए ।

**११. अणुदित्सवर्णस्य चाप्रत्ययः १।१।६९॥** प्रतीयते विधीयत इति प्रत्ययः। अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् अ इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा।

**१२. परः संनिकर्षः संहिता १।४।१०९॥** वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्।

**१३. हलोऽनन्तराः संयोगः १।१।७॥** अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः।

**१४. सुप्तिङन्तं पदम् १।४।१४॥** सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

इति संज्ञाप्रकरणम्।

---

एषां वर्णानाम् अल्पप्राणप्रयत्नः। ख घ छ झ ठ ढ थ ध फ भ श ष स ह एषां महाप्राणप्रयत्नः। अचां उदात्तोऽनुदात्तः स्वरितोऽल्पप्राणः प्रयत्नः।

**अणुदित्सवर्णस्येति**—अविधीयमानोऽण् सवर्णस्य बोधको भवति। कु चु टु तु पु एते उदितः। तेऽपि सवर्णस्य बोधका भवन्ति। प्रत्ययादेशागमास्तु न सवर्णबोधकाः तेषां विधीयमानत्वात्। अणुदित्सूत्रे एव परेण णकारेण अण्प्रत्याहारग्रहणं भवति नान्यत्र। तदुक्तम्—अत्रैवाण परेण णकारेण।

**परः सन्निकर्ष इति**—वर्णानामत्यन्तसामीप्यं संहितासंज्ञं भवति।

**हलोऽन्तरा इति**—अच्प्रत्याहारस्थवर्णैर्व्यवधानशून्या हल्वर्णाः संयोगसंज्ञका भवन्ति।

**सुप्तिङन्तमिति**—अनेन सूत्रेण सुबन्तस्य रामः इत्यादेः, तिङन्तस्य भवति इत्यादेः पदसंज्ञा भवति।

इति संज्ञाप्रकरणम्।

---

११. अविधीयमान अण् और उदित सवर्ण के संज्ञा हैं, इस सूत्र में अण् पद से लण् सूत्र के णकार तक अण् प्रत्याहार माना जाता है अन्यत्र अइउण् के णकार तक।

१२. वर्णों की अत्यन्त सन्निधि को संहिता संज्ञा होती है।

१३. अचों से अव्यवहित हलों की संयोग संज्ञा होती है।

१४. सुबन्त और तिङन्त की पद संज्ञा होती है।

## अथ अच्सन्धिप्रकरणम्

**१५. इको यणचि ६।१।७७ ॥** इकः स्थाने यण् स्यादचि संहितायां विषये। सुधी उपास्य इति स्थिते।

**१६. तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६ ॥** सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम्।

---

**सुधी + उपास्यः** इत्यवस्थायाम् 'इको यणची'ति सूत्रं प्रवर्तते। तत्र इक इति षष्ठ्या अनिर्धारितसम्बन्धविशेषत्वाद् अनिर्धारितसम्बन्धविशेषा षष्ठी स्थाने योगा बोध्येत्यर्थकस्य 'षष्ठी स्थाने योगे'ति परिभाषासूत्रस्योपस्थित्या स्थाने-इत्यस्य लाभः। संहितायामित्यधिक्रियते, तत्र च विषयसप्तमी। ततश्चायमर्थः—इक्प्रत्याहारान्तःपातिनाम् (इ उ ऋ ऌ) वर्णनां स्थाने अच्प्रत्याहारान्तःपातिनि वर्णे परे सति यण्प्रत्यहारान्तःपातिनो (य र ल व) वर्णाः स्युः, संहितायां विषये। अत्र सकारोत्तरवर्ती उकार इक्, धकारोत्तरवर्ती ईकार इक्, उपास्य इत्यस्य उकार इक् एवं धकारोत्तरवर्ती ईकारोऽच्, उपास्य इत्यस्य उकारोऽच्, पकारोत्तरवर्ती आकारोऽच्, इति त्रय इकः त्रयश्चाचः सन्ति। तत्र कस्मिन्नचि परे कस्येकः स्थाने यण् स्यादित्याशङ्कायाम् अनियमे नियमकारिणीत्वरूपं 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषाशास्त्रं प्रवृत्तम्। तस्यार्थस्तु सप्तमीनिर्देशेन विधीयमानं यत्कार्यं तद् वर्णान्तरव्यवधानशून्यो यः पूर्वस्तस्य स्थाने स्यादिति। अत्र अचीतिसप्तम्यन्तपदनिर्देशेन विधीयमानं यण्रूपं कार्यं वर्णान्तरव्यवधानशून्यः पूर्वः सुधी इत्यत्र धकारोत्तरवर्ती ईकारस्तस्य स्थाने स्यात्। वस्तुतस्तु 'इको यणची'त्यस्य अजुपश्लिष्टस्य इको यण् संहितायामित्यर्थात् इकारोकारयोः कस्य यण् इति शङ्कायां तस्मिन्नित्यस्य प्रवृत्तिरिति बोध्यम्। तत्र य व र ल रूपयण्चतुष्टयमध्ये को यण् ईकारस्य स्थाने स्यादिति शङ्कायां 'स्थानेऽन्तरतमः' इति सूत्रप्रवृत्तिः। अनेकादेशानां प्राप्तौ सत्यामत्यन्तसदृश आदेशः स्यादिति हि तस्यार्थः। सादृश्यञ्चात्र एकस्थानजन्यत्वेन। तथा च य व र ल एषाम्प्राप्तौ तालुस्थानजन्यस्य धकारोत्तरवर्तिन ईकारस्य स्थाने तालुस्थानजन्यो यकार एव यण्। एवं च सु ध् य् उपास्य इति जाते 'अनचि च' सूत्रं प्रवृत्तम्। अत्र

---

१५. इक् के स्थान में यण् होता है संहिता के विषय में।

१६. सप्तम्यन्त जो पद तन्निनिर्देशेन क्रियमाण जो कार्य वह सप्तमीप्रकृति बोध्य जो कोई उससे अव्यहित पूर्वके हो। सप्तमी कौन अचि में. इ तदन्तपद कौन अचि उसके निर्देश (उच्चारण) से क्रियमाण कार्य कौन यण् वह सप्तमी प्रकृति कौन अच् उसका बोध्य कौन उपास्यः का उकार उस उकार से अव्यवहित पूर्व जो सुधीधकारोत्तरवर्ती ईकार को हुआ।

**१७. स्थानेन्तरतमः १।१।५० ॥** प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ।

**१८. अनचि च ८।४।४७ ॥** अचः परस्य यरो द्वे वा स्तो न त्वचि । धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते ।

**१९. झलां जश् झशि ८।४।५३ ॥** स्पष्टम् । इति पूर्वधकारस्य दकारः ।

**२०. संयोगान्तस्य लोपः ८।२।२३ ॥** संयोगान्तं यत्पदं तस्य लोपः स्यात् ।

---

'यरोऽनुनासिकेऽनुनसिको वा' इत्यतो यरः इति, वा इति 'अचो रहाभ्यां द्वे' इत्यतः अचः इति द्वे इति, चानुवर्तते । अतः इत्यस्य पञ्चम्यन्तत्वेन 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येत्यस्य लाभः । ततश्च अच्प्रत्याहारान्तःपातिनो वर्णात्परस्य यर्प्रत्याहान्तःपातिनो वर्णस्य द्वित्वं वा भवति, अचि परे तु न द्वित्वम् इति तत्सूत्रार्थः । अत्र हि सकारोत्तरवर्त्युकाररूपाच्प्रत्याहारान्तःपातिवर्णात्परस्य यर्प्रत्याहारान्तःपातिनो धकारस्य द्वित्वे सु ध् ध् य् उपास्य इति जाते, ततः 'झलां जश् झशि' इति सूत्रं प्रवृत्तम् । झल्प्रत्याहारान्तःपातिनां वर्णानां स्थाने झश्प्रत्याहारान्तःपातिनि वर्णे परे सति जश्प्रत्याहारान्तःपातिनो वर्णाः स्युरिति हि सूत्रार्थः । अत्र झल्प्रत्याहारान्तःपाती वर्णः पूर्वधकारः तस्मात्परो झश्प्रत्याहारान्तःपाती वर्णः परधकारस्तस्मिन् परे सति पूर्वधकारस्य स्थाने जश्प्रत्याहारान्तःपाती वर्णः स्यात् । ज् ब् ग् ड् द् रूपाणां जश्प्रत्याहारान्तःपातिनां पञ्चानाम्मध्ये कतमेन भाव्यमिति शङ्कायां 'स्थानेऽन्तरतमः' इति परिभाषया स्थानकृतान्तर्य्याश्रियणेन दन्तस्थानजन्यस्य पूर्वधकारस्य स्थाने दन्तस्थानजन्ये दकारे जशि सुद्ध्य् उपास्य इति जाते 'संयोगान्तस्य लोपः' इति सूत्रप्रवृत्तिः । संयोगान्तं यत् पदं तस्य लोपः स्यादिति हि सूत्रार्थः । अत्र संयोगान्तं पदम् सु द् ध् य् इति तस्य लोपे प्राप्ते 'अलोऽन्त्यस्ये' इति सूत्रप्रवृत्तिः । षष्ठीनिर्दिष्ट आदेशः अन्त्यस्य अलः स्थाने भवतीति सूत्रार्थः । अत्र संयोगान्तस्येति षष्ठ्या निर्दिष्टो लोपादेश अन्त्यस्यालो यकारस्य स्यादिति य्लोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' इति वार्त्तिकप्रवृत्तिः । यणप्रत्याहारान्तःपातिवर्णानां लोपो न भवतीति वार्त्तिकार्थः । तथा च यलोपनिषेधे अज्झीनं परेण संयोज्यमित्यभियुक्तोक्त्या द् ध् य् एषाम्

---

१७. प्रसङ्ग होने पर सदृशतम आदेश होता है ।

१८. अच् से परे यर् को विकल्प से द्वित्व होता है अच् परे रहते नहीं होता ।

१९. झलों के स्थान में जश् होते हैं झश् परे रहते ।

२०. संयोगान्त पद का लोप होता है ।

**२१. अलोऽन्त्यस्य १।१।५२॥** षष्ठीनिर्दिष्टोऽन्त्यस्याल आदेशः स्यात् । इति यलोपे प्राप्ते (यणः प्रतिषेधो वाच्यः)। सुद्ध्युपास्यः। मद्ध्वरिः। धात्त्रंशः। लाकृतिः।

---

उपास्य इत्यस्योकारेण योगे सद्ध्युपास्य इति सिद्धम्। अनचि चेति द्वित्वाभावपक्षे सुध्युपास्य इति भवति।

**मद्ध्वरिः—इति।** मधु–अरिः–इत्यत्र 'इको यणचि' इतिसूत्रेण अरिरित्यस्याकाररूपेऽचि परे धकारोत्तरवर्त्तिन उकारस्य स्थाने यण्प्रत्याहारान्तःपातिषु चतुर्षु वर्णेषु प्राप्तेषु 'स्थानेऽन्तरतमः' इति परिभाषया ओष्ठस्थानजन्यस्य उकारस्य स्थाने ओष्ठस्थानजन्ये वकारे यणि म ध् व् अरिरिति जाते 'अनचि च' इति सूत्रेण मकारोत्तरवर्त्यकाररूपाचः परस्य धकाररूपस्य यरो वैकल्पिके द्वित्वे 'स्थानेऽन्तरतमः' इति परिभाषया दन्तस्थानजन्यपूर्वधकाररूपस्य झलः स्थाने परधकाररूपे झशि परे 'झलां जश् झशि' इति सूत्रेण दन्तस्थानजन्ये दकारे जशि मद्ध्व् अरिरिति जाते 'संयोगान्तस्य लोपः' इति सूत्रेण मद्ध्व्रूपस्य संयोगान्तपदस्य लोपे प्राप्ते 'अलोऽन्त्यस्य' इति सूत्रसहकारेण वकारस्य लोपे प्राप्ते 'यणः प्रतिषेधो वाच्य' इतिवार्त्तिकेन वलोपनिषेधे द्ध्व् इत्यस्य अरिरित्यस्याकारेण संयोगे मद्ध्वरिरिति सिद्ध्यति। 'अनचि च' इति सूत्रेण वैकल्पिकद्वित्वाभावपक्षे मध्वरिरिति।

**धात्त्रंशइति—**धातृ–अंशः, इत्यवस्थायां 'स्थानेऽन्तरतम' इति परिभाषाबलात् मूर्धस्थानजन्यस्य तकारोत्तरवर्त्तिन ऋकाररूपस्य इकः स्थाने अंश इत्यस्याकाररूपेऽचि परे मूर्धस्थानजन्यरेफे यणि धात्र् अंश इति जाते 'अनचि च' इत्यनेन धकारोत्तरवर्त्याकाररूपाचः परस्य तकाररूपस्य यरो द्वित्वे धात्त्र् रूपस्य संयोगान्तपदस्य लोपे प्राप्ते 'यणः प्रतिषेधो वाच्य' इति वार्तिकेन तन्निषेधे तत्र् इत्यस्याकारेण योगे धात्त्रंश इति सिद्धम्। 'अनचि चे' ति द्वित्वाभावपक्षे धात्रंश इति।

**लाकृतिरिति—**लृ–आकृतिरित्यत्र 'स्थानेऽन्तरतम' इतिपरिभाषाबलात् दन्तमात्रस्थानजन्यस्य लृकाररूपस्येकः स्थाने आकृतिरित्यस्याकाररूपेऽचि परे दन्तमात्रस्थानजन्यलकारे यणि लाकृतिरिति सिद्धम्।

---

२१. षष्ठ्यन्त जो पद तन्निर्देशेन क्रियमाण जो कार्य वह षष्ठीप्रकृति बोध्य जो कोई उसके अन्त्य के हो। जैसे षष्ठी कौन संयोगान्तस्य में स्य तदन्तपद कौन संयोगान्तस्य तन्निर्देशेन क्रियमाण कार्य कौन लोप वह षष्ठी प्रकृति कौन संयोगान्त उससे बोध्य कौन सुद्ध्य उसका अन्त्य कौन य् उसका लोप प्राप्त हुआ।

**२२. एचोऽयवायावः** ६।१।७८ ॥ एचः क्रमादय् अव् आय् आव् एते स्युरचि ।

**२३. यथासंख्यमनुदेशः समानाम्** १।३।१० ॥ समसम्बन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ।

**२४. वान्तो यि प्रत्यये** ६।१।७९ ॥ यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् । नाव्यम् । ( अध्वपरिमाणे च ) । गव्यूतिः ।

---

**हरये**–इति । हरे–ए इत्यवस्थायाम् 'एचोऽयवायावः' इति सूत्रप्रवृत्तिः । एच्-प्रत्याहारान्तःपातिवर्णस्थाने अय् अव् आय् आव् एते आदेशाः स्युरच्प्रत्याहारान्तःपातिनि वर्णे परे सति इति तत्सूत्रार्थः । अत्र एकाररूपेऽचि परे रेफोत्तरवर्त्तिन एकाररूपस्य एचः स्थाने अय् अव् आय् आव् आदेशाः सर्वे प्राप्ताः तत्र कतमेन भाव्यमिति शङ्कायाम् 'यथासंख्यमनुदेशः समानाम्'ति सूत्रप्रवृत्तिः । तुल्यसंख्याको विधिर्यथाक्रमं भवतीति सूत्रार्थः । तथा च 'एचोऽयवायावः' इतिसूत्रेण एकारस्य स्थाने अय् ओकारस्य स्थाने अव् ऐकारस्य स्थाने आय् औकारस्य स्थाने आव् भवति । अत्र हि रेफोत्तरवर्त्तिन एकारस्य स्थाने अय् आदेशे कृते हर् अय् ए इति जाते रेफस्य अकारेण यकारस्य एकारेण योगे हरये इति सिध्यति ।

**विष्णवे इति** । विष्णो–ए इत्यवस्थायां यथासंख्यसूत्रसहकारेण 'एचोऽयवायावः' इतिसूत्रेण णकारोत्तरर्त्तिन ओकारस्य स्थाने एकारेऽचि परे अवादेशे वकारस्य एकारेण योगे विष्णवे इति साधु ।

**नायक इति**—नै–अक इत्यत्र यथासंख्यसूत्रबलेन 'एचोऽयवायावः' इति सूत्रेण नकारोत्तरवर्त्तिन ऐकारस्य स्थाने अकारेऽचि परे आय् आदेशे परेण योगे कृते नायक इत्येतत्सिद्ध्यति ।

**पावक इति**—पौ–अक इत्यवस्थायां यथासंख्यसूत्रबलेन 'एचोऽयवायावः' इति सूत्रेण पकारोत्तरवर्तिन औकारस्य स्थाने अकारेऽचि परे आव् आदेशे कृते पकारस्याकारेण वकारस्य अकारेण संयोगे पावक इति सिद्धम् ।

**गव्यमिति**—गोर्विकारो गव्यमिति विग्रहः । 'गोपयसोर्यदि'ति सूत्रेण गोशब्दात् यत् प्रत्ययः । गो–यम् इत्यत्र 'वान्तो यि प्रत्यये' इति सूत्रप्रवृत्तिः । अत्र सूत्रे

---

२२. एचों को क्रम से अय् अव् आय् आव् आदेश होते हैं अच् परे रहते ।

२३. सम सम्बन्धी विधि यथासंख्य ( क्रम से ) होती है ।

२४. यकार है आदि में जिसके ऐसा प्रत्यय परे हो तो ओ और औ को अव् आव् आदेश होते हैं, ( वा० गो शब्द को वान्त ( अव् आव् ) आदेश होता है यूति शब्द परे रहते, यदि मार्ग का परिमाण बताना हो ) ।

२५. **अदेङ् गुणः १।१।२** ॥ अत् एङ् च गुणसंज्ञः स्यात् ।

२६. **तपरस्तत्कालस्य १।१।७०** ॥ तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात् ।

२७. **आद्गुणः ७।१।८७** ॥ अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ।

---

'ओदौतोरिति वक्तव्यम्' इति वार्तिकात् ओदौतोरित्यस्य लाभः । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया यकारादावित्यस्य लाभः । तेन यकार आदिर्यस्मिन्प्रत्यये तस्मिन् प्रत्यये परे ओकारौकारयोः स्थाने क्रमेण अव् आव् एतावादेशौ स्त इति सूत्रार्थः । अत्र हि यत्प्रत्यये परे गकारोत्तरवर्तिन ओकारस्य स्थाने अव् आदेशे कृते गव्यमिति सिद्धम् ।

**नाव्यमिति**—नावा तार्यमिति विग्रहे 'नौवयोधर्मे'त्यादिना सूत्रेण नौ शब्दात् यत् प्रत्ययः । नौ–यम् इत्यवस्थायाम् 'वान्तो यि प्रत्यय' इतिसूत्रेण यत्प्रत्यये परे नकारोत्तरवर्तिन औकारस्य स्थाने आव् आदेशे कृते नाव्यमिति सिद्धम् ।

**गव्यूतिरिति**—गो–यूतिरित्यत्र मार्गपरिमाणेऽर्थे ओकारस्य स्थानेऽवादेश इत्यर्थकेन 'अध्वपरिमाणे च' इति वार्तिकेन गकारोत्तरवर्तिन ओकारस्य स्थाने अव् आदेशे कृते गव्यूतिरिति सिद्धम् । गव्यूतिरिति क्रोशद्वयस्य संज्ञा, 'गव्यूतिः स्त्री क्रोशयुगम्' इति कोशात् ।

**अदेङ् गुण इति**—अ ए ओ एते वर्णाः गुणसंज्ञका भवन्तीति सूत्रार्थः ।

**तपरस्तत्कालस्येति** । तपर इत्यत्र व्याख्यानात् तात्पर इति 'तत्पुरुषः' तः परो यस्मादिति बहुव्रीहिश्चेति समासद्वयम् । तथा च यस्माद् वर्णात्परस्तकारः स, तकारात्परश्चोच्चार्यमाणो वर्णः समकालस्यैव सवर्णस्य बोधको भवतीति सूत्रार्थः । तेन 'अदेङ्गुणः' इति सूत्रेण ह्रस्वाकारस्यैव गुणसंज्ञा न तु दीर्घाकारस्य ।

**उपेन्द्र इति**—उप–इन्द्र इत्यत्र 'आद्गुण' इति सूत्रप्रवृत्तिः । अत्र 'इको यणचि'-इत्यत अचीत्यनुवर्तते 'एकः पूर्वपरयो'रिति सूत्रञ्चाधिक्रियते, तथा च अवर्णादचि परे पूर्वपरयोः स्थाने गुण एकादेशः स्यादिति–सूत्रार्थः । पकारोत्तरवर्त्तिन अकाराद्

---

२५. अत् (अ) और एङ् (ए ओ) की गुण संज्ञा होती है ।

२६. तकार है परे जिसके अथवा तकार से परे जो अच् वह उच्चार्यमाण समान काल का ही बोधक होता है । अर्थात् ह्रस्व के साथ त् हो तो ह्रस्व का ही बोध करायेगा और दीर्घ एवं प्लुत के साथ होगा तो दीर्घ एवं प्लुत का ही ।

२७. अवर्ण से अच् परे रहते पूर्वपर के स्थान में गुण रूप एक आदेश होता है ।

**२८. उपदेशेऽजनुनासिक इत् १ । ३ । २ ॥** उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् । प्रतिज्ञाऽनुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ।

**२९. उरण् रपरः १।१।५१ ॥** ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ।

**३०. लोपः शाकल्यस्य ८।३।१९ ॥** अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे ।

---

इकारेऽचि परे गुणत्रयाणां मध्ये केनात्र भाव्यमिति शङ्कायाम् 'स्थानेऽन्तरतमः' इति परिभाषया कण्ठतालुस्थानजन्ययोः अकारेकारयोरुभयोः स्थाने कण्ठतालुस्थानजन्य एकारे कृते उपेन्द्र इति सिद्धम् ।

**गङ्गोकमिति**—गङ्गा–उदकमित्यवस्थायां 'स्थानेऽन्तरतम' इति परिभाषाबलेन कण्ठोष्ठस्थानजन्ययोः आकारोकारयोरुभयोः स्थाने 'आद्गुणः' इति सूत्रेण गकारोत्तरवर्तिन आकारात् उकारेऽचि परे कण्ठोष्ठस्थानजन्ये ओकारे गङ्गोदकमिति सिद्धम् ।

**कृष्णर्द्धिरिति**—कृष्ण–ऋद्धिरित्यत्र 'आद्गुणः' इतिसूत्रप्रवृत्तिः । अत्र हि णकारोत्तरवर्तिन अकाराद् ऋद्धिरित्यस्य ऋकारेऽचि परे गुणत्रयमध्ये केनात्र भाव्यमिति शङ्कायां 'स्थानेऽन्तरतमः' इति परिभाषया कण्ठमूर्धस्थानजन्ययोः—अकारऋकारोभयोः स्थाने 'उरण् रपर' इति सूत्रसहकारेण अरि गुणे कृष्णर्द्धिरिति सिद्धम् ।

**तवल्कार इति**—तव–ऌकार इत्यत्र कण्ठमूर्धस्थानजन्याकारऌकारयोरुभयोः स्थाने 'आद्गुण' इति सूत्रेण 'उरण् रपरः' इतिसहकारेण ऋकारऌकारयोः सावर्ण्येन रप्रत्याहाराश्रयणेन च ऌकारस्थानिकाकारे लपरे अलि गुणे तवल्कार इति सिद्धम् ।

**हर इहेति**—हरे–इहेत्यवस्थायाम् 'एचोऽयवायावः' इत्यनेन अय् आदेशे हर् अय् इह इति जाते 'लोपः शाकल्यस्ये'ति सूत्रं प्रवृत्तम् । अत्र भोभगो–इतिसूत्राद् अपूर्वस्येति, अशीति च. व्योर्लघु, इतिसूत्राद् व्योरिति चानुवर्तते । पदस्येत्यधिक्रियते । तदन्त-

---

२८. उपदेश में अनुनासिक अच की इत् संज्ञा होती है । पाणिनि आदि आचार्यों के कथित वर्ण प्रतिज्ञा से ही अनुनासिक जानने चाहिए । लण् सूत्र में स्थित अवर्ण के सहित उच्चार्यमाण रेफ, "र" और "ल" दोनों का वोधक होता है ।

२९. तीस प्रकार के ऋ के स्थान में होने वाला अण् र पर होकर ही प्रवृत्त होता है । ऌ हो तो लपर होता है ।

३०. अवर्ण पूर्व पदान्त यकार वकार का विकल्प से लोप होता है । अश् परे रहते ।

**३१. पूर्वत्रासिद्धम् ८।२।१ ॥** सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह, हरयिह । विष्ण इह, विष्णविह ।

**३२. वृद्धिरादैच् १।१।१ ॥** आदैच्च वृद्धिसंज्ञः स्यात् ।

**३३. वृद्धिरेचि ६।१।८८ ॥** आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ।

---

विधिः । तेन अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे इत्यर्थलाभः । अत्र इकारेऽशि परे अवर्णपूर्वस्य यकारस्य लोपे हर इहेति जाते 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धमि'ति सूत्रेण 'आद्गुण' इत्येतद्दृष्ट्या 'लोपः शाकल्यस्ये' त्यस्यासिद्धत्वात् । गुणाभावे हर इहेति सिद्धम् । यलोपाभावपक्षे हरयिहेति रूपम् ।

**विष्ण इह**—विष्णो–इहेत्यवस्थायाम् 'एचोऽयवायावः' इति सूत्रेण ओकारस्य अवादेशे विष्ण् अव् इति जाते 'लोपः शाकल्यस्ये'ति वलोपे 'आद्गुणः' इति गुणे प्राप्ते 'पूर्वत्रासिद्धमि'त्यनेन 'लोपः शाकल्यस्ये'त्यस्यासिद्धत्वाद् गुणाभावे विष्ण इहेति । वलोपाभावे विष्णविहेति सिद्धम् ।

**वृद्धिरादैच्**—आ ऐ औ एते वर्णाः वृद्धिसंज्ञका भवन्तीति सूत्रार्थः ।

**कृष्णैकत्वमिति**—कृष्ण–एकत्वमित्यवस्थायाम् 'आद्गुणः' इति सूत्रं बाधित्वा 'वृद्धिरेची'ति सूत्रं प्रवृत्तम् । अत्र 'आद्गुणः' इत्यत आदित्यनुवर्तते । एकः पूर्वपरयोरिति चाधिक्रियते । तथा च अवर्णादेचि परे पूर्वपरयोर्वृद्धिरेकादेशः स्यादिति तत्सूत्रार्थः । णकारोत्तरवर्तिनः अकारात् एकत्वमित्यस्य एकारेऽचि परे पूर्वपरयोः स्थाने वृद्धित्रयमध्ये केनात्र भाव्यमिति शङ्कायां 'स्थानेऽन्तरतमः' इति परिभाषया कण्ठतालुस्थानजन्याकारैकारयोः स्थाने कण्ठतालुस्थानजन्ये ऐकारे वृद्धौ कृष्णैकत्वमिति सिद्धम् ।

**गङ्गौघ इति** । गङ्गा–ओघ इत्यत्र 'स्थानेऽन्तरतमः' इति परिभाषया कण्ठोष्ठस्थानजन्यत्वसादृश्यात् 'वृद्धिरेची'ति सूत्रेण गकारोत्तरवर्त्तिन आकारात् ओघ इत्यस्य ओकारेऽचि परे पूर्वपरयोः स्थाने औकारे वृद्धौ गङ्गौघ इति सिध्यति ।

**देवैश्वर्यम् इति** । देव–ऐश्वर्यमित्यवस्थायाम् 'स्थानेऽन्तरतमः' इति परिभाषया

---

३१. सपाद सप्ताध्यायीस्थ ( सवा सात अध्यायों के ) सूत्रों की दृष्टि में त्रिपादीस्थ ( आठवें अध्याय के अन्तिम तीन पादों के ) सूत्र असिद्ध होते हैं और त्रिपादी में भी पूर्व सूत्र के प्रति पर सूत्र असिद्ध होता है ।

३२. आत् (आ) और ऐच् (ऐ औ) की वृद्धि होती है ।

३३. अवर्ण से एच् परे रहते ( पूर्व पर के स्थान में ) वृद्धि रूप एक आदेश होता है । सूत्र गुण का अपवाद है ।

**३४. एत्येधत्यूठ्सु ६।१।८९ ॥** अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः । मा भवान्प्रेदिधत् । ( अक्षादूहिन्यामुपसंख्यानम् ) अक्षौहिणी सेना । ( प्रादूहो-

---

कण्ठतालुस्थानजन्यत्वसादृश्येन 'वृद्धिरेची'तिसूत्रेण वकारोत्तरवर्तिन अकाराद् ऐश्वर्यमित्यस्य ऐकारेऽचि परे पूर्वपरयोरुभयोः स्थाने ऐकारे वृद्धौ देवैश्वर्यमिति साधु ।

**कृष्णौत्कण्ठ्यमिति ।** कृष्ण–औत्कण्ठ्यमित्यवस्थायां 'स्थानेऽन्तरतमः' इति परिभाषया कण्ठोष्ठस्थानजन्यत्वसादृश्येन 'वृद्धिरेची'ति सूत्रेण णकारोत्तरवर्तिन आकाराद् औत्कण्ठ्यमित्यस्यौकारेऽचि परे पूर्वपरयोः स्थाने औकारे वृद्धौ कृष्णौत्कण्ठ्यमिति साधु ।

**उपैतीति ।** उप–एतीत्यत्र 'वृद्धिरेची'ति प्राप्तां वृद्धिं बाधित्वा 'एङि पररूपमि'ति प्राप्तं पररूपमपवादत्वाद्बाधित्वा 'एत्येधत्यूठ्स्वि'ति सूत्रप्रवृत्तिः । अत्र 'आद्गुण' इत्यत आदित्यनुवर्तते 'वृद्धिरेची'त्यत एचीति चानुवर्तते तच्च एत्येधत्योरेव विशेषणम्, न तूठः, तस्यैजादित्वासम्भवात् । एकः पूर्वपरयोरिति चाधिक्रियते । तथा च अवर्णादेजाद्योरेत्येधत्योरूठि च परे पूर्वपरयोर्वृद्धिरेकादेशः स्यदिति सूत्रार्थः । अत्र पकारोत्तरवर्तिनः अकाराद् एजादिः इण् धातुः एतीत्यत्र एकारः तस्मिन् परे पूर्वपरयोः स्थाने कण्ठतालुस्थानजन्यत्वसादृश्यात् ऐकारे वृद्धौ कृतायामुपैतीति सिद्धम् ।

**उपैधत इति ।** उप–एधते इत्यवस्थायाम् 'एत्येधत्यूठ्'स्विति सूत्रेण अकारैकारयोः स्थाने कण्ठतालुस्थानजन्यत्वसादृश्येन ऐकारे वृद्धौ तत्सिद्धिः ।

**प्रष्ठौह इति ।** प्रष्ठ–ऊह इत्यत्र 'एत्येधत्यूठ्सु'इति सूत्रेण अकारोकरयोः स्थाने कण्ठौष्ठस्थानजन्यत्वसादृश्येन औकारे वृद्धौ तत्सिद्धिः ।

**एजाद्योः किमिति ।** एत्येधत्यूठ्स्वितिसूत्रे वृद्धिरेचीत्यत एचीत्यस्य सम्बन्धाभावे उपेतः, माभवान् प्रेदिधदित्यादौ वृद्ध्या अनिष्टप्रयोगापत्तिः स्यादित्यतस्तत्सम्बन्ध आवश्यकः । कृते तु तस्मिन् एजादेः इण्धातोः एध् धातोश्चाभावान्न वृद्धिः । तत्सिद्धिप्रकारश्च उप–इत इत्यत्र, मा भवान् प्र–इदिधदित्यत्र च 'आद्गुणः' इति सूत्रेण एकारे गुणे कृते बोध्यः ।

---

३४. अवर्ण से एजादि एति एधति और ऊठ् परे रहते पूर्व पर के स्थान में वृद्धि रूप एक आदेश होता है । यह सूत्र पररूप और गुण दोनों का अपवाद है । ( वा० अक्ष शब्दावयव अवर्ण से ऊहिनी शब्दावयव अच् परे रहते पूर्व पर के स्थान में वृद्धि रूप एक आदेश होता है ) । ( वा० प्र शब्दावयव अवर्ण से ऊह ऊढ ऊढि एष एष्य इन शब्दावयव अच् के परे होने पर पूर्व पर के स्थान षे वृद्धि

ढोढ्येषैष्येषु) प्रौहः । प्रौढः । प्रौढिः । प्रैष । प्रैष्यः । (ऋते च तृतीयासमासे) सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्तः ( प्रवत्संतरकम्बलवसनार्णदशानामृणे ) । प्रार्णम् । वत्सतरार्णम् इत्यादि ।

---

**अक्षौहिणीति** । अक्ष–ऊहिनी इत्यवस्थायाम् 'आद्गुणः' इति गुणे प्राप्ते 'अक्षादूहिन्यामुपसंख्यानमि'तिवार्तिकप्रवृत्तिः । अक्षशब्दावयवावर्णाद् ऊहिनीशब्दावयवेऽचि परे पूर्वपरयोर्वृद्धिरेकादेशः स्यादिति तदर्थः । तथा चात्र वृद्धौ 'पूर्वपदात्संज्ञायामगः' इति णत्वे अक्षौहिणीति सिध्यति ।

**प्रौह इति** । प्र-ऊह इत्यत्र 'आद्गुणः' इति गुणे प्राप्ते 'प्रादूहोढोढ्येषैष्येष्वि'ति वार्तिकप्रवृत्तिः । प्रशब्दावयवावर्णाद् ऊहादिशब्दादिशब्दावयवे ऽचि परे पूर्वपरयोर्वृद्धिरेकादेशः स्यादिति तदर्थः । ततश्चात्र वृद्धौ प्रौह इति सिद्धम् ।

**सुखार्त इति** । सुखेन ऋत इति विग्रहे तृतीयासमासे, सुख–ऋत इत्यवस्थायाम् 'आद्गुणः' इति गुणे प्राप्ते तं बाधित्वा, 'ऋते च तृतीयासमासे' इति वार्तिकप्रवृत्तिः । तृतीयासमासघटकपूर्वपदावयवात् अवर्णाद् ऋतशब्दावयवेऽचि परे पूर्वपरयोर्वृद्धिरेकादेशः स्यादिति तदर्थः । तथा च अकारऋकारयोः स्थाने आकारवृद्धौ 'उरण् रपरः' इतिसूत्रेण रपरत्वे सुखार्त इति सिद्धम् ।

**परमर्त इति** । 'ऋते च तृतीयासमासे' इति वार्तिके तृतीयाग्रहणाभावे परमश्चासौ ऋतश्चेति विग्रहे कर्मधारयसमासे परमर्त इत्यत्रापि वृद्ध्या अनिष्टप्रयोगापत्तिरतस्तदावश्यकम् । कृते तु तस्मिन्, न वृद्धिः । परम–ऋत इत्यत्र 'आद्गुणः' इति गुणे 'उरण् रपरः' इति रपरत्वे परमर्त इति सिद्धम् ।

**प्रार्णमिति** । प्र-ऋणमित्यत्र 'आद्गुणः' इति गुणे प्राप्ते 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' इति वार्तिकप्रवृत्तिः । प्र वत्सतर कम्बल वसन ऋण दश शब्दावयवावर्णाद् ऋणशब्दावयवेऽचि पूर्वपरयोर्वृद्धिरेकादेशः स्यादिति तदर्थः । अत्र प्रशब्दावयवार्णाद् ऋणशब्दावयवे ऋकारेऽचि परे पूर्वपरयोराकारवृद्धौ 'उरण् रपरः' इति रपरत्वे प्रार्णमिति सिद्धम् । एवं वत्सतर–ऋणम्, कम्बल–ऋणम्, वसन–ऋणम्, ऋण–ऋणम्, दश–ऋणम्, इत्यत्र 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' इति वृद्धौ 'उरण् रपरः' इति रपरत्वे वत्सतरार्णम्, कम्बलार्णम्, वसनार्णम्, ऋणार्णम्, दशार्णम्, इत्यादि सिद्ध्यति ।

---

रूप एक आदेश होता है ) । ( वा० तृतीयासमास घटकपूर्वपदावयव अवर्ण से ऋत शब्दावयव परे रहते वृद्धि होती है ) । ( वा० प्र-वत्सर कम्बल वसन-ऋण-दश इन शब्दावयव अवर्णों से ऋण शब्दावयव अच् परे रहते पूर्व पर के स्थान में वृद्धि रूप एक आदेश होता है ) ।

**३५. उपसर्गाः क्रियायोगे १।४।५९ ॥** प्रादयः क्रियायोगे उपसर्गसंज्ञाः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप-एते प्रादयः ।

**३६. भूवादयो धातवः १।३।१ ॥** क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ।

**३७. उपसर्गादृति धातौ ६।१।९१ ॥** अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ।

**३८. एङि पररूपम् ६।१।९४ ॥** आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ।

**३९. अचोऽन्त्यादि टि १।१।६४ ॥** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् ) तच्च टेः । शकन्धुः

---

**प्रार्च्छतीति ।** प्र–ऋच्छतीत्यत्र 'उपसर्गाः क्रियायोगे' इति सूत्रेण प्र इत्यस्योपसर्गसंज्ञायाम् 'उपसर्गादृति धातौ'इति सूत्रप्रवृत्तिः । उपसर्गावयवावर्णाद् ऋकारादिधात्ववयवेऽचि परे पूर्वपरयोर्बृद्धिरेकादशेः स्यादिति तदर्थः । अत्र प्रशब्दावयवावर्णाद् ऋच्छीत्यस्याद्यवयवेऽचि परे पूर्वपरयोराकारबृद्धौ 'उरण् रपरः' इति रपरत्वे प्रार्च्छतीति सिद्ध्यति ।

**प्रजते इति ।** प्र–एजते इत्यवस्थायां 'वृद्धिरेची'ति बृद्धौ प्राप्तायाम् 'एङि पररूपमि'ति सूत्रं प्रवृत्तम्, अत्र 'आद्गुणः इत्यत आदिति उपसर्गाद् ऋति धातावित्यत उपसर्गादिति धातावििति चानुवर्तते । तथा च अवर्णान्तादुपसर्गादेङादौ धातौ परे पूर्वपरयोः पररूपमेकादेशः स्यादिति सूत्रार्थः । ततश्च अकारस्य एजत इत्यत्र एकारस्य उभयोः स्थाने पररूपेण एकारे प्रेजते इति सिद्धम् ।

**उपोषतीति ।** उप–ओषतीत्यत्र 'वृद्धिरेची'ति वृचौ प्राप्तायाम् 'एङि पररूपमि'ति सूत्रेण पररूपे उपोषतीति सिद्धम् ।

**शकन्धुरिति ।** शक–अन्धुरित्यत्र 'अचोऽन्त्यादि टि' इति सूत्रं प्रवृत्तम् ।

---

३५. क्रिया के योग में प्रादियों की उपसर्ग संज्ञा होती है ।

३६. क्रियावाची भू आदियों की धातु संज्ञा होती है ।

३७. अवर्णान्त उपसर्ग से ऋकारादि धातु परे रहते पूर्व पर के स्थान में वृद्धि रूप एक आदेश होता है ।

३८. अवर्णान्त उपसर्ग से एङादि धातुपरे रहते पूर्वपरके स्थान में पररूप एकादेश होता है ।

३९. अचों के मध्य में जो अन्त्य अच् वह आदि में हो जिस समुदाय के उसकी टी संज्ञा होती है ।

स्यात् । शिवायोन्नमः । शिव एहि ।

कर्कन्धुः । मनीषा । आकृतिगणोऽयम् । मार्त्तण्डः ।

**४०. ओमाङोश्च ६।१।९५ ॥** ओमि आङि चात् परे पररूपमेकादेशः

---

अच इति निर्धारणे षष्ठी अन्त्यादीति लुप्तविभक्तिकम्पदम् । तेन अचाम्मध्ये योऽन्त्यः स आदिर्यस्य स समुदायः टिसंज्ञको भवतीति सूत्रार्थः । अत्र अचां मध्ये ऽन्त्यः ककारोत्तरवर्त्यकारः स व्यपदेशिवद्भावेन स्वस्यैवाद्यवयव इति तस्य टिसंज्ञायाम्, 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्तिकप्रवृत्तिः । शकन्ध्वादिगणपठितो यः शब्दस्तद्घटकं यत् पूर्वपदं तदवयवस्य टेः उत्तरपदाद्यवयवस्याचश्च द्वयोः पररूपं भवतीति तदर्थः । अत्र शकन्ध्वादिगणपठितः शब्दः शकन्धुरिति तद्घटकं पूर्वपदं शक इति तदवयवस्य ककारोत्तरवर्त्तिनः अकारस्य टेः अन्धुरित्येतद्घटकाकारे परे द्वयोः पररूपे शकन्धुरिति सिद्धम् ।

कर्कन्धुरिति । कर्क–अन्धुरित्यत्र 'अचोऽन्त्यादिटि' इत्यनेन ककारोत्तरवर्तिनः अकारस्य टिसंज्ञायाम् तस्य अन्धुरित्येतद्घटकस्याकारस्य च 'शकन्ध्वादिषु पररूपं वाच्यमि'ति वार्तिकेन पररूपे कर्कन्धुरिति सिद्धम् ।

मनीषेति । मनस्–ईषेत्यत्र 'अचोऽन्त्यादिटी'त्यनेन सूत्रेण अचां मध्ये ऽन्त्यः नकारोत्तरवर्त्यकारः स अस् इतिसमुदायस्यादिरिति अस् इत्यस्य टिसंज्ञायाम् 'शकन्ध्वादिषु पररूपं वाच्यमि'ति वार्तिकेन शकन्ध्वादिगणपठितः शब्दः मनीषा इति तद्घटकं पूर्वपदं मनस् इति तदवयवस्य अस्इत्यस्य टेः ईषा इत्येद्घटकस्येकारस्य च पररूपे मनीषेति सिद्धम् ।

मार्तण्ड इति । शकन्ध्वादिराकृतिगणस्तेन मार्त–अण्ड इत्यत्र तकारोत्तरस्याकारस्य टि संज्ञायाम् 'शकन्ध्वादिषु' पररूपं वाच्यमिति पररूपे मार्तण्डः सिध्यति ।

---

वा० शकन्ध्वादिगणपठित जो शब्द उसके सिद्धि के अनुगुण पररूप कहना अर्थात् शकन्ध्वादिगणपठितशब्दघटकपूर्वपद का जो टि तथा उत्तरपदाद्यवयव जो अच् दोनों के स्थान में पररूप एकादेश हो ।

मनीषा—अचों के मध्य में अन्त्य अच् कौन मनस् नकार उत्तरवर्ती अकार वह आदि में है किस समुदाय के अस् के उसको टि संज्ञा हुई । नकार में अकार यह कहना अशुद्ध है क्योंकि वर्णात्कारः से कारप्रत्यय व्यञ्जनमात्र बोधन करने के लिए होता है तो व्यञ्जन में अकार कहाँ है । एवं अकार आदि में है किसके सकार के यह कहना भी अशुद्ध है क्योंकि तब तो स् को टिसंज्ञा होगी तो उसी को पररूप होगा अस्को न होगा ।

४०. अवर्ण से ओम् और आङ् परे रहते पूर्व पर के स्थान में पररूप एक आदेश होता है ।

**४१. अन्तादिवच्च ६।१।८५ ॥** योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत् स्यात् । शिवेहि ।

**४२. अकः सवर्णे दीर्घः ६।१।१०१ ॥** अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ।

---

**शिवायों नम इति** । शिवाय-ओंनमः इत्यवस्थायां 'वृद्धिरेची'ति सूत्रेण वृद्धौ प्राप्तायाम् 'ओमाङोश्चे'ति सूत्रं प्रवर्तते । अत्र 'आद्गुणः' इत्यत आदिति 'एङि पररूपमि'त्यतः पररूपमिति चानुवर्तते । अवर्णाद् ओमि आङि च परे पूर्वपरयोः पररूपमेकादेशः स्यादिति सूत्रार्थः । अत्र यकारोत्तरवर्तिनः अकारादोमि परे पूर्वपरयोः स्थाने पररूपे ओकारे शिवायों नम इति साधु ।

**शिवेहीति** । शिव-आ-इहि इत्यत्र 'आद्गुणः' इति गुणे 'अकः सवर्णे दीर्घः' इति दीर्घे च प्राप्ते धातूपसर्गयोः कार्यस्यान्तरङ्गत्वेन 'असिद्धम्बहिरङ्गमन्तरङ्गे' इति परिभाषया दीर्घस्यासिद्धत्वेन गुणे कृते शिव एहीति जाते 'अन्तादिवच्चे'ति सूत्रं प्रवर्तते । एकादेशस्य पूर्वस्थानिघटितसमुदाये परस्थानिघटितसमुदाये वा यो धर्मः स एकादेशविशिष्टे ऽतिदिश्यते इति सूत्रार्थः । अत्र एकादेशो गुणः तस्य पूर्वस्थानी आकारस्तद्घटितः समुदायः व्यपदेशिवद्भावेन आकार एव तस्मिन्धर्म आङ्त्वं तस्य एकादेशे एकारेऽतिदेशे 'ओमाङोश्चे'त्यनेन वकारोत्तरवर्तिनः अकाराद् एकाररूपे आङि परे पूर्वपरयोः स्थाने पररूपे एकारे शिवेहीति सिद्धम् ।

**दैत्यारिरिति** । दैत्य-अरिरित्यवस्थायाम् 'अकः सवर्णे दीर्घः' इति सूत्रप्रवृत्तिः । अत्र 'इको यणची'त्यत अचीत्यनुवर्तते । एकः पूर्वपरयोरित्यधिक्रियते तथा च अक्प्रत्याहारान्तःपातिवर्णात् सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यादिति तदर्थः । यकारोत्तरवर्तिनः अकारात्सवर्णे ऽरिरित्यस्याकारे ऽचि परे पूर्वपरयोः दीर्घे आकारे दैत्यारिरिति सिद्धम् ।

**श्रीश इति** । श्री-ईश इत्यत्र 'अकः सवर्णे दीर्घ' इत्यनेन रेफोत्तरेकाराद् ईश इत्यस्येकारे ऽचि परे पूर्वपरयोर्दीर्घ ईकारे श्रीश इति साधु ।

---

४१. अन्त्यवर्ण रहते एकादेशपूर्वस्थानिघटितसमुदाय में जो धर्म वह एकादेशविशिष्ट में आता है। आदिवर्ण रहते एकादेशपरस्थानिघटितसमुदाय में जो धर्म वह एकादेश विशिष्ट में आता है। अन्त्यवर्ण कौन आ उसके रहते एकादेश पूर्वस्थानी जो आ तद्घटितसमुदाय व्यदेशिवद्भावेन आ उसमें धर्म कौन आङ्त्व वह एकादेश विशिष्ट ए में आगया ।

४२. अक् को सवर्ण अच् परे रहते पूर्वपर के स्थान में दीर्घ एकादेश होता है ।

**४३. एङः पदान्तादति ६।१।१०९ ॥** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ।

**४४. सर्वत्र विभाषा गोः ६।१।१२२ ॥** लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते । गो अग्रम्, गोऽग्रम् । एङन्तस्य किम् । चित्रग्वग्रम् । पदान्ते किम् । गोः ।

---

**विष्णूदय इति** । विष्णु—उदय इत्यत्र 'अकः सवर्णे दीर्घ' इत्यनेन णकारोत्तरवर्तिन उकाराद् उदय इत्यस्य उकारेऽचि परे पूर्वपरयोर्दीर्घ ऊकारे विष्णुदय इति सिद्धम् ।

**होतॄकार इति** । होतृ—ऋकार इत्यत्र 'अकः सवर्णे दीर्घ' इत्यनेन तकारोत्तरवर्तिन ऋकाराद् ऋकारेऽचि पूर्वपरयोर्दीर्घे ऋकारे होत्तॄकार इति साधु ।

**हरेऽवेति** । हरे—अवेत्यत्र 'एचोऽयवायाव' इति सूत्रेण अयादेशे प्राप्ते 'एङः पदान्तादतीति' सूत्रं प्रवृत्तम् । पदान्ताद् एङ्प्रत्याहारान्तःपातिवर्णाद् ह्रस्वाकारे परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यादिति तदर्थः । अत्र रेफोत्तरवर्तिन एकाराद् अवेत्यस्याकारे परे पूर्वपरयोः स्थाने पूर्वरूपे हरेऽवेति साधु ।

**विष्णोऽवेति** । विष्णो—अवेत्यत्र 'एचोऽयवायावः' 'इत्यनेनावादेशे प्राप्ते एङः पदान्तादती' ति सूत्रेण णकारोत्तरवर्त्योकारस्य अवेत्येतद्घटकाकारस्य च स्थाने पूर्वरूपे विष्णोऽवेति सिद्धम् ।

**गो अग्रमिति** । गो—अग्रमित्यवस्थायाम् 'एचोऽयवायावः' इति सूत्रेण अवादेशे प्राप्ते तं बाधित्वा 'एङः पदान्तादती' ति पूर्वरूपे प्राप्ते 'सर्वत्र विभाषा गोरि' ति सूत्रप्रवृत्तिः । अत्र 'एङः पदान्तादती' ति सूत्रमनुवर्तते । गोरित्यनेन सामानाधिकरण्यानुरोधाद् एङ इत्यस्य षष्ठ्यन्तत्वेन विपरिणामः । पदान्तादित्यस्य सप्तम्यन्तत्वेन विपरिणामः । 'प्रकृत्याऽन्तः पादमव्यपरे', इतिसूत्रात्प्रकृत्या—इत्यनुवर्तते । तथा च लोके वेदे चैङन्तस्य गोशब्दस्य ह्रस्वाकारे परे वैकल्पिकः प्रकृतिभावः स्यात्पदान्ते सूत्रार्थः । तेनात्र प्रकृतिभावान्न पूर्वरूपम् इति गो अग्रमिति यथास्थितमेव सिद्धम्। पक्षे तु पूर्वरूपे गोऽग्रमिति सिद्धम् ।

**चित्रग्वग्रमिति** । 'सर्वत्र विभाषागोरि'तिसूत्रे 'एङः पदान्तादति'इति सूत्राद् एङ इत्यस्य सम्बन्धाभावे चित्रग्वग्रमित्यत्रापि प्रकृतिभावेन चित्रगु अग्रमित्यनिष्टं

---

४३. पदान्त एङ् से अत् परे रहते पूर्व पर के स्थान में पूर्व रूप एकादेश होता है ।

४४. लोक और वेद में एङन्त गो शब्द को विकल्प से प्रकृतिभाव होता है पदान्त में ।

**४५. अनेकाल्शित्सर्वस्य १।१।५५ ॥** इति प्राप्ते ।

**४६. ङिच्च १।१।५३ ॥** ङिदनेकालप्यन्त्यस्यैव स्यात् ।

**४७. अवङ् स्फोटायनस्य ६।१।१२३ ॥** पदान्ते एङन्तस्य गोरवङ् वाऽचि । गवाग्रम्, गोऽग्रम् । पदान्ते किम् । गवि ।

---

प्रसज्येत अतस्तदावश्यकम् । कृते तु तस्मिन् न प्रकृतिभाव; । चित्रगु—अग्रमित्यवस्थायाम् 'इको यणची'ति सूत्रेण गकारोत्तरवर्तिन उकारस्य अग्रमित्यस्य अकारे परे वकारे यणि कृते चित्रग्वग्रमिति सिद्ध्यति ।

**गोरिति ।** 'सर्वत्र विभाषागोरि'ति सूत्रे पदान्तपदसम्बन्धाभावे गोः—इत्यत्रापि गो अस् इत्यवस्थायाम् प्रकृतिभावेन गो अः-इत्यनिष्टप्रयोगापत्तिः स्यादतस्तत्सम्बन्ध आवश्यकः । कृते तु तस्मिन् अत्र पदान्तत्वाभावेन न प्रकृतिभावः । गो अस् इत्यवस्थायाम् 'ङसिङसोश्चे'ति सूत्रेण पूर्वरूपे रुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्गे गोरिति सिद्धम् ।

**गवाग्रमिति ।** गो—अग्रमित्यत्र प्रकृतिभावाभावपक्षे 'अवङ् स्फोटायनस्ये'ति—सूत्रं प्रवृत्तम् । अत्र 'इको यणचो'त्यत अचीति 'एङः पदान्तादतो'त्यत एङ इति पदान्तादिति 'सर्वत्र विभाषा गोरि'त्यतः विभाषेति गोरिति चानुवर्तते । तथा च पदान्ते एङन्तस्य गोशब्दस्य अवङ् आदेशो वा स्यादचि परे स्फोटायनयाचार्यस्य मते इति सूत्रार्थः । अनेन सूत्रेण 'अलोऽन्त्यस्ये'ति परिभाषाबलाद् गकारोत्तरवर्तिन ओकारस्य अवङादेशे प्राप्ते तं प्रबाध्य 'अनेकाल्शित्सर्वस्ये'ति सूत्रं प्रवर्तते । अनेकाल् ( अनेकाक्षरकः ) शित् ( शकारेत्संज्ञकः ) च आदेशः सर्वस्य स्थाने भवतीति सूत्रार्थः । तथा च अनेकाल्त्वेन गो इत्यस्य स्थानेऽवङि प्राप्ते 'ङिच्चे'ति सूत्रं प्रवृत्तम् । अनेकालपि ङकारेत्संज्ञक आदेशोऽन्त्यस्यैव स्थाने भवतीति सूत्रार्थः । तथाचानेकाल्त्वेऽप्यवङो ङकारेत्संज्ञकत्वेन अन्त्यस्य गकारोत्तरवर्तिन ओकारस्य स्थानेऽवङि ङकारस्येत्संज्ञायां लोपे च कृते—गव अग्रमिति जाते 'अकः सवर्णे दीर्घः' इति सूत्रेण दीर्घे गवाग्रमिति सिद्धम् । अवङोऽभावपक्षे प्रकृतिभावे गो अग्रमिति । प्रकृतिभावाभावपक्षे पूर्वरूपे गोऽग्रमिति ।

**गवेन्द्र इति ।** गो—इन्द्र इत्यवस्थायाम्—'एचोऽयवायावः' इति सूत्रेण अव् आदेशे प्राप्ते तं प्रबाध्य 'इन्द्रे चे'ति सूत्रं प्रवर्तते । गोशब्दस्य स्थानेऽवङादेशः स्याद् इन्द्रशब्दे परे इति सूत्रार्थः । तथा चात्र 'ङिच्चे'ति परिभाषासूत्रसहकारेण

---

४५. अनेकाल और शित् आदेश सम्पूर्ण के स्थान में होता है ।

४६. अनेकाल् भी ङित् अन्त्य को ही होता है ।

४७. पदान्त में एङन्त गो शब्द को अवङ् विकल्प से होता है अच् परे रहते ।

**४८. इन्द्रे च ६।१।१२४ ॥** गोरवङ् स्यादिन्द्रे । गवेन्द्रः ।

**४९. दूराद्धूते च ८।२।८४ ॥** दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा ।

**५०. प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५ ॥** एतेऽचि नित्यं प्रकृत्या स्युः । आगच्छ कृष्ण ३ अत्र गौश्चरति ।

**५१. ईदूदेद्द्विवचनं प्रगृह्यम् १।१।११ ॥** ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ।

---

ङकारेत्संज्ञकत्वाद् गकारोत्तरवर्तिन ओकारस्य स्थानेऽवङि ङकारस्येत्संज्ञायां लोपे च गव इन्द्र इति जाते 'आद्गुणः' इत्यनेन कण्ठतालुस्थानजन्ययोर्वकारोत्तरवर्त्यकारेकारयोः स्थाने कण्ठतालुस्थानजन्य एकारे गुणे कृते गवेन्द्र इति सिद्ध्यति ।

**आगच्छ कृष्ण अत्र गौश्चरतीति ।** आगच्छ कृष्ण–अत्र गौश्चरतीत्यवस्थायाम् 'अचोऽन्त्यादिटी'ति सूत्रेण णकारोत्तरवर्तिनः अकारस्य टिसंज्ञायां 'दूराद्धूते च' इति सूत्रप्रवृत्तिः । अत्र 'वाक्यस्यटेः प्लुत उदात्त' इत्यतो वाक्यस्य टेः प्लुत इत्यनुवर्तते । दूरात्सम्बोधनविषयकं यद्वाक्यं तद्घटकः एवं हूयमानार्थवाचकपदघटको यः टिः तदवयवो योऽच् स प्लुतो भवतीति सूत्रार्थः । तथा च णकारोत्तरवर्तिनः अकारस्य 'प्लुत प्लुतप्रगृह्या अचि नित्यमि'ति सूत्रं प्रवृत्तम् । अत्र प्रकृत्येत्यनुवर्तते । तेन प्लुताः प्रगृह्यसंज्ञकाश्चाचि परे नित्यं प्रकृत्या स्युरिति **सूत्रार्थः** । तथा चात्र अकारेऽचि परे प्लुतस्य णकारोत्तरवर्तिन अकारस्य प्रकृतिभावे आगच्छ कृष्ण ३ अत्र गौश्चरतीति यथास्थितमेव सिद्धम् ।

**हरी एताविति ।** हरी–एतावित्यवस्थायाम् 'इको यणची'ति यणि प्राप्ते 'ईदूदेद्द्विवचनं प्रगृह्यमि'ति **सूत्रं** प्रवर्तते । अत्र ईदूदेदंशे 'येन विधिस्तदन्तस्ये'ति **सूत्रेण** तदन्तविधिः । तथा च ईकारान्तम् ऊकारान्तम् एकारान्तं च यद् द्विवचनं तत्प्रगृह्यसंज्ञकम्भवतीति **सूत्रार्थः** । अत्र हि परादिवद्भावेन द्विवचनत्वस्य व्यपदेशि-

---

४८. गो शब्द को अवङ् होता है इन्द्र शब्द परे रहते ।

४९. दूर से सम्बोधन में जो वाक्य उसके टि को प्लुत होता है विकल्प से ।

५०. प्लुत और प्रगृह्य अच् परे रहते सदा प्रकृतिभाव होते हैं ।

५१. ईकारान्त ऊकारान्त एकारान्त जो द्विवचन वह प्रगृह्य संज्ञक होता है । हरी एतौ । ईदन्त द्विवचन कौन हरी रकार उत्तरवर्ती ईकार । ईकार में ईदन्तत्व व्यपदेशिवद्भावेन द्विवचनत्वपरादिवद्भावेन आता है । यहाँ ईदन्तद्विवचन कौन हरी यह कहना भूल है क्योंकि हरी द्विवचन संज्ञक नहीं है । आदिवर्ण कौन और उसके रहते एकादेशपरस्थानी औ तद्घटितसमुदाय व्यपदेशिवद्भावेन औ उसमें कौन धर्म था द्विवचनत्व वह ई में आगया ।

**५२. अदसो मात् १।१।१२ ॥** अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र ।

---

शिवद्भावेन च ईकारान्तत्वस्याश्रयणेन ईकारान्तं द्विवचनं रेफोत्तरवर्ती ईकारस्तस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति **सूत्रेण** प्रकृतिभावे हरी एताविति सिद्धम् ।

**विष्णू इमाविति** । विष्णू–इमावित्यत्र णकारोत्तरवर्तिन ऊकारस्य परादिवद्भावेन द्विवचनत्वस्य व्यपदेशिवद्भावेन ऊकारान्तत्वस्य च सत्त्वेन 'ईदूदेद्द्विवचनं प्रगृह्यमि'ति **सूत्रेण** प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति सूत्रेण प्रकृतिभावे विष्णू इमाविति सिद्धम् ।

**गङ्गे अमू इति** । गङ्गे–अमू इत्यवस्थायाम् गकारोत्तरवर्तिनि एकारे परादिवद्भावेन द्विवचनत्वस्य, व्यपदेशिवद्भावेन एकारान्तत्वस्य च सत्त्वेन 'ईदूदेद्द्विवचनं प्रगृह्यमि'ति **सूत्रेण** प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति **सूत्रेण** प्रकृतिभावे गङ्गे अमू इति साधु ।

**अमी ईशा इति**–अमी–ईशा इत्यत्र 'एतईद्बहुवचने' इति सूत्रेण कृतस्य मीभावस्य 'एचोयवायावः' इत्येतं प्रत्यसिद्धत्वादयादेशे प्राप्ते 'अदसोमादि'ति **सूत्रं** प्रवृत्तम् । अदस इति सम्बन्धसामान्ये षष्ठी । **अत्र सूत्रे** ईदूदिति प्रगृह्यमिति चानुवर्तते। मादिति पञ्चम्या परत्वलाभः । तथा च अदस्शब्दसम्बन्धिनो मकारात्परावीदूतौ प्रगृह्यसंज्ञौ स्त इति **सूत्रार्थः** । अस्मिन् **सूत्रे** एदिति तु नानुवर्तते, अदश्शब्दघटकमकारात्परस्य एकारस्यासम्भवात् । द्विवचनमित्यस्यापि नानुवृत्तिः, अदश्शब्दसम्बन्धिनो मकारात्परस्य ईकारस्य अमी इति बहुवचनत्वात् ऊकारस्य च द्विवचनान्तेष्वेव सत्त्वेन व्यावर्त्याभावात् । अमी–ईशा इत्यत्र मकारोत्तरवर्तिन ईकारस्य प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि नित्यमि'ति **सूत्रेण** प्रकृतिभावादयादेशाभावे अमी ईशा इति सिद्धम् ॥

**रामकृष्णावमू-आसाते इति** । रामकृष्णावमू-आसात इत्यत्र मूभावस्यासिद्ध-

---

५२. अदस्शब्दसम्बन्धी मकारसे परे जो ईकार और ऊकार वह प्रगृह्य संज्ञक होता है । अमी ईशाः । यहाँ एत ईद्बहुवचने सूत्र एचोऽयवायावः की दृष्टि में पूर्वत्रासिद्धं सूत्र के बल से असिद्ध है । इससे अमी को अदे जानकर अयादेश प्राप्त था प्रगृह्य संज्ञा होने से नहीं हुआ । रामकृष्णावमू आसाते में मू के असिद्ध होने से अदौ देख पड़ता है इससे यहाँ आवादेश प्राप्त था प्रगृह्य होने से प्रकृतिभाव हो गया । अमी ईशाः में अकः सर्वेण दीर्घः अमू आसते में इको यणचि नहीं प्राप्त है क्योंकि उसकी दृष्टि में मी तथा ल्मू असिद्ध है । इससे ईकार एवम् ऊकार नहीं है ।

**५३. चादयोऽसत्त्वे १।४।५७ ॥** अद्रव्यार्थाश्चादयो निपाताः स्युः ।

**५४. प्रादयः १।४।५८ ॥** एतेऽपि तथा ।

**५५. निपात एकाजनाङ् १।१।१४ ॥** एकोऽज् निपात आङ्वर्जः प्रगृह्यः स्यात् । इ इन्द्रः । उ उमेशः । 'वाक्यस्मरणयोरङित्' । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित् । आ ईषदुष्णम् ओष्णम् ।

---

त्वात् 'एचोयवायावः' इत्यनेन आवादेशे प्राप्ते 'अदसोमादि'तिसूत्रेण मकारोत्तरवर्त्तिन ऊकारस्य प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन आवादेशाभावे रामकृष्णावमू–आसाते इति सिद्धम् ।

**मात्किम्-अमुकेऽत्रेति**—'अव्ययसर्वनाम्नामकच् प्राक्टेरि'तिसूत्रेणाकच्प्रत्यये अदकश्शब्दाज्जसि त्यदाद्यत्वे पररूपे जसः श्यादेशे गुणे मुत्वे अमुके इतिरूपम् । 'अदसो मादि'ति सूत्रे माद्ग्रहणाभावे 'ईदूदेदि'त्यत एदित्यस्याप्यनुवृत्त्या अदश्शब्दात्परस्य एकारस्यापि प्रगृह्यसंज्ञाविधानाद् अमुके अत्र इत्यवस्थायां ककारोत्तरवर्तिन एकारस्य प्रगृह्यसंज्ञायां प्रकृतिभावेन अमुके अत्रेत्यनिष्टं प्रसज्येत । अतो माद्ग्रहणमावश्यकम् । कृते तु माद्ग्रहणे तत्सामर्थ्यान्न एदित्यस्यानुवृत्तिरिति न तत्र प्रगृह्यत्वेन प्रकृतिभावः । अपि तु 'एङः पदान्तादती'ति पररूपमिति तत्सिद्धम् ।

**इ इन्द्र इति** । इ-इन्द्र-इत्यत्र 'चादयोऽसत्त्वे,'**इतिसूत्रेण** पूर्वस्य इकारस्य निपातसंज्ञायां 'निपात एकाजनाङि'ति **सूत्रप्रवृत्तिः** । अत्र एकश्चासावच्चेति कर्मधारयसमासः, न तु एकोऽच् यस्मिन्निति बहुब्रीहिसमासः । तथासति प्रेदं व्याहरति मृग इत्यादौ प्रइत्यस्य वी इत्यस्य च प्रगृह्यसंज्ञायां प्रकृतिभावापत्तेः । तथा च एकोऽज्निपात आङ्भिन्नः प्रगृह्यसंज्ञकः स्यादिति **सूत्रार्थः** । **अत्र** इकारस्य एकाज्रूपनिपातत्वेन प्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावे तत्सिद्धिः ।

**उ उमेश इति** । उ–उमेश–इत्यत्र पूर्वस्य उकारस्य 'चादयोऽसत्त्वे' इतिनिपातसंज्ञायां 'निपात एकाजनाङि'ति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या' इति प्रकृतिभावे उ–उमेश इति साधु ।

**आ-एवं नु मन्यसे, आ एवं किल तदिति** । आ–एवं नु मन्यसे इत्यत्र, आ-

---

५३. अद्रव्यार्थ चादि निपात संज्ञक होते हैं ।

५४. अद्रव्यार्थक प्रादियों की भी निपात संज्ञा होती है । वस्तूपलक्षणमिति—जहाँ किसी वस्तु के परामर्श के लिए सर्वनाम का प्रयोग किया जाता है । विशेष्यत्वेन विवक्षित वह वस्तु द्रव्य कहलाती है ( लिङ्गसंख्याद्यन्वययोग्य द्रव्य होता है ) ।

५५. आङ् को छोड़कर एक अच् रूप निपात अगृह्य संज्ञक होता है । ( वा० वाक्य और स्मरण अर्थ में "आ" ङित् नहीं होता ) अन्यत्र ङित् होता है ।

**५६. ओत् १।१।१५ ॥** ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ।

**५७. संबुद्धौ शाकल्यस्येतावनार्षे १।१।१६ ॥** संवुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिक इतौ परे । विष्णो इति, विष्ण इति, विष्णविति ।

---

एवं किल तदित्यत्र च 'निपात एकाजनाङि'ति सूत्रं प्रवृत्तम् । अत्र सूत्रेऽनाङित्युक्त्या ङिद्भिन्न आकारः प्रगृह्यसंज्ञको भवति । वाक्यस्मरणयोरर्थयोराङ् अङिद्-अन्यत्र तु ङिद् भवति । तदुक्तम्भगवता भाष्यकारेण—

ईषदर्थे क्रियायोगे, मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥

अत्रोक्तस्थलद्वये वाक्यस्मरणयोरर्थयोः सद्भावेन आङोऽङित्त्वात्प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति सूत्रेण प्रकृतिभावे आ एवं नु मन्यसे इति, आ एवं किल तदिति च सिद्धम् ।

**ओष्णमिति** । आ–उष्णमित्यत्र ईषदर्थकस्याङो ङित्त्वेन 'निपात एकाजनाङि'-तिसूत्रेण प्रगृह्यत्वाभावे'आद्गुणः' इति सूत्रेण कण्ठोष्ठस्थानजन्यत्वेन सादृश्याद् आकारोकारयोः स्थाने ओकारे गुणे ओष्णमिति सिद्धम् ।

**अहो ईशा इति** । अहो–ईशा इत्यत्र 'एचोऽयवायावः' इति सूत्रेण अवादेशे प्राप्ते ओत् इति सूत्रं प्रवृत्तम् । अत्र 'निपात एकाजनाङि'ति सूत्रात् निपात इति पदमनुवर्तते तस्य विशेष्यत्वेन ओदंशे तदन्तविधिः । 'ईदूदेद्द्विवचनं प्रगृह्यमि'त्यनुवर्तते । तथा च ओकारान्तो निपातः प्रगृह्यसंज्ञकः स्यादिति सूत्रार्थः । अहो इत्यस्य ओदन्तनिपातत्वेन प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावे अहो ईशा इति सिद्धम् ।

**विष्णो इतीत्यादि** । विष्णो–इति इत्यवस्थायाम्'एचोऽयवायावः'इति सूत्रेण अवादेशे प्राप्ते, 'सम्बुद्धौ शाकल्यस्येतावनार्षे,' इति सूत्रं प्रवर्तते । अस्मिन् सूत्रे सम्बुद्धाविति निमित्तसप्तमी । तस्या ओदित्यनुवृत्तेनान्वयः । प्रगृह्यमित्यनुवर्तते तस्य पुंल्लिङ्गतया विपरिणामः । अनार्षे-इत्यस्य अवैदिके-इत्यर्थः । तथा च सम्बुद्धिनिमित्तक ओकारः प्रगृह्यसंज्ञको भवति अवैदिक इति शब्दे परे शाकल्याचार्य्यस्य मते इति सूत्रार्थः । अत्रावैदिक इति शब्दे परे णकारोत्तरवर्तिन ओकारस्य वैकल्पिकप्रगृह्यसंज्ञायाम् 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावे विष्णो-इतीति सिध्यति । प्रगृह्यसंज्ञाया अभावपक्षे-'एचोऽयवायावः' इत्यनेन णकारोत्तरस्य ओकारस्य अवादेशे

---

५६. ओदन्त निपात प्रगृह्य संज्ञक होता है ।

५७. सम्बुद्धि निमित्तक ओकार-विकल्प से प्रगृह्य संज्ञक होता है अवैदिक "इति" शब्द परे रहते ।

**५८. मय उञो वो वा ८।३।३३ ॥** मयः परस्य उञो वो वा अचि । किम्वुक्तम्, किमु उक्तम् ।

**५९. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७ ॥** पदान्ता इको ह्रस्वा वास्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसंधिः । चक्रि अत्र, चक्र्यत्र । पदान्ता इति किम् । गौर्यौ

---

'लोपः शाकल्यस्ये'त्यनेन वलोपे 'पूर्वत्रासिद्धमि'ति, **सूत्रेण** 'लोपः शाकल्यस्ये'त्यस्यासिद्धत्वाद् 'आद्गुणः' इति गुणाभावे विष्ण इतीति । वलोपाभावपक्षे विष्णवितीति प्रयोगत्रयं सिद्ध्यति ।

**केचित्तु**—शाकल्यमते प्रकृतिभावात् तन्मतेऽवादेशाप्रवृत्त्या 'लोपः शाकल्यस्ये'ति न वलोप इति रूपद्वयमेवेति वदन्ति ।

**किम्वुक्तमिति**—किमु–उक्तमित्यवस्थायाम् 'अकः सवर्णे दीर्घः' इति दीर्घे प्राप्ते तं बाधित्वा 'निपात एकाजनाङ्' इति, सूत्रेण मकारोत्तरवर्तिन उकारस्य प्रगृह्यसंज्ञया 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावे प्राप्ते 'मय उञो वो वे'ति **सूत्रं** प्रवृत्तम् । अत्र **सूत्रे** मय इति पञ्चम्यन्तं पदम् उञ इति षष्ठ्यन्तं पदम् । 'ङमो ह्रस्वादचिङमुण्नित्यम्'त्यत अचीत्यनुवर्तते । तथा च मय्प्रत्याहारान्तःपातिवर्णात्परस्य उञ उकारस्य वकारो वा स्यादचि परे इति**सूत्रार्थः** । अत्र मय्प्रत्याहारान्तःपातिनो मकारात्परस्य उञ उकारस्य उकारेऽचि परे वकारे किम्वुक्तमिति सिद्धम् । वकाराभावपक्षे 'निपात एकाजनाङि'त्यनेन मकारात्परस्योकारस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यमि'ति प्रकृतिभावेन दीर्घाद्यभावे किमु उक्तमिति यथास्थितमेव ।

**चक्रि अत्रेति**—चक्री–अत्रेत्यवस्थायाम् 'इको यणची'ति सूत्रेण रेफोत्तरस्य ईकारस्य स्थाने अकारे ऽचि परे यकारे यणि प्राप्ते 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चे'ति सूत्रप्रवृत्तिः । अत्र **एङःपदान्तादती'त्यतः** पदान्तादित्यनुवर्तते तस्य षष्ठ्यन्तत्वेन विपरिणामः । 'प्लुतप्रगृह्या अचि नित्यमि'त्यत अचीत्यनुवर्तते चकारात् 'प्रकृत्याऽन्तःपादमव्यपरे,' इत्यतः प्रकृत्या इत्यनुकृष्यते । तथा च पदान्तस्य इक्प्रत्याहारान्तःपातिनो वर्णस्य ह्रस्वसमुच्चितप्रकृतिभावो वा स्यादसवर्णेऽचि परे इतिसूत्रार्थः । अत्र रेफोत्तरवर्तिन ईकारस्य अकारेऽसवर्णेऽचि परे ह्रस्वसमुच्चित-

---

५८. मय से परे उञ् को वकार होता है विकल्प से अच् परे रहते ।

५९. पदान्त इक को ह्रस्व और प्रकृति भाव होता है असवर्ण अच् परे रहते । ह्रस्व विधान के कारण स्वर सन्धि ( यणादिक ) नहीं होते । वा० समास होनेपर ह्रस्वसमुच्चित प्रकृतिभाव नहीं होता ।

**६०. अचो रहाभ्यां द्वे ८।४।४६ ॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौय्यौं । ( न समासे ) वाप्यश्वः ।

**६१. ऋत्यकः ६।१।१२८ ॥** ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्म ऋषिः, ब्रह्मर्षिः । पदान्ताः किम् । आर्च्छत् ।

इत्यच्सन्धिः ।

---

प्रकृतिभावेन यणोऽभावे चक्रि अत्रेति साधु । ह्रस्वसमुच्चितप्रकृतिभावाभावपक्षे यणि चक्र्यत्रेति सिद्धम् ।

**पदान्ता इति किम् गौय्यौं इति ।** गौरी-औ इत्यत्र 'इको यणची'ति सूत्रेण रेफोत्तरस्य ईकारस्य यकारे यणि 'अचो रहाभ्यां द्वे,' इतिसूत्रं प्रवर्तते । अत्र 'यरोऽनुनासिकेऽनुनासिको वे'त्यतः यर इति वेति चानुवर्तते । तथा च अचः परौ यौ रेफहकारौ ताभ्यां परस्य यर्प्रत्याहारान्तःपातिनो वर्णस्य वा द्वित्वम्भवतीति सूत्रार्थः । अत्र गकारोत्तरवर्त्तिन औकाररूपाचः परो रेफः तस्मात्परो यर्प्रत्याहारान्तःपाती वर्णो यकारस्तस्य वैकल्पिके द्वित्वे-गौय्यौं-गौर्यौं-इतिप्रयोगद्वयं सिद्धम् । 'इको ऽसवर्णे शाकल्यस्य ह्रस्वश्चे'ति सूत्रे 'एङः पदान्तादती'त्यतः पदान्तादित्यस्य सम्बन्धाभावे गौरी-औ इत्यत्र वैकल्पिकह्रस्वसमुच्चितप्रकृतिभावे गौरि औ-इति । पक्षे यणि वैकल्पिकद्वित्वे च कृते गौय्यौं, गौर्यौं-इति प्रयोगत्रयापत्तिः स्यात्सा चानिष्टेति तत्सम्बन्ध आवश्यकः । कृते तु तस्मिन् रेफोत्तरस्य ईकारस्य पदान्तत्वाभावेन न ह्रस्वसमुच्चितप्रकृतिभाव इति सर्वं सूपपन्नम् ।

**वाप्यश्व इति ।** वाप्यामश्व इति विग्रहे सप्तमीसमासे वापी-अश्व इति स्थिते 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चे'ति सूत्रे पकारोत्तरवर्तिन ईकारस्य ह्रस्वसमुच्चितप्रकृतिभावे प्राप्ते 'न समासे' इतिवार्तिकं प्रवर्तते । पदान्तस्येकोऽसवर्णेऽचि परे ह्रस्वसमुच्चितप्रकृतिभावो न स्यात्समासे इति हि वार्तिकार्थः । तथा चात्र पकारोत्तरस्य ईकारस्य ह्रस्वसमुच्चितप्रकृतिभावाभावेन 'इको यणचीति' सूत्रेण यकारे यणि वाप्यश्व इति सिद्धम् ।

**ब्रह्म ऋषिरिति ।** ब्रह्मा, ऋषिरित्यवस्थायाम् 'आद्गुणः' इति गुणे प्राप्ते 'ऋत्यक.' इति सूत्रं प्रवृत्तम् । अत्र 'एङः पदान्तादती'त्यतः पदान्तादित्यनुवर्तते तस्य षष्ठ्यन्तत्वेन विपरिणामः । इकोऽसवर्ण इत्यतः शाकल्यस्य ह्रस्वश्चेत्यनुवर्तते । तथा च पदान्तस्य अको ह्रस्वे ऋकारे परे ह्रस्वसमुच्चितप्रकृतिभावो वा स्यादिति

---

६०. अच् से परे जो रेफ और हकार उससे परे यर को विकल्प से द्वित्व होता है।

६१. ह्रस्व ऋकार परे रहते पदान्त अक् को विकल्प से ह्रस्व होता है।

## अथ हल्सन्धिप्रकरणम्

**६२. स्तोः श्चुना श्चुः ८।४।४० ॥** सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ।

---

हि सूत्रार्थः । अत्र मकारोत्तरवर्तिन आकारस्य ऋकारे परे ह्रस्वसमुच्चितप्रकृतिभावेन गुणाद्यभावे ब्रह्म ऋषिरिति सिद्धम् । प्रकृतिभावाभावपक्षे 'आद्गुणः' इति गुणे 'उरण् रपरः' इति रपरत्वे ब्रह्मर्षिरिति सिद्ध्यति ।

**आर्च्छदिति ।** 'ऋत्यकः' इति सूत्रे पदान्तसम्बन्धाभावे आ-ऋच्छदित्यवस्थायाम् आकारस्य वैकल्पिकह्रस्वसमुच्चितप्रकृतिभावेन अ-ऋच्छदिति-आर्च्छदिति चानिष्टप्रयोगद्वयापत्तिः स्यादतस्तत्सम्बन्ध आवश्यकः । कृते तु तस्मिन् आकारस्य पदान्तत्वाभावेन ह्रस्वसमुच्चितप्रकृतिभावाभावे 'आटश्च' इति वृद्धौ रपरत्वे च कृते आर्च्छदिति सिध्यति ।

इत्यच्सन्धिप्रकरणम् ।

रामस्-शेते इत्यत्र 'स्तोः श्चुना श्चुः' इति सूत्रं प्रवर्तते । स् च तुश्चेति समाहारद्वन्द्वः, पुंस्त्वं सौत्रम् । इतरेतरयोगद्वन्द्वो वा, अत्र पक्षे सौत्रमेकवचनम् । योगे इत्यस्याध्याहारः । तथा च सकारतवर्गयोः स्थाने शकारचवर्गाभ्यां योगे शकारचवर्गौ भवत इति सूत्रार्थः । यथासंख्यसूत्रप्रवृत्त्या सकारस्य शकारः, तवर्गस्य चवर्गः । तत्रापि त थ द ध न एषां क्रमेण च छ ज झ ञ एते भवन्ति । शकारचवर्गाभ्यां योगांशे तु न यथासंख्यम् तथासति-सकारस्य शकारयोगे शकारः तवर्गस्य चवर्गयोगे चवर्ग इत्यर्थकरणेन रामश्चिनोतीत्याद्यसिद्ध्यापत्तेः 'शात्' इति सूत्रवैयर्थ्यापत्तेश्च । रामस्-शेते इत्यत्र हि शकारेण योगात् सकारस्य शकारे रामश्शेते इति साधु ।

**रामश्चिनोतीति**—रामस्-चिनोतीत्यत्र 'स्तोः श्चुनाश्चुः' इति सूत्रेण चवर्गयोगात् सकारे रामश्चिनोतीति सिद्धम् ।

**सच्चिदिति**—सत्-चिदिति स्थिते 'स्तोः श्चुना श्चुरि'त्यस्य परत्रिपादीस्थत्वेनासिद्धत्वात् 'झलां जशोऽन्ते' इत्यनेन जश्त्वेन तकारस्य दकारे दकारस्य चवर्गयोगात् 'स्तोः श्चुना श्चुः' इतिसूत्रेण श्चुत्वे जकारे जकारस्य 'खरि च'ेति चर्त्वेन चकारे कृते सच्चिदिति सिद्धम् ।

**शार्ङ्गिञ्जयेति ।** शार्ङ्गिन्-जय इत्यवस्थायां 'स्तोः श्चुना श्चुः' इति सूत्रेण जकाररूपचवर्गयोगात् नकारस्य श्चुत्वेन ञकारे शार्ङ्गिञ्जयेति सिद्धम् ।

---

६२. सकार और तवर्ग के स्थान में शकार अथवा चवर्ग के योग में शकार और चवर्ग होते हैं । इसे श्चुत्व कहते हैं ।

**६३. शात् ८।४।४४ ॥** शात्परस्य तवर्गस्य चुत्वं न स्यात् । विश्नः । प्रश्नः ।

**६४. ष्टुना ष्टुः ८।४।४१ ॥** स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ।

---

**विश्न इति** । विश् न इत्यत्र 'स्तोः श्चुना श्चुः' इति सूत्रेण शकारयोगात् नकारस्य श्चुत्वेन ञकारे प्राप्ते 'शात्' इति सूत्रं प्रवर्तते । अत्र 'न पदान्ताट्टोर-नामि'त्यतो न इत्यनुवर्तते । 'स्तोः श्चुरित्यतः तोरिति चुरिति चानुवर्तते । ततश्च शकारात्परस्य तवर्गस्य स्थाने चवर्गो न भवतीति तत्सूत्रार्थः । तेनात्र नकारस्य चुत्वनिषेधे ञकारो न इति विश्न इति सिद्धम् ।

**प्रश्न इति** । प्रश्–न इत्यत्र शकारयोगात् नकारस्य, स्तोः श्चुनो श्चुः' इति सूत्रेण श्चुत्वेन ञकारे प्राप्ते 'शात्' इति सूत्रेण तन्निषेधे प्रश्न इति सिद्धम् ।

**रामष्षष्ठ इति** । रामस्–षष्ठ इत्यवस्थायां 'ष्टुना ष्टुः' इति सूत्रं प्रवर्तते । ष् च टुश्चेति द्वन्द्वः । स्तोरित्यनुवर्त्तते । तथा च सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ भवत इति सूत्रार्थः । अत्रापि स्थान्यादेशानां यथासंख्यं भवति । तेन सकारस्य षकारः तवर्गस्य टवर्गः । तत्रापि त थ द ध न एषां क्रमेण ट ठ ड ढ ण एते भवन्ति । षकारटवर्गयोगांशे तु न यथासंख्यम् रामष्टीकते इत्याद्य-सिद्धयापत्तेः । अत्र षकारयोगात् सकारस्य ष्टुत्वेन षकारे रामष्षष्ठ इति सिद्धम् ।

**रामष्टीकते इति** । रामस्–टीकत इत्यवस्थायां 'ष्टुना ष्टुः' इत्यनेन टवर्ग-योगात् सकारस्य षकारे रामष्टीकते इति साधु ।

**पेष्टेति** । पेष्–ता इत्यवस्थायां 'ष्टुना ष्टुः' इति सूत्रेण षकारयोगात् तकारस्य ष्टुत्वेन टकारे पेष्टेति सिद्धम् ।

**तट्टीकेति** । तद्-टीकेति स्थिते 'ष्टुना ष्टुः' इति सूत्रेण टवर्गयोगात् दकारस्य ष्टुत्वेन डकारे तस्य 'खरि चे'ति चर्त्वेन टकारे तट्टीकेति सिद्धम् ।

**चक्रिण्ढौकसे इति** । चक्रिन्–ढौकसे–इत्यत्र 'ष्टुना ष्टुः' इतिसूत्रेण टवर्गयोगात् नकारस्य ष्टुत्वेन णकारे चक्रिण्ढौकसे इति सिद्धम् ।

**षट्-सन्त इति** । षट्–सन्त इत्यवस्थायां 'ष्टुना ष्टुः' इतिसूत्रेण टवर्गयोगात्स-कारस्य ष्टुत्वेन षकारे प्राप्ते 'न पदान्ताट्टोरनाम्' इति सूत्रं प्रवर्तते । अत्र स्तोरिति ष्टुरिति चानुवर्तते । तथा च पदान्ताट्टवर्गा त्परस्य सकारस्य नामवयवभिन्नस्य तवर्गस्य

---

६३. शकार परे तवर्ग के योग में श्चुत्व नहीं होता है ।

६४. सकार और तवर्ग के स्थान में षकार और टवर्ग के योग में षकार और टवर्ग होते हैं । इसे ष्टुत्व कहते हैं ।

**६५. न पदान्ताट्टोरनाम् ८।४।४२ ॥** पदान्ताट्टवर्गात्परस्यानाम: स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् । ( अनाम्नवतिनगरीणामिति वाच्यम् ) षण्णाम् । षण्णवतिः । षण्णगर्य्यः ।

---

च ष्टुत्वं न स्यादिति सूत्रार्थः । अत्र टकारात्परस्य ष्टुत्वनिषेधेन षत्वाभावे षट् सन्त इति सिद्धम् ।

**षट्-ते इति** । षट्—ते इत्यत्र 'ष्टुना ष्टुः' इति सूत्रेण टवर्गयोगात् तकारस्य ष्टुत्वेन टकारे प्राप्ते 'न पदान्ताट्टोरनाम्' इतिसूत्रेण ष्टुत्वनिषेधे षट् ते इति सिद्धम् ।

**ईट्टे-इति** । ईड्—ते इत्यत्र 'ष्टुना ष्टुरि'ति सूत्रेण टवर्गयोगात् तकारस्य ष्टुत्वेन टकारे 'खरि चे'ति चर्त्वेन डकारस्य टकारे ईट्टे-इति सिद्धयति । 'न पदान्ताट्टोरनाम्' इति सूत्रे पदान्तादित्यस्याभावे ईट्टे-इत्यत्र टकारात्परस्य तकारस्य ष्टुत्वनिषेधेन ईट् ते इत्यनिष्टप्रयोगापत्तिः स्यादतस्तदावश्यकम् । सति तु तस्मिन् टकारस्य पदान्तत्वाभावेन तस्मात्परस्य तकारस्य ष्टुत्वनिषेधो न भवतीति सर्वं सूपपन्नम् ।

**सर्पिष्टममिति** । सर्पिष्—तममिति स्थिते 'ष्टुना ष्टुः' इति सूत्रेण षकारयोगात्तकारस्य ष्टुत्वेन टकारे सर्पिष्टममिति सिद्ध्यति । 'न पदान्ताट्टोरनाम्' इति सूत्रे टोर्ग्रहणाभावे सर्पिष् तममित्यवस्थायां षकारात्परस्य तकारस्य ष्टुत्वनिषेधः स्यादतस्तदावश्यकम् । कृते तु टोर्ग्रहणे पदान्तटवर्गस्याभावेन षकारात्परस्य तकारस्य ष्टुत्वम्भवत्येवेति दिक् ।

**षण्णामिति** । षष्—नामिति स्थिते 'झलां जशोऽन्ते' इति षकारस्य जश्त्वेन डकारे—'ष्टुना ष्टुः' इति सूत्रेण षकारयोगाद् नकारस्य ष्टुत्वेन णकारे 'प्रत्यये भाषायां नित्यम्' इति वार्तिकं प्रवर्तते । यरः पदान्तस्यानुनासिके प्रत्यये परे नित्यमनुनासिकः स्यादिति हि वार्तिकार्थः । अत्र अनुनासिके णाम्प्रत्यये परे पदान्तस्य यरो डकारस्य मूर्धस्थानजन्यत्वसादृश्यादनुनासिके णकारे षण्णामिति सिद्धम् । न पदान्तादिति ष्टुत्वनिषेधस्तु न अनामिति पर्युदासादिति दिक् ।

**षण्णवतिरिति** । षड्—नवतिरितिदशायां 'ष्टुना ष्टुः' इति सूत्रेण प्राप्तस्य ष्टुत्वस्य 'न पदान्ताट्टोरनामि'ति निषेधे प्राप्ते 'अनाम्नवतिनगरीणामिति वाच्यम्' इति वार्तिकप्रवृत्तिः । पदान्ताट्टवर्गात्परस्य नाम् नवति नगरी एतदवयवभिन्नस्य तवर्गस्य ष्टुत्वं न भवतीति वार्तिकार्थः । नाम् नवति नगरी एतदवयवस्य तवर्गस्य

---

६५. सकार तवर्ग के स्थान में पदान्त टवर्ग से परे सकार और नाम ( नवति नगरी ) भिन्न तवर्ग को ष्टुत्व ( षकार-टवर्ग ) नहीं होता है ।

**६६. तोः षि ८।४।४३ ॥** तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः ।

**६७. झलां जशोऽन्ते ८।२।३९ ॥** पदान्ते झलां जशः स्युः । वागीशः ।

**६८. यरोऽनुनासिकेऽनुनासिको वा ८।४।४५ ॥** यरः पदान्तस्यानुनासिके

---

तु ष्टुत्वं भवत्येवेति फलितम् । तथा च अत्र डकारयोगात् नकारस्य ष्टुत्वे णकारे 'यरोऽनुनासिके ऽनुनासिको वा' इति डकारस्यानुनासिके णकारे कृते षण्णवतिरिति सिद्धम् ।

**षण्णगर्य्य इति** । षड्–नगर्य्य इत्यत्र 'अनाम्नवतिनगरणिामिति वाच्यम्' इति वार्तिकबलाद् 'न पदान्ताट्टोरनाम्' इति ष्टुत्वनिषेधाप्रवृत्त्या 'ष्टुना ष्टुः' इति सूत्रेण डकारयोगाद् नकारस्य ष्टुत्वे णकारे 'यरोऽनुनासिकेऽनुनासिको वा' इति डकारस्यानुनासिके णकारे षण्णगर्य इति सिद्धम् ।

**सन् षष्ठ इति** । सन्–षष्ठ इतिदशायां 'ष्टुना ष्टुः' इति सूत्रेण षकारयोगाद् नकारस्य ष्टुत्वेन णकारे प्राप्ते 'तोः षि' इति सूत्रं प्रवृत्तम् । अत्र 'ष्टुना ष्टुरि'त्यतः ष्टुरिति 'न पदान्ताट्टोरनामि'त्यतो नेति चानुवर्तते । तथा च तवर्गस्य षकारे परे ष्टुत्वं न भवतीति सूत्रार्थः । अत्र षष्ठ इत्यस्य षकारे परे नकारस्य ष्टुत्वनिषेधे सन् षष्ठ इति साधु ।

**वागीश इति** । वाक्–ईश इत्यत्र 'झलां जशोऽन्ते' इति सूत्रप्रवृत्तिः । अत्र पदस्येत्यधिक्रियते । पदान्ते झल्प्रत्याहारान्तःपातिवर्णानां स्थाने जश्प्रत्याहारान्तःपातिनो वर्णाः स्युरिति तत्सूत्रार्थः । अत्र झल्प्रत्याहारान्तःपातिनः ककारस्य स्थाने कण्ठस्थानजन्यत्वसादृश्येन गकारे जशि कृते वागीश इति सिद्ध्यति ।

**एतन्मुरारिरिति** । एतद्–मुरारिरित्यवस्थायां 'यरोऽनुनासिके ऽनुनासिको वा' इति सूत्रं प्रवृत्तम् । अत्र 'न पदान्ताट्टोरनाम्' इत्यतः पदान्तादित्यनुवर्तते तस्य षष्ठ्यन्ततया विपरिणामः । तथा च यर्प्रत्याहारान्तःपातिनः पदान्तस्य वर्णस्य स्थाने अनुनासिके परेऽनुनासिको वा स्यादिति सूत्रार्थः । अत्र मकारेऽनुनासिके परे यर्प्रत्याहारान्तःपातिनो दकारस्य स्थाने दन्तस्थानजन्यत्वसादृश्यादनुनासिके नकारे एतन्मुरारिरिति सिद्ध्यति । अनुनासिकाभावपक्षे एतद् मुरारिरित्येवेति दिक् ।

---

६६. तवर्ग को षकार परे ष्टुत्व नहीं होता है ।

६७. पद के अन्त में स्थित झल् के स्थान में जश् होते हैं ।

६८. पदान्त यर को अनुनासिक वर्ण परे रहते उसी वर्ग का अनुनासिक वर्ण आदेश विकल्प से होता है । वा० यदि अनुनासिकवर्ण प्रत्ययका हो तो नित्य अनुनासिक होता है लोक में ।

परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद् मुरारिः । ( प्रत्यये भाषायां नित्यम् ) तन्मात्रम् । चिन्मयम् ।

**६९. तोर्लि ८।४।६०** ॥ तवर्गस्य लकारे परे परसवर्णः । तल्लयः । विद्वाल्ँलिखति । नस्यानुनासिको लः ।

**७०. उदः स्थास्तम्भोः पूर्वस्य ८।४।६१** ॥ उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ।

**७१. तस्मादित्युत्तरस्य १।१।६७** ॥ पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ।

---

**तन्मात्रमिति** । तत् प्रमाणं यस्येति विग्रहे तद्शब्दात् 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इतिसूत्रेण मात्रच्प्रत्यये तद्–मात्रमित्यवस्थायां 'यरो ऽनुनासिके ऽनुनासिको वा' इतिसूत्रेण मकारेऽनुनासिके परे दकारस्य यरो दन्तस्थानजन्यत्वसादृश्याद् वैकल्पिकेऽनुनासिके नकारे प्राप्ते 'प्रत्यये भाषायां नित्यम्' इति वार्तिकेन मात्रचि परे दकारस्य नित्यमनुनासिके नकारे तन्मात्रमिति सिद्धम् ।

**चिन्मयमिति** । चिदेवेति विग्रहे 'नित्यं वृद्धशरादिभ्यः' इत्यत्र नित्यमिति योगविभागात् स्वार्थे मयट्प्रत्यये कृते चिद्–मयमित्यत्र 'यरोऽनुनासिकेऽनुनासिको वा' इति मकारे परे दकारस्य स्थाने दन्तस्थानजन्यत्वसादृश्यादनुनासिके वैकल्पिके नकारे प्राप्ते 'प्रत्यये भाषायां नित्यम्' इति वार्तिकेन मयटि प्रत्यये परे दकारस्य नित्यमनुनासिके नकारे चिन्मयमिति सिद्धम् ।

**तल्लय इति** । तद्–लय इत्यवस्थायां 'तोर्लि' इलि सूत्रं प्रवर्त्तते । अत्र 'अनुस्वारस्य ययि परसवर्ण,' इति सूत्रात्परसवर्ण इत्यनुवर्तते । तथा च तवर्गस्य स्थाने लकारे परे परसवर्णः स्यादिति सूत्रार्थः । अत्र लय इत्यस्य लकारे परे दकारस्य स्थाने परसवर्णे लकारे तल्लय इति सिद्धम् ।

**विद्वाल्ँलिखतीति** । विद्वान्–लिखतीत्यत्र 'तोर्लि' इति सूत्रेण लिखतीत्यस्य लकारे परे अनुनासिकस्य नकारस्य स्थाने अनुनासिके लकारे परसवर्णे कृते विद्वाल्ँलिखतीति सिद्धम् ।

---

६९. तवर्ग के स्थान में लकार परे रहते परसवर्ण होता है ।

७०. उद् उपसर्ग से परे स्था और स्तम्भ के स्थान में पूर्व का सवर्ण आदेश होता है ।

७१. पञ्चम्यन्त पद के निर्देश से किया जाने वाला कार्य वर्णान्तर से अव्यवहित परके स्थान में होता है ।

**७२. आदेः परस्य १।१।५४ ॥** परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ।

**७३. झरो झरि सवर्णे ८।४।६४ ॥** हलः परस्य झरो वा लोपः सवर्णे झरि ।

---

उत्थानमिति । उद्–स्थानम् इत्यवस्थायाम्, 'उदः स्थास्तम्भोःपूर्वस्य' इतिसूत्रं प्रवृत्तम् । अत्र 'क्वचिदेकदेशोऽप्यनुवर्तत' इति परिभाषया 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रात्समस्तमपि सवर्णपदमनुवर्तते । तथा च 'उदः स्थास्तम्भोः पूर्वसवर्णः' स्यादि'ति सूत्रार्थः । उद इति दिग्योगलक्षणा पञ्चमी तत्र पूर्वयोरित्य-ध्याहारेण उदः पूर्वयोः स्थास्तम्भोः पूर्वसवर्ण आहोस्विद् परयोरित्यस्याध्याहारेण उदः परयोः स्थास्तम्भोः पूर्वसवर्ण इत्याशङ्कायां 'तस्मादित्युत्तरस्य' इति परि-भाषासूत्रं प्रवर्त्तते । अत्र 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति सूत्राद् निर्दिष्टे इत्यनुवर्तते । तथा च पञ्चम्यन्तनिर्देशेन क्रियमाणं कार्यमन्यवर्णव्यवधानशून्यस्य परस्य स्थाने भवतीति सूत्रार्थः । अत्र उद इति निर्देशेन क्रियमाणं कार्यं पूर्वसवर्णरूपं तच्चान्यवर्ण-व्यवधानशून्यस्य परस्य स्था इत्यस्य प्राप्नोति । ततश्च 'अलोऽन्त्यस्य' इति परिभाषया थकारोत्तरवर्तिन आकारस्य पूर्वसवर्णे प्राप्ते, 'आदेः परस्य' इति, परिभाषा प्रवर्तते । परस्य स्थाने यत्कार्यं विहितं तत्परस्यादेर्भवतीति सूत्रार्थः । अत्र स्था इत्यस्य विहितं यत्पूर्वसवर्णरूपं कार्यं तत्स्था इत्यस्यादेः सकारस्य स्यात् । अत्र सकारस्य पूर्वं दकारः तत्सवर्णास्तु त थ द ध न एते पञ्चापि वर्णास्तेषाम्मध्ये कः स्यादितिशङ्कायाम् 'स्थाने ऽन्तरतमः' इतिपरिभाषया अघोषमहाप्राणप्रयत्नवतः सकारस्य स्थाने अघोषमहाप्राणप्रयत्नवति थकारे पूर्वसवर्णे कृते उद थ् थानमिति जाते 'झरो झरि सवर्णे' इति सूत्रं प्रवृत्तम् । अत्र हि 'हलो यमां यमि लोपः' इत्यतो हल इति लोप इति चानुवर्तते । 'झयो हो ऽन्यतरस्याम्' इत्यतोऽन्यतरस्यामिति चानुवर्तते । ततश्च हल्प्रत्याहारान्तःपातिवर्णात्परस्य झर्प्रत्याहारान्तःपातिनो वर्णस्य लोपो वा स्यात्सवर्णे झर्प्रत्याहारान्तःपातिनि वर्णे परे सति इति सूत्रार्थः । अत्र थानमित्यस्य थकारे झरि परे दकाराद् हलः परस्य थकारस्य झरो वैकल्पिके लोपे, 'खरि च' इति सूत्रं प्रवृत्तम् । अत्र 'झलां जश् झशी'त्यतो झलामिति 'अभ्यासे चर्चे'त्यतश्चरिति चानुवर्तते । ततश्च झल्प्रत्याहारान्तःपातिवर्णस्य स्थाने चर्प्रत्याहारान्तःपातिवर्णः स्यात् खर्प्रत्याहारान्तःपातिवर्णे परे सति इति सूत्रार्थः ।

---

७२. जो कार्य पर के स्थान में कहा गया है वह पर समुदाय के आदि वर्ण के स्थान में होता है ।

७३. सवर्ण झर परे रहते हल से परे झर् का विकल्पसे लोप होता है ।

**७४. खरि च ८।४।५५ ॥** खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ।

**७५. झयो होऽन्यतरस्याम् ८।४।६२ ॥** झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः, वाग्हरिः ।

**७६. शश्छोऽटि ८।४।६३ ॥** झयः परस्य शस्य छो वाऽटि । तद् शिव

---

अत्र थकारे खरि परे दकारस्य झलस्तकारे चरि कृते उत्थानमिति सिद्ध्यति । थलोपाभावपक्षे उत्थ्थानमिति सिद्ध्यति । अत्र 'खरि चे'ति थकारस्य चर्त्वन्तु न शङ्कयम् चर्त्वं प्रति थत्वस्यासिद्धत्वादिति दिक् ।

**उत्तम्भनमिति** । उद्–स्तम्भनमितिदशायाम् 'तस्मादित्युत्तरस्य' इति परिभाषाबलाद् 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रेण उदः परस्य स्तम्भ इत्यस्य पूर्वसवर्णे 'अलोऽन्त्यस्य' इति सूत्रेणान्त्यस्य प्राप्ते 'आदेः परस्य' इतिपरिभाषया अघोषमहाप्राणप्रयत्नवतः सकारस्यान्तरतम्यादघोषमहाप्राणप्रयत्नवति थकारे पूर्वसवर्णे 'झरो झरि सवर्णे' इत्यनेन दकाराद्धलः परस्य थकारस्य झरः थकारे सवर्णे झरि परे वैकल्पिके लोपे 'खरि चे'त्यनेन थकारे खरि परे दकारस्य झलश्चर्त्वे तकारे कृते उत्तम्भनमिति सिद्धम् । थलोपाभावपक्षे तु उत्थ्तम्भनमिति भवति । थस्य चर्त्वन्तु न चर्त्वं प्रति थत्वस्यासिद्धत्वादिति दिक् ।

**वाग्घरिरिति** । वाक्–हरिरितिदशायां 'झलां जशोऽन्ते' इति सूत्रेण ककारस्य जश्त्वेन गकारे कृते 'झयो हो ऽन्यतरस्यामिति' सूत्रं प्रवर्तते । अत्र झय् इति पञ्चम्यन्तं पदम् ह इति षष्ठ्यन्तम् । 'उदः स्थास्तम्भोः पूर्वस्ये'ति'अनुस्वारस्य ययी'त्यतः सवर्ण इति चानुवर्तते । ततश्च झय्प्रत्याहारस्थवर्णात्परस्य हकारस्य पूर्वसवर्णो वा भवतीति सूत्रार्थः । अत्र हकारात्पूर्वो गकारः झय्प्रत्याहारस्थो वर्णस्तत्सवर्णाः क ख ग घ ङ एते पञ्चापि वर्णाः प्राप्तास्तेषाम्मध्ये कः स्यादिति शङ्कायां नादघोषसंवारमहाप्राणप्रयत्नसादृश्याद् हकारस्य पूर्वसवर्णे घकारे वाग्घरिरिति सिद्ध्यति । पूर्वसवर्णाभावपक्षे तु वाग्हरिरित्येवेति दिक् ।

---

७४. झल् के स्थानमें खर परे रहते चर् आदेश होता है । इसे चर्त्व कहा जाता है ।

७५. पदान्तझय् से परे हकार के स्थानमें विकल्पसे पूर्वसवर्ण होता है ।

७६. पदान्त झय से परे शकार के स्थान में छकार होता है यदि शकार से परे अट् हो । वा० यहाँ अट् के स्थान पर अम् पढ़ना चाहिए ।

इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः, तच्शिवः । ( छत्वममीति वाच्यम् ) । तच्छ्लोकेन ।

**७७. मोऽनुस्वारः ८।३।२३ ॥** मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ।

**७८. नश्चापदान्तस्य झलि ८।३।२४ ॥** नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । झलि किम् । मन्यते ।

---

**तच्छिव इति** : तद्–शिव इत्यवस्थायां 'स्तोः श्चुना श्चुः' इत्यनेन शकारयोगात् दकारस्य श्चुत्वेन जकारे तस्य 'खरि च'इति चर्त्वेन चकारे कृते 'शश्छोऽटि' इतिसूत्रप्रवृत्तिः । अत्र झय इति पदान्तादिति चानुवर्तते । ततश्च पदान्ताज्झय्प्रत्याहारान्तःपातिवर्णात्परस्य शकारस्य स्थाने अट्प्रत्याहारान्तःपातिनि वर्णे परे छकारो वा भवतीति सूत्रार्थः । अत्र शकारोत्तरवर्तिनि इकारेऽटि परे चकाररूपाज्झयः परस्य शकारस्य स्थाने वैकल्पिके छकारे कृते तच्छिव इति सिद्धम् । छत्वाभावपक्षे तु तच्शिव इत्येवेति दिक् ।

**तच्छ्लोकेनेति** । तद्–श्लोकेन इति दशायां 'स्तोःश्चुना श्चुः' इति सूत्रेण शकारयोगाद् दकारस्य श्चुत्वेन जकारे कृते 'खरि च'त्यनेन शकारे खरि परे जकारस्य झलः चर्त्वेन चकारे कृते अट्परत्वाभावेन 'शश्छोऽटि' इति शकारस्य छत्वाप्रवृत्त्या 'छत्वममीति वाच्यम्' इति वार्तिकप्रवृत्तिः । पदान्ताज्झयः परस्य शकारस्य छकारः स्याद् अमि परे इति हि वार्तिकस्यार्थः । ततश्च लकारेऽमि परे चकाराज्झयः परस्य शकारस्य स्थाने छकारे कृते तच्छ्लोकेनेति सिद्धम् ।

**हरिं वन्दे इति** । हरिम्–वन्दे इत्यत्र 'मोऽनुस्वारः' इति सूत्रं प्रवर्तते । अत्र 'हलि सर्वेषामि'त्यतो हलीत्यनुवर्तते । 'पदस्ये'त्यधिक्रियते । म इति षष्ठ्यन्तं पदस्येत्यस्य विशेषणम् । ततश्च मकारांशे 'येनविधिस्तदन्तस्ये'त्यनेन तदन्तविधिः । तथा च मान्तस्य पदस्यानुस्वारः स्याद्धलि परे इति सूत्रार्थः । अत्र वकारे हलि परे हरिमिति मान्तपदस्यानुस्वारप्राप्तावलोऽन्त्यस्येतिपरिभाषयाऽन्त्यस्य मकारस्यानुस्वारे कृते हरिं वन्दे इति सिद्धम् ।

**यशांसि इति** । यशान्–सि इत्यवस्थायां 'नश्चापदान्तस्य झलि' इति सूत्रं प्रवर्तते । अत्र 'मोऽनुस्वारः' इत्यतोऽनुस्वार इत्यस्य चकराद् म इत्यस्य चानुवृत्तिः । तथा च नकारस्य मकारस्य चापदान्तस्य झलि परे ऽनुस्वारः स्यादिति सूत्रार्थः । अत्र सकारे झलि परे अपदान्तस्य नकारस्यानुस्वारे कृते यशांसीति सिद्धम् ।

---

७७. पदान्त मकार के स्थानमें अनुस्वार आदेश होता है हल् परे रहते ।

७८. अपदान्त नकार और मकार के स्थानमें अनुस्वार आदेश होता है झल् परे रहते ।

**७९. अनुस्वारस्य ययि परसवर्णः ८।४।५८ ॥** स्पष्टम् । शान्तः ।

**८०. वा पदान्तस्य ८।४।५९ ॥** त्वङ्करोषि, त्वं करोषि ।

**८१. मो राजि समः क्वौ ८।४।२५ ॥** क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ।

---

**आक्रंस्यत इति** । आक्रम्—स्यत इति दशायां 'नश्चापदान्तस्य झलि' इति सूत्रेण सकारे झलि परेऽपदान्तस्य मकारस्यानुस्वारे आक्रंस्यते इति सिद्धम् ।

**मन्यत इति** । 'नश्चापदान्तस्य झलि' इति सूत्रे झलि ग्रहणाभावे मन्यत इत्यत्रापि नकारस्यापदान्तत्वेनानुस्वारः स्यात् ततश्च मंयत इत्यनिष्टप्रयोगः स्यादतो झलिग्रहणमावश्यकम् । कृते तु झलि ग्रहणे यकारस्य झल्प्रत्याहारान्तर्गतत्वाभावेन मन्यत इत्यत्र नानुस्वार इति सर्वं सूपपन्नम् ।

**शान्त इति** । शाम्—त इत्यत्र 'नश्चापदान्तस्य झलि' इति सूत्रेण तकारे झलि परेऽपदान्तमकारस्यानुस्वारे कृते 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रं प्रवृत्तम् । अनुस्वारस्य स्थाने परसवर्णः स्याद् यय्प्रत्याहारान्तःपातिनि वर्णे परे सतीति सूत्रार्थः । अत्र तकारे ययि परेऽनुस्वारस्य स्थाने नासिकास्थानजन्यत्वसादृश्यात् तकारसवर्णे नकारे कृते शान्त इति सिद्ध्यति ।

**त्वङ्करोषीति** । त्वम्—करोषि इत्यत्र 'मोऽनुस्वारः' इति सूत्रेण ककारे हलि परे पदान्तमकारस्यानुस्वारे 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रम्प्रबाध्य 'वा पदान्तस्य' इति सूत्रप्रवृत्तिः । अत्रानुस्वारस्य ययि परसवर्ण इति सूत्रमनुवर्तते । ततश्च पदान्तस्यानुस्वारस्य यय्प्रत्याहारान्तःपातिनि वर्णे परे सति परसवर्णो वा स्यादिति सूत्रार्थः । तथा चात्र ककारे ययि परे ऽनुस्वारस्य स्थाने नासिकास्थानजन्यत्वसादृश्यात् ककारसवर्णे वैकल्पिके ङकारे त्वङ्करोषीति, परसवर्णाभावपक्षे त्वं करोषीति च साधु ।

**सम्राडिति** । सम्—राडित्यत्र 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते 'मो राजि समः क्वौ' इति सूत्रं प्रवर्तते । क्विपः प्रत्ययत्वेन 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमि'ति परिभाषया तदन्तविधिः । ततश्च क्विप्प्रत्ययान्तराज्शब्दे परे समो मकारस्य स्थाने मकार एव स्याद् नानुस्वार इति सूत्रार्थः । तथाचात्र क्विबन्तराज्शब्दस्य परत्वसत्वात्समो मकारस्य मकारे सम्राडिति सिद्धम् ।

---

७९. यय् परे रहते अनुस्वार के स्थानमें परसवर्ण आदेश होता है ।

८०. पदान्त अनुस्वार के स्थानमें पर सवर्ण विकल्पसे होता है यय् परे रहते ।

८१. क्विप् प्रत्ययान्त राज्शब्द परे रहते सम् घटक मकार के स्थान में मकार आदेश होता है अनुस्वार नहीं ।

**८२. हे मपरे वा ८।३।२६ ॥** मपरे हकारे परे मस्य मो वा । किम् ह्मलयति, किं ह्मलयति । ( यवलपरे यवला वा ) कियँ ह्यः, किं ह्यः । किवँ ह्वलयति, किं ह्वलयति । किलँ ह्लादयति, किं ह्लादयति ।

---

**किम् ह्मलयतीति** । किम्–ह्मलयतीति दशायां 'मोऽनुस्वारः' इति सूत्रेणानुस्वारे प्राप्ते 'हे मपरे वा' इति सूत्रं प्रवृत्तम् । अत्र 'मोऽनुस्वारः' इत्यतो म इति षष्ठ्यन्तं पदम् 'मो राजि समः क्वावि'त्यतो म इति प्रथमान्तं पदञ्चानुवर्तते । ततश्च मकारः परो यस्मात् तस्मिन् हकारे परे मकारस्य मकारो वा स्यादिति सूत्रार्थः । अत्र ह्मलयतीत्यस्य हकारस्य मकारपरकत्वेन तस्मिन् परे किमो मकारस्य वैकल्पिके मकारे किम् ह्मलयतीति सिद्ध्यति । मकाराभावपक्षे 'मोऽनुस्वारः' इत्यनेन हकारे हलि परे पदान्तस्य किमो मकारस्यानुस्वारे किं ह्मलयतीति सिध्यति ।

**कियँ ह्य इति** । किम्–ह्य इति दशायां 'मोऽनुस्वारः' इति सूत्रेणानुस्वारे प्राप्ते 'यवलपरे यवला वा' इति वार्तिकप्रवृत्तिः । अत्र मोऽनुस्वार इत्यतो म इत्यस्य हे मपरे वेत्यतो हे इत्यस्य च सम्बन्धः । ततश्च यवलपरे हकारे परे मकारस्य स्थाने यवला वा भवन्तीति वार्तिकार्थः । यथासंख्यसूत्रप्रवृत्त्या यकारः परो यस्मात्तस्मिन् हकारे परे मकारस्य स्थाने यकारो भवति, वकारः परो यस्मात्तस्मिन् हकारे परे मकारस्य स्थाने वकारो भवति, लकारः परो यस्मात्तस्मिन् हकारे परे मकारस्य स्थाने लकारो भवति इति वार्त्तिकार्थः फलितः । अत्र हि यपरके हकारे परे नासिकास्थानजन्यत्वसादृश्यात्सानुनासिकस्य मकारस्य स्थाने वैकल्पिके सानुनासिके यकारे कियँ ह्य इति यकाराभावपक्षे 'मोऽनुस्वारः' इतिसूत्रेण हकारे हलि परे मकारस्यानुस्वारे किं ह्य इति च सिद्धम् ।

**किवँ ह्वलयतीति** । किम्–ह्वलयतीत्यवस्थायां 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते तत्प्रबाध्य 'यवलपरे यवला वे'ति वार्तिकेन वपरके हकारे सानुनासिकमकारस्य सानुनासिके वैकल्पिके वकारे किवँ ह्वलयतीति, वकाराभावपक्षे 'मोऽनुस्वारः' इति सूत्रेण हकारे हलि परे मकारस्यानुस्वारे किं ह्वलयतीति च सिद्ध्यति ।

**किलँ ह्लादयतीति** । किम्-ह्लादयतीत्यत्र 'मोऽनुस्वारः' इत्यनुस्वारम्प्रबाध्य 'यवलपरे यवला वे'ति वार्तिकेन लपरके हकारे परे मकारस्य सानुनासिके लकारे किलँह्लादयतीति, लकाराभावपक्षे 'मोऽनुस्वारः' इत्यनेन हकारे हलि परे मकारस्यानुस्वारे कृते किं ह्लादयतीति च सिद्धम् ।

---

८२. मपरकहकार परे रहते पदान्त मकार के स्थान में मकार आदेश होता है विकल्प से अनुस्वार नहीं ।

८३. नपरे नः ८।३।२७ ॥ नपरे हकारे मस्य नो वा। किन् ह्नुते।

८४. आद्यन्तौ टकितौ १।१।४६ ॥ टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः।

८५. ङ्णोः कुक्टुक् शरि ८।३।२८ ॥ ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि। (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्)। प्राङ् ख्षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः। सुगण्ठ् षष्ठः, सुगण् ट्षष्ठः, सुगण् षष्ठः।

---

किन् ह्नुते-इति। किम्-ह्नुत इत्यवस्थायां 'मोऽनुस्वारः' इत्यनुस्वारे प्राप्ते 'नपरे नः' इति सूत्रप्रवृत्तिः। अत्र 'मोऽनुस्वारः' इत्यतोऽनुस्वारस्य 'हे मपरे वे'त्यतो हे इत्यस्य चानुवृत्तिः। ततश्च नकारः परो यस्मात्तस्मिन् हकारे परे मकारस्य स्थाने नकारो वा भवतीति सूत्रार्थः। अत्र नपरे हकारे परे मकारस्य वैकल्पिके नकारे किन् ह्नुते इति, नकाराभावपक्षे 'मोऽनुस्वारः' इत्यनुस्वारे किं ह्नुते-इति च सिद्धम्।

प्राङ् ख्षष्ठ इति। प्राङ् षष्ठ इत्यत्र 'ङ्णोः कुक् टुक् शरि' इति सूत्रप्रवृत्तिः। अत्र 'हे मपरे वे'त्यतो वेत्यनुवर्तते। ततश्च शर्प्रत्याहारान्तःपातिनि वर्णे परे सति ङकारणकारयोः कुक्टुकावागमौ वा स्त इति सूत्रार्थः। यथासंख्यसूत्रप्रवृत्त्या ङकारस्य कुगागमः, णकारस्य टुगागम इति फलितम्। अत्र हि षष्ठ इत्यस्य षकारे शरि परे प्राङो ङकारस्यान्तावयवे कुकि अनुबन्धलोपे 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' इति वार्त्तिकप्रवृत्तिः। चय्प्रत्याहारान्तःपातिनः वर्णस्य स्थाने तत्तद्वर्गीयद्वितीयो वर्णो भवति शरि परे पौष्करसादेराचार्य्यस्य मते इति वार्तिकार्थः। अत्र हि ककारस्य चयः षकारे शरि परे कवर्गीयद्वितीयवर्णे खकारे प्राङ्ख्षष्ठ इति, द्वितीयवर्णाभावपक्षे क्ष्संयोगे क्षे प्राङ्क्षष्ठ इति च सिद्धम्। कुगागमाभावपक्षे प्राङ्षष्ठ इति भवति।

सुगण् ठ्षष्ठ इति। सुगण् षष्ठ इत्यवस्थायां 'ङ्णोः कुक्टुक् शरि' इति सूत्रेण षष्ठ इत्यस्य षकारे शरि परे सुगणो णकारस्यान्तावयवे टुकि अनुबन्धलोपे कृते सुगण् ट् षष्ठ इत्यवस्थायां 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' इति। वार्तिकेन षकारे शरि परे टकारस्य चयस्तद्वर्गीयद्वितीयाक्षरे ठकारे सुगण्ठ्षष्ठ इति द्वितीयाक्षराभावपक्षे सुगण्ट्षष्ठ इति, टुगागमाभावपक्षे सुगण् षष्ठ इति च सिद्धम्।

---

८३. नकारपरक हकार परे रहते पदान्त मकार के स्थान में नकार आदेश होता है।

८४. टित् और कित् आगम जिसके लिए कहे जायँ वे क्रम से उसके आद्यवयव और अन्तावयव होते हैं। अर्थात् टित् आद्यवयव और कित् अन्तावयव होता है।

८५. ङकार और णकार को कुक् टुक् का आगम होता है शर् परे रहते।

८६. डः सि धुट् ८।३।२९ ॥ डात्परस्य सस्य धुड् वा । षट्त्सन्तः, षट्सन्तः ।

८७. नश्च ८।१।३० ॥ नात्परस्य सस्य धुड्वा । सन्त्सः, सन्सः ।

८८. शि तुक् ८।३।३१ ॥ पदान्तस्य नस्य शे परे तुग्वा । सञ्च्छम्भुः;

---

षट्त्सन्त इति । षड्–सन्त इत्यवस्थायां 'डः सि धुट्' इतिसूत्रं प्रवर्त्तते । अत्र 'हे मपरे वेत्यतो वे'त्यनुवर्तते । ड इत्यत्र पंचम्याः सीत्यत्र सप्तम्याश्च निर्देशात् 'तस्मादित्युत्तरस्येति' परिभाषासूत्रस्य 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषासूत्रस्य चोपस्थित्या डकाराव्यवहितपरस्य सस्य सकाराव्यवहितपूर्वस्य डस्य वा धुडितिसंशये प्राप्तौ परत्वाद् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति परिभाषया 'तस्मादित्युत्तरस्ये'त्यस्यैवोपस्थित्या ड इति पञ्चमी सीति सप्तम्याः षष्ठी कल्पयति । ततश्च डकाराव्यवहितपरस्य सकारस्य धुडागमो वा भवतीति सूत्रार्थः । तथा च षडो डकारात्परस्य सन्त इत्यत्र सकारस्य धुटः प्राप्तौ परः पूर्वो वा धुडिति शङ्कायाम् 'आद्यन्तौ टकितौ' इति सूत्रप्रवृत्तिः । आदिश्चान्तश्च आद्यन्ताविति द्वन्द्वः । टश्च कश्च टकाविति द्वन्द्वोत्तरं टकावितौ यस्येति बहुव्रीहिः । उक्ताविति शेषः । आद्यन्तशब्दावयवबाचिनौ । ततश्च यस्य टित्कितावुक्तौ तस्याद्यन्तावयवौ स्त इति सूत्रार्थः । यथासंख्यसूत्रप्रवृत्त्या टित् आद्यवयवो भवति कित्अन्तावयवो भवतीति च फलितम् । अत्र हि टित्त्वात्सकारस्याद्यवयवे धुटि अनुबन्धलोपे कृते 'खरि च'ेति सूत्रेण सन्त इत्यस्य सकारे खरि परे दन्तस्थानजन्यत्वसादृश्याद् धकारस्य चर्त्वेन तकारे ततः तकारे खरि परे मूर्धस्थानजन्यडकारस्य स्थाने मूर्धस्थानजन्यटकारे चरि षट्त्सन्त इति धुडभावपक्षे तु 'खरि चे'त्यनेन सकारे खरि परे डकारस्य चर्त्वेन टकारे षट् सन्त इति च सिद्धम् ।

सन्त्स इति । सन्–स इत्यत्र 'नश्च' इति सूत्रं प्रवर्तते । अत्र 'डः सि धुडि'त्यतः सि धुडित्यनुवर्तते । न इत्यत्र पञ्चम्या 'तस्मादित्युत्तरस्ये'ति परिभाषया सीत्यत्र सप्तम्याः षष्ठी प्रकल्प्यते । 'हे मपरे वे'त्यतो वेत्यनुवर्तते । नकारांशे तदन्तविधिः । ततश्च नकारान्तात्परस्य सकारस्य धुडागमो वा भवतीति सूत्रार्थः । तथा चात्र नकारान्तात्सनः परस्य सकारस्याद्यवयवे धुडागमे ऽनुबन्धलोपे 'खरि च' इति सूत्रेण सकारे खरि परे धकारस्य चर्त्वेन तकारे सन्त्स इति, धुटोऽभावपक्षे सन्सः इति च सिद्धम् ।

सञ्च्छम्भुरित्यादि । सन्–शम्भुरित्यत्र 'शि तुगिति' सूत्रं प्रवर्तते । अत्र

---

८६. डकार से परे सकार को धुट् का आगम होता है ।

८७. नान्तपद से परे सकार को धुट् का आगम होता है ।

८८. पदान्त नकार को तुक् का आगम होता है शकार परे रहते ।

सञ्छम्भुः, सञ्च्शम्भुः, सञ्शम्भुः ।

८९. **ङमो ह्रस्वादचि ङमुण् नित्यम्** ८।३।३२ ॥ ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुट् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ।

---

नश्चेत्यतो न इति 'हे मपरे वे'त्यतो वेति चानुवर्तते । पदस्येत्यधिक्रियते तदंशे तदन्तविधिः । 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषया शीत्यत्र सप्तमी न इत्यत्र पञ्चम्याः षष्ठीं कल्पयति । ततश्च पदान्तस्य नकारस्य शकारे परे तुगागमो वा भवतीति सूत्रार्थः । अत्र हि शम्भुरित्यस्य शकारे परे पदान्तस्य सनो नकारस्यान्तावयवे तुगागमेऽनुबन्धलोपे 'स्तोः श्चुना श्चुरि'ति सूत्रेण शकारयोगात् तकारस्य चुत्वेन चकारे ततश्चकारयोगाद् नकारस्य चुत्वेन ञकारे 'शश्छोऽटि' इति सूत्रेण चकाराज्झयः परस्य शकारस्य अकारेऽटि परे छकारे 'झरो झरि सवर्णे' इति सूत्रेण ञकाराद्धलः परस्य चकारस्य झरश्छकारे सवर्णे झरि परे वैकल्पिके लोपे सञ्छम्भुरिति । चलोपाभावपक्षे सञ्च्छम्भुरिति । छत्वाभावपक्षे सञ्च्शम्भुरिति तुकोऽभावपक्षे च नकारस्य शकारयोगात् चुत्वेन ञकारे सञ्शम्भुरिति रूपचतुष्टयं सिद्धम् ।

**प्रत्यङ्ङात्मेति** । प्रत्यङ्—आत्मेति दशायां 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति सूत्रं प्रवृत्तम् । अत्र ङम् इति प्रत्याहारः । पदस्येत्यधिक्रियते । तस्य ङम इति पञ्चम्यन्तानुरोधात् पञ्चम्यन्ततया विपरिणामः । 'तस्मादित्युत्तरस्ये'ति परिभाषया ङम इत्यत्र पञ्चमी अचीत्यत्र सप्तम्याः षष्ठीं कल्पयति । ततश्च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यादिति सूत्रार्थः । यथासंख्यप्रवृत्त्या ङकारात्परस्याचो ङुट् णकारात्परस्याचो णुट् नकारात्परस्याचो नुडिति फलितम् । अत्र यकारोत्तरवर्ती अकारो ह्रस्वस्तस्मात्परो ङकारो ङम् तदन्तं पदं प्रत्यङ् इति तस्मात्परस्य आकारस्य अच आद्यवयवे ङुडागमेऽनुबन्धलोपे प्रत्यङ्ङात्मेति सिद्धम् ।

**सुगण्णीश इति** । सुगण् ईश—इत्यत्र 'ङमो ह्रस्वादचि ङमुण्नित्यमि'ति सूत्रेण ह्रस्वो गकारोत्तरवर्ती अकारस्तस्मात्परो ङम् णकारस्तदन्तं पदं सुगण् इति तस्मात्परस्य ईश इत्यत्र ईकारस्य अच आद्यवयवे णुडागमेऽनुबन्धलोपे णकारयोरकारेण योगे सुगण्णीश इति सिद्धम् ।

**सन्नच्युत इति** । सन्—अच्युत इत्यवस्थायां 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति सूत्रेण ह्रस्वः सकारोत्तरवर्ती अकारस्तस्मात्परो ङम् नकारस्तदन्तं पदं सन् इति तस्मात्परस्य अच्युत इत्यस्याकारस्य अच आद्यवयवे नुडागमेऽनुबन्धलोपे नकारयोरकारेण योगे सन्नच्युत इति सिद्धम् ।

---

८९. ह्रस्व से परे ङमन्त पद को ङमुट् (ङुट्, णुट्, नुट्) का आगम होता है

**९०. समः सुटि ८।३।५** ॥ समो रुः सुटि ।

**९१. अत्रानुनासिकः पूर्वस्य तु वा ८।३।२** ॥ अत्र रुप्रकरणे रोः पूर्वस्यानुमासिको वा ।

**९२. अनुनासिकात्परोऽनुस्वारः ८।३।४** ॥ अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ।

**९३. खरवसानयोर्विसर्जनीयः ८।३।१५** ॥ खरि अवसाने च पदान्तस्य रेफस्य विसर्गः । ( सम्पुंकानां सो वक्तव्यः ) सँस्स्कर्ता, संस्स्कर्ता ।

---

सँस्स्कर्तेति । सम्—स्कर्ता इत्यवस्थायां 'समः सुटि' इति सूत्रं प्रवर्तते । अत्र 'मतुवसो रु सम्बुद्धौ छन्दसी'त्यतो रु इत्यनुवर्तते । ततश्च समो रुः स्यात्सुटि परे, इति सूत्रार्थः । अत्र 'अलोऽन्त्यस्ये'ति परिभाषया समो मकारस्य रुत्वेऽनुबन्धलोपे च कृते 'अत्रानुनासिकः पूर्वस्य तु वा' इति सूत्रप्रवृत्तिः । अस्य सूत्रस्य मतुवसो रु सम्बुद्धौ छन्दसीत्यस्यानन्तरं पठितत्वेन अत्रेत्यस्य रुप्रकरणे इत्यर्थलाभः । पूर्वत्वं च उपस्थितत्वाद् रु इत्यपेक्षया बोध्यम् । ततश्च अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यादिति सूत्रार्थः । तथा चात्र रोः पूर्वस्य मकारोत्तरवर्तिनः अकारस्य अनुनासिकत्वे 'खरवसानयोर्विसर्जनीयः' इति सूत्रप्रवृत्तिः । अत्र रोरीत्यतो र इति षष्ठ्यन्तं पदमनुपर्तते । पदस्येत्यधिक्रियते, 'येन विधिस्तदन्तस्ये'ति तदन्तविधिः । ततश्च पदान्तस्य रेफस्य विसर्जनीयः स्यात् खरि अवसाने च परे, इति सूत्रार्थः । तथा चात्र सकारे खरि परे रेफस्य विसर्गे 'विसर्जनीयः सः' इति सूत्रेण विसर्गस्य सकारे प्राप्ते तं बाधित्वा 'वा शरि' इति सूत्रेण वैकल्पिके विसर्गे प्राप्ते 'सम्पुंकानां सो वक्तव्यः' इति वार्तिकप्रवृत्तिः । सम् पुम् कान् एतत्त्रितयसम्बन्धिनो विसर्गस्य स्थाने सकारो भवतीति वार्तिकार्थः । तथा चात्र सम् सम्बधिनो विसर्गस्य सत्वात्तस्य सकारे सँस्स्कर्तेति सिध्यति । अनुनासिकत्वाभावपक्षे स र् स्कर्तत्यवस्थायाम् 'अनुनासिकात्परो ऽनुस्वारः' इति सूत्रप्रवृत्तिः । अत्रानुनासिकादिति ल्यब्लोपे पञ्चमी, अत्रानुनासिकः पूर्वस्य तु वेत्यतः पूर्वस्यत्यनुवर्तते तस्य परपदान्वयानुरोधात्पञ्चम्यन्ततया विपरिणामः । अत्रापि पूर्वत्वं रोरपेक्षया बोध्यम् । ततश्च अनुनासिकं विहाय

---

९०. सम् के म को रु होता है सुट् परे रहते ।

९१. इस रुत्व के प्रकरण में रुत्व से पूर्व अच्को अनुनासिक आदेश होता है । विकल्पसे ।

९२. अनुनासिक को छोड़कर रुके पूर्ववर्ण से परे अनुस्वार आगम होता है ।

९३. पदान्त रेफ को विसर्ग आदेश होता है खर् अथवा अवसान परे रहते ।
वा. समसम्बन्धी पुम् सम्बन्धी कान् सम्बन्धी विसर्ग को सकार होता है ।

९४. **पुमः खय्यम्परे ८।३।६ ॥** अम्परे खयि पुमो रुः । पुँस्कोकिलः, पुंस्कोकिलः ।

९५. **नश्छव्यप्रशान् ८।३।७ ॥** अम्परे छवि नान्तस्य पदस्य रुः स्यान्न तु प्रशान्शब्दस्य ।

९६. **विसर्जनीयस्य सः ८।३।३४ ॥** खरि परे विसर्जनीयस्य सः स्यात् । चक्रिंस्त्रायस्व, चक्रिंस्त्रायस्व । अप्रशान् किम् । प्रशान् तनोति । पदस्येति

---

रोः पूर्वस्मात्परोऽनुस्वारागमः स्यादिति सूत्रार्थः । तथा चात्र रोः पूर्वो मकारोत्तरवर्ती अकारस्तस्मात्परेऽनुस्वारागमे पूर्ववत् 'खरवसानयोर्विसर्जनीयः', इति रेफस्य विसर्गे सम्पुंकानामिति विसर्गस्य सकारे संस्कर्तेति च सिद्धम् ।

पुँस्कोकिल इति । पुम्—कोकिल इत्यवस्थायाम् 'पुमः खय्यम्परे' इति सूत्रं प्रवर्तते । अत्र 'मतुवसो रु सम्बुद्धौ छन्दसी'त्यतो रुपदमनुवर्तते । ततश्च अम्प्रत्याहारान्तःपाती वर्णः परो यस्मात्तस्मिन् खय्प्रत्याहारान्तःपातिनि वर्णे परे पुमो रुः स्यादिति सूत्रार्थः । तथा चात्र अलोऽन्त्येस्येति सूत्रप्रवृत्त्या ओकाररूपाम्परे कोकिल इत्यस्य ककारे खयि परे पुमो मकारस्य रुत्वेऽनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वे'ति सूत्रेण पकारोत्तरवर्तिन उकारस्यानुनासिकत्वे 'खरवसानयोर्विसर्जनीयः', इति ककारे खरि परे रेफस्य विसर्गे 'सम्पुंकानां सो वक्तव्यः' इति वार्तिकेन पुम्सम्बधिनो विसर्गस्य स्थाने सकारे पुंस्कोकिल इति सिद्धम् ? अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इति सूत्रेण उकारात्परेऽनुस्वारागमे रस्य विसर्गे सकारे च कृते पुंस्कोकिल इति सिद्धयति ।

**चक्रिँस्त्रायस्वेतिति** । चक्रिन्—त्रायेस्वेत्यत्र 'नश्छव्यप्रशान्' इति सूत्रप्रवृत्तिः । अत्र 'मतुवसो रु सम्बुद्धौ छन्दसी'त्यतो रु इत्यनुवर्तते, 'पुमः खय्यम्परे' इत्यतोऽम्परे, इत्यनुवर्तते पदस्येत्यधिक्रियते 'येन विधिस्तदन्तस्ये'ति नकारांशे तदन्तविधिः । ततश्च अम्प्रत्याहारान्तर्गतवर्णः परो यस्मात्तस्मिन् परे छव्प्रत्याहान्तर्गतवर्णे परे सति नकारान्तस्य पदस्य रुः स्यान्न तु प्रशान्शब्दस्येति सूत्रार्थः । तथा चात्र रेफरूपाम्परके तकारे छवि परे 'अलोऽन्त्यस्ये'त्यस्य प्रवृत्त्या चक्रिन् इत्यत्र नकारस्य रुत्वेऽनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इति रेफोत्तरवर्तिन इकारस्यानुनासिकत्वे 'खरवसानयोर्विसर्जनीयः' इति तकारे खरि परे रेफस्य विसर्गे 'विसर्जनीयस्य सः' इति सूत्रप्रवृत्तिः । 'खरवसानयोर्विसर्जनीयः' इत्यतः खरीत्यनुवर्त्तते । ततश्च

---

९४. अम्परक खय् परे रहते पुम् के मकार के स्थान में रु आदेश होता है ।

९५. अम्परक छव् परे रहते नान्तपद के नकार को रु आदेश होता है ।

९६. खर् परे रहते विसर्ग के स्थान में सकार आदेश होता है ।

किम् हन्ति ।

**९७. नॄन् पे ८।३।१०॥** नॄनित्यस्य रुर्वा पे ।

**९८. कुप्वोः ≍क≍ पौ च ८।३।३७॥** कवर्गे पवर्गे च विसर्गस्य ≍क ≍ पौ स्तः । चाद्विसर्गः । नॄँ≍ पाहि, नॄँःपाहि न ≍पाहि । नॄः पाहि । नॄन्पाहि ।

---

खरि परे विसर्गस्य स्थाने सकारः स्यादिति सूत्रार्थः । तथा चात्र विसर्गस्य सकारे चक्रिँस्त्रायस्वेति । अनुनासिकाभावपक्षेऽनुस्वारे चक्रिंस्त्रायस्वेति च साधु ।

**अप्रशान्किम् । प्रशान्तनोतीति ।** 'नश्छव्यप्रशानि'ति सूत्रेऽप्रशान् ग्रहणाभावे प्रशान् तनोतीत्यत्र अकाररूपाम्परे तकारे छवि परे नकारस्य रुत्वं स्यात्ततश्च अनुनासिकविसर्गसत्वेषु कृतेषु प्रशाँस्तनोतीत्यनिष्टप्रयोगापत्तिरतोऽप्रशान्ग्रहणमावश्यकम् । कृते तु तस्मिन् प्रशान्शब्दस्यैवात्र सत्वेन प्रशान्शब्दभिन्नत्वाभावात् रुत्वं न भवतीति शम् ।

**हन्तीति ।** 'नश्छव्यप्रशानि'तिसूत्रे पदस्येत्यस्याधिकाराभावे हन्तीत्यत्र, इकाररूपाम्परे तकारे छवि परे नकारस्य रुत्वं स्यात्ततश्च अनुनासिकविसर्गसत्वेषु कृतेषु हँस्तीत्यनिष्टं प्रसज्येत अतः पदस्येत्यस्याधिकार आवश्यकः । कृते तु तस्मिन् हन् इत्यस्य नान्तपदत्वाभावेन रुत्वं न भवतीति हन्तीति यथाश्रुतमेव साध्विति शम् ।

**नॄँ ≍पाहीति ।** नॄन्-पाहीत्यत्र 'नॄन् पे' इति सूत्रं प्रवृत्तम् । अत्र नॄन् इति द्वितीयान्तानुकरणं लुप्तषष्ठीकं पदम् । अत्र 'मतुवसो रु सम्बुद्धौ छन्दसी'त्यतो रु इत्यनुवर्तते उभयथर्क्षु इत्यत उभयथेत्यनुवर्तते । ततश्च नॄनित्यस्य रुः स्याद्वा पकारे परे इति सूत्रार्थः । तथा च पाहीत्यस्य पकारे परेऽलोऽन्त्यस्येतिसूत्रप्रवृत्त्या नकारस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इतिसूत्रेण पकारे खरि परे रेफस्य विसर्गे 'विसर्जनीयस्य सः' इति विसर्गस्य सकारे प्राप्ते तम्प्रबाध्य 'कुप्वोः≍क≍ पौ च' इति सूत्रं प्रवृत्तम् । अत्र 'विसर्जनीयस्य सः', इत्यतो विसर्जनीयस्येत्यनुवर्तते । ततश्च कवर्गे पवर्गे च परे विसर्गस्य≍क ≍प इत्येतावादेशौ स्तः, चकारात्पक्षे विसर्गः, इति सूत्रार्थः। तथा चात्र पकारे परे विसर्गस्य ≍पादेशे नॄँ≍पाहीति । अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वारागमे नॄं≍पाहीति । ≍पादेशाभावपक्षे रुत्वानुनासिकविसर्गेषु कृतेषु नॄँः पाहीति । अनुस्वारपक्षे नॄंः पाहीति । रुत्वाभावपक्षे नॄन्पाहीति रूपपञ्चकं सिद्ध्यति ।

---

९७. नॄन् के नकार को रु आदेश होता है पकार परे रहते विकल्प से ।

९८. कवर्ग और पवर्ग परे रहते विसर्ग के स्थान में जिह्वामूलीय और उपध्मानीय होते हैं क्रम से ।

९९. **तस्य परमाम्रेडितम्** ८।१।२ ॥ द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यात् ।

१००. **कानाम्रेडिते** ८।३।१२ ॥ कान्नकारस्य रुः स्यादाम्रेडिते । काँस्कान्, कांस्कान् ।

१०१. **छे च** ६।१।७२ ॥ ह्रस्वस्य छे परे तुक् । शिवच्छाया ।

१०२. **पदान्ताद्वा** ६।१।७६ ॥ दीर्घात्पदान्ताच्छे परे तुग् वा । लक्ष्मीच्छाया, लक्ष्मीछाया ॥

इति हल्संधिः ।

---

**काँस्कानिति** । कान् कान् इति स्थिते 'तस्य परमाम्रेडितम्' इति सूत्रं प्रवृत्तम् । 'सर्वस्य द्वे' इति सूत्रानन्तरमस्य पाठात्तस्येत्यनेन द्विरुक्तस्य परामर्शः । ततश्च द्विरुक्तस्य परं रूपमाम्रेडितसंज्ञं स्यादिति सूत्रार्थः । तथा चात्र द्वितीयकान्शब्दस्य आम्रेडितसंज्ञायाम् 'कानाम्रेडिते' इति सूत्रप्रवृत्तिः । अत्र कानिति द्वितीयान्तानुकरणम् लुप्तषष्ठीकं पदम् । 'मतुवसोरु सम्बुद्धौ छन्दसी'त्यतो रु इत्यनुवर्तते 'अलोऽन्त्यस्ये'ति परिभाषा चात्र प्रवर्तते । ततश्च कानो नकारस्य रुत्वे 'अत्रानुनासिकः पूर्वस्य तु वा' इति सूत्रेण ककारोत्तरवर्तिनोऽकारस्यानुनासिकत्वे 'खरवसानयोर्विसर्जनीयः' इति ककारे खरि परे रेफस्य विसर्गे 'सम्पुंकानां सो वक्तव्यः' इति वार्तिकेन कान्सम्बन्धिनो विसर्गस्य सकारे काँस्कानिति । अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इति ककारोत्तरवर्तिन आकारात् परेऽनुस्वारागमे विसर्गसत्त्वे च कांस्कानिति च सिद्धम् ।

**शिवच्छायेति** । शिव छाया इत्यवस्थायां 'छे च' इतिसूत्रं प्रवृत्तम् । अत्र 'ह्रस्वस्य पिति कृति तुगि'त्यतो ह्रस्वस्येति, तुगिति चानुवर्तते, संहितायामित्यधिक्रियते । ततश्च ह्रस्वस्य तुगागमः स्याच्छकारे परे, इति सूत्रार्थः । तथा चात्र छायेत्यस्य छकारे परे वकारोत्तरवर्तिनः अकारस्य ह्रस्वस्यान्तावयवे तुगागमेऽनुबन्धलोपे 'झलां जशोऽन्ते' इति जश्त्वेन तकारस्य दकारे 'स्तोः श्चुना श्चुः' इति सूत्रेण छकारयोगाद् दकारस्य चुत्वेन जकारे 'खरि च' इति चर्त्वेन चकारे शिवच्छायेति सिद्धम् ।

**लक्ष्मीच्छायेति** । लक्ष्मी छाया इत्यत्र 'पदान्ताद्वा' इति सूत्रं प्रवृत्तम् । अत्र

---

९९. जिस रूप को द्वित्व किया हो उसके दूसरे रूपकी आम्रेडित संज्ञा है ।

१००. कान् के नकार को रु आदेश होता है आम्रेडित परे रहते ।

१०१. छकार परे रहते ह्रस्व को तुक् का आगम होता है ।

१०२. पदान्त दीर्घको तुक् का आगम होता है ।

इति हल्सन्धिः ।

**१०३. विसर्जनीयस्य सः ८।३।३४ ॥** खरि परे विसर्जनीयस्य सः स्यात् । विष्णुस्त्राता ।

**१०४. वा शरि ८।३।३६ ॥** शरि विसर्गस्य विसर्गो वा । हरिः शेते । हरिश्शेते ।

**१०५. ससजुषो रुः ८।२।६६ ॥** पदान्तस्य सस्य सजुषश्च रुः स्यात् ।

---

'दीर्घादि'ति सूत्रमनुवर्तते छे इति तुगिति चानुवर्तते । ततश्च दीर्घात्पदन्ताच्छे परे तुग्वा स्यादिति सूत्रार्थः । तथाचात्र छकारे परे मकारोत्तरवर्तिन ईकारस्यान्तावयवे तुगागमेऽनुबन्धलोपे 'झलां जशोऽन्ते' इति जश्त्वेन दकारे छकारयोगात् दकारस्य श्चुत्वेन जकारे 'खरि च' इति चर्त्वेन चकारे लक्ष्मीच्छायेति, तुगभावे लक्ष्मीछायेति च सिद्धम् ।

इति हल्सन्धिप्रकरणम् ।

विष्णुस्त्रातेति । विष्णुः–त्रातेत्यत्र 'विसर्जनीयस्य सः' इति सूत्रेण त्रातेत्यस्य तकारे खरि परे उकारोत्तरवर्तिनो विसर्गस्य स्थाने सकारे कृते विष्णुस्त्रातेति सिद्धम् ।

हरिः शेते इति । हरिः–शेते–इतिदशायां 'विसर्जनीयस्य सः' इति सूत्रेण शकारे खरि परे विसर्गस्य स्थाने सकारे प्राप्ते 'वा शरि' इति सूत्रं प्रवर्तते । अत्र 'विसर्जनीयस्य स' इतिसूत्राद् विसर्जनीयस्येति शर्परे विसर्जनीय, इत्यतो विसर्जनीय इति चानुवर्तते । ततश्च शरि परे विसर्गस्य स्थाने विसर्ग एव वा स्यादिति सूत्रार्थः । तथा चात्र शेते इत्यस्य शकारे शरि परे इकारोत्तरवर्तिनो विसर्गस्य स्थाने विसर्गे हरिः शेते–इति । विसर्गाभावपक्षे 'विसर्जनीयस्य सः' इतिसूत्रेण विसर्गस्य स्थाने सकारे कृते 'स्तोः श्चुना श्चुः' इतिसूत्रेण शकारयोगात् सकारस्य श्चुत्वेन शकारे हरिश्शेते इति च सिद्धम् ।

शिवोऽर्च्य इति । शिवस्–अर्च्य इतिदशायां 'ससजुषोरुरि'ति सूत्रं प्रवृत्तम् । अत्र सश्च सजूश्च ससजुषौ तयोरिति विग्रहः । पदस्येत्यधिक्रियते, तस्य सकारेण सजुष्शब्देन च विशेषणाद् 'येन विधिस्तदन्तस्ये'ति तदन्तविधिः । तत्फलितमाह–पदान्तस्य सकारस्य सजुष्शब्दस्य च रुः स्यादिति सूत्रार्थः । अलोऽन्त्यपरिभाषया सजुष्शब्दे षकारस्यैव रुर्भवति । तथा चात्र पदान्तस्य शिवस् इत्यत्र सकारस्य रुत्वेऽनुबन्धलोपे शिव र् अर्च्य इति स्थिते, 'अतो रोरप्लुतादप्लुते' इति सूत्रप्रवृत्तिः ।

---

१०३. विसर्ग के स्थान पर सकार आदेश होता है खर् परे रहते ।

१०४. विसर्ग के स्थान में विसर्ग होता है विकल्प से शर् परे रहते

१०५. पदान्त सकार और सजुष् शब्द के षकार को रु आदेश होता है ।

१०६. अतो रोरप्लुतादप्लुते ६।१।११३ ॥ अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ।

१०७. हशि च ६।१।११४ ॥ अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः ।

१०८. भोभगोअघोअपूर्वस्य योऽशि ८।३।१७ ॥ एतत्पूर्वस्य रोर्यादेशोऽशि । देवा इह । देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ।

---

अत्र ऋत उदि'त्यत उदित्यनुवर्तते, 'एङः पदान्तादति' इति सूत्राद् अतीति चानुवर्तते, तस्य पञ्चम्यन्ततया विपरिणामः । ततश्च अप्लुताद्ध्रस्वाकारात्परस्य रोः स्थाने उकारः स्यादप्लुते ह्रस्वाकारे परे, इतिसूत्रार्थः । तथाचात्र वकारोत्तरवर्तिनः अकारात्परस्य रोः स्थाने ऽर्च्यइत्यस्याकारे परे उकारे शिव उ अर्च्य इति जाते, 'आद् गुणः' इत्यनेन अकारस्य उकारस्य चोभयोः स्थाने ओकारे गुणे कृते 'एङः पदान्तादति' इत्यनेन पूर्वरूपे शिवोऽर्च्य इति सिद्धम् ।

शिवो वन्द्य इति । शिवस्—वन्द्य इतिदशायां ससजुषो रुः' इति सकारस्य रुत्वेऽनुबन्धलोपे 'हशि च' ति सूत्रं प्रवर्तते । अत्र 'ऋत उदि'त्यत उदित्यनुवर्तते, 'अतो रोरप्लुतादि' ति चानुवर्तते । ततश्च अप्लुतादकारात्परस्य रोः स्थाने उकारः स्याद्धशि परे, इति सूत्रार्थः । तथा चात्र वकारोत्तरवर्तिनः अकारात्परस्य रोः स्थाने वन्द्य इत्यस्य वकारे हशि परे उकारे कृते 'आद् गुणः' इति गुणे शिवो वन्द्य इति सिद्धम् ।

देवा इहेति । देवास्—इहेत्यत्र 'ससजुषोरुः' इति रुत्वेऽनुबन्धलोपे, 'भोभगोअघोअपूर्वस्य योऽशि' इति सूत्रं प्रवर्वते । अत्र 'रोः सुपी'त्यतो रोरित्यनुवर्तते । भो भगो अघो अ इत्येषां द्वन्द्वसमासः, तत एते पूर्वाः यस्मादिति बहुव्रीहिसमासः, पूर्वशब्दस्य प्रत्येकं सम्बन्धः । ततश्च भोपूर्वकस्य भगोपूर्वकस्य अघोपूर्वकस्य अपूर्वकस्य च रोः स्थाने यकारः स्यादशि परे, इति सूत्रार्थः । तथा चात्र इह इत्यस्य इकारेऽशि परे वकारोत्तरवर्त्याकारपूर्वकस्य रोः स्थाने यकारादेशे 'लोपः शाकल्यस्य' इति सूत्रेण यकारस्य लोपे देवा इहेति—यलोपाभावपक्षे देवायिहेति च सिद्धम् ।

---

१०६. अप्लुत अकार से परे रु के स्थान में उ आदेश होता है अप्लुत अकार परे रहते ।

१०७. अप्लुत अकार से परे रु के स्थान में उ आदेश होता है हश् परे रहते ।

१०८. भो पूर्वक, भगो पूर्वक, अघो पूर्वक, अपूर्वक रु के स्थान में य आदेश होता है अश् परे रहते ।

**१०९. हलि सर्वेषाम् ८।३।२२ ॥** भोभगोअघो अपूर्वस्य यस्य लोपः स्याद्धलि सर्वेषां मतेन। भो देवाः। भगो नमस्ते। अघो याहि। देवा नम्याः।

**११०. रोऽसुपि ८।२।६९ ॥** अह्नो रेफादेशो न तु सुपि। अहरहः। अहर्गणः।

---

**भो देवा इति।** भोस्–देवा इत्यत्र भोस् इति सकारान्तो निपातस्तत्सकारस्य 'ससजुषो रुः' इति रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति सूत्रेण देवा इत्यस्य दकारेऽशि परे भोपूर्वकस्य रोः स्थाने यकारादेशे भोस् देवा इति जाते 'हलि सर्वेषाम्' इति सूत्रं प्रवर्तते। अत्र 'भोभगोअघोअपूर्वस्ये'त्यनुवर्तते, 'व्योर्लघुप्रयत्नतरः शाकटायनस्ये'ति सूत्राद् यकारस्यानुवृत्तिः। 'लोपः शाकल्यस्ये'त्यतो लोपइत्यनुवर्तते। ततश्च भोपूर्वकस्य भगोपूर्वकस्य अघोपूर्वकस्य अपूर्वकस्य च यकारस्य लोपः स्याद् हलि परे सर्वेषां मतेनेति सूत्रार्थः। तथा चात्र देवाइत्यस्य दकारे हलि परे भोपूर्वकस्य यकारस्य लोपे भो देवा इति सिद्धम्।

**भगो नमस्ते, इति।** भगोस्–नमस्ते, इत्यत्र भगोस् इति सकारान्तो निपातस्तत्सकारस्य 'ससजुषो रुः' इति रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति नकारेऽशि परे भगोपूर्वकस्य रोः स्थाने यकारे कृते 'हलि सर्वेषाम्' इत्यनेन नकारे हलि परे भगोपूर्वकस्य यकारस्य लोपे कृते भगो नमस्ते इति सिद्ध्यति।

**अघो याहीति।** अघोस्–याहीत्यत्र अघोस् इतिसकारान्तो निपातस्तत्सकारस्य 'ससजुषौरुः इति रुत्वे 'भोभगोअघोपूर्वस्य योऽशि' इति याहीत्यस्य यकारेऽशि परे अघोपूर्वकस्य रोः स्थाने यकारे कृते 'हलि सर्वेषामि'त्यनेन यकारे हलि परे अघोपूर्वकस्य यका रस्य लोप अघोयाहीति सिद्ध्यति।

**अहरहः, इति।** अहन्–अहन् इत्यत्र 'रोऽसुपि' इति सूत्रं प्रवृत्तम्। अत्र लुसषष्ठ्यन्तम् अहन् इति सूत्रमनुवर्तते, असुपीति प्रसज्यप्रतिषेधः। ततश्च अहन् शब्दस्य रेफादेशः स्यात्सुपि परे नेति सूत्रार्थः। तथा चात्र अलोऽन्त्यपरिभाषया नकारस्य स्थाने रेफे अहरहः, इति सिद्धम्।

**अहर्गण इति।** अहन्–गण इत्यत्र 'रोऽसुपि' इति नकारस्य रेफादेशे अहर्गण इति सिद्धम्।

---

१०९. भो भगो अघो और अ है पूर्व में जिसके उस यकार का लोप होता है सब आचार्यों के मत में।

११०. अहन् के नकार के स्थान में रेफ आदेश होता है। यदि सुप् परे न हो।

**१११. रोरि ८।३।१४ ॥** रेफस्य रेफे परे लोपः ।

**११२. ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।११० ॥** ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् । तृढः । बृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ।

**११३. विप्रतिषेधे परं कार्यम् १।४।२ ॥** तुल्यबलविरोधे सति परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वा-

---

**पुना रमते इति** । पुनर्–रमते, इतिस्थिते 'रो रि' इति सूत्रप्रवृत्तिः । अत्र 'ढो ढे लोप' इत्यतो लोप इत्यनुवर्तते । ततश्च रेफस्य रेफे परे लोपः स्यादिति सूत्रार्थः । तथा चात्र रमत इत्यस्य रेफे परे पुनर् इत्यत्र रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इतिसूत्रं प्रवृत्तम् । ढ च र च ढ्रौ, तौ लोपयतीति ढ्रलोपस्तस्मिन् ढ्रलोपे इति विग्रहः, एतेन ढलोपनिमित्तं रेफलोपनिमित्तं च विवक्ष्यते, तच्च ढकाररेफात्मकमेव, ढो ढे लोपः रो रीति तयोरेव ढकाररेफलोपनिमित्तत्वात् । ततश्च ढकारलोपनिमित्ते ढकारे रेफलोपनिमित्ते रेफे च परे पूर्वस्य अण् प्रत्याहारान्तःपातिनो वर्णस्य दीर्घः स्यादिति सूत्रार्थः । तथाचात्र रेफलोपनिमित्ते रमते इत्यस्य रेफे परे पूर्वस्य नकारोत्तरवर्तिनः अकारस्याणो दीर्घे पुना रमते इत्येतत्सिद्धम् ।

**हरी रम्य इति** । हरिस्–रम्य इत्यत्र 'ससजुषोरुः' इति रुत्वे 'रोरि' इति सूत्रेण रम्य इत्यस्य रेफे परे रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति रेफलोपनिमित्ते रम्य इत्यस्य रेफे परे पूर्वस्य रेफोत्तरवर्तिन इकारस्य दीर्घे हरी रम्य इति साधु ।

**शम्भू राजते, इति** । शम्भुस्–राजते इत्यत्र 'ससजुषोरुः' इति रुत्वेऽनुबन्धलोपे 'रो रि' इति सूत्रेण राजत इत्यस्य रेफे परे रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति रेफलोपनिमित्ते राजत इत्यस्य रेफे परे पूर्वस्य भकारोत्तरवर्तिन उकारस्याणो दीर्घे शम्भू राजते इति साधु ।

**तृढः वृढ इति** । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इतिसूत्रेऽण्ग्रहणाभावे तृह्, वृह्, धातुभ्यां क्तप्रत्यये कृते 'हो ढः' इति ढत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धकारे, ष्टुत्वे 'ढो ढे लोपः' इति ढकारलोपे तृढ इति वृढ इति च जाते ढकारलोपनिमित्ते ढकारे परे पूर्वस्य ऋकारस्य दीर्घे तॄढ इति वॄढ इत्यनिष्टं प्रसज्येत्, अतोऽत्राण्ग्रहणमा-

---

१११. रेफका लोप होता है रेफ परे रहते ।

११२. ढ और रेफ के लोप के निमित्त ढकार और रेफ परे रहते पूर्व अण् को दीर्घ होता है ।

११३. तुल्यवलविरोध में पर कार्य होता है ।

दुत्वमेव । मनोरथः ।

**११४. एततदोः सुलोपोऽकोरनञ्समासे हलि ६।१।१३२ ॥** अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि, न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ।

---

वश्यकम् । कृते तु तस्मिन् तत्सामर्थ्यात्पूर्वणकारेणैवाण्प्रत्याहारग्रहणादत्रोक्तप्रयोगयोर्दीर्घो न भवतीति दिक् ।

**मनोरथ इति ।** मनस्–रथ इत्यत्र 'ससजुषोरुः' इति रुत्वे कृते 'हशि च' इत्युत्वे 'रो रि' इति लोपे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इति सूत्रप्रवृत्तिः । कुत्रचिच्चरितार्थयोर्द्वयोः सूत्रयोरेकस्मिन् प्रयोगे युगपत्प्राप्तिस्तुल्यबलविरोधस्तस्मिन् सति परं कार्यं स्यादिति सूत्रार्थः । शिवो वन्द्य इति प्रयोगे 'हशि चे'ति चरितार्थम्, पुना रमत इत्यादौ 'रो री'ति चरितार्थम्, मन र् रथ इतिदशायां द्वयोरपि प्राप्तिरिति तुल्यबलविरोधः । तथा चात्र परत्वाद् 'रो री'ति लोपे प्राप्ते 'पूर्वत्रासिद्धमि'तिसूत्रेण रो रीत्यस्यासिद्धित्वाद् 'हशि चे'त्युत्वे कृते 'आद् गुणः' इति गुणे मनोरथ इति सिद्धम् ।

**एष विष्णुरिति**—एषस् विष्णुरिति दशायां 'ससजुषोरुरि'ति रुत्वे प्राप्ते तं बाधित्वा 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रं प्रवृत्तम् । अत्र सु इति लुप्तषष्ठीकं पदम् एतत्तदोरित्यनेनान्वेति । अविद्यमानः ककारः ययोस्तौ अकौ तयोः अकोरिति बहुव्रीहिसमासः । अनञ्समास इति प्रसज्यप्रतिषेधः पर्युदासस्वीकारे तु तस्य सादृश्यग्राहकत्वाद् नञ्समाससदृशे समासे एतत्सूत्रप्रवृत्त्या एष विष्णुरित्यादोनामसिद्धिः स्यात् । ततश्च अविद्यमानककारयोरेतद्तद्शब्दयोर्यः सुस्तस्य लोपः स्यात् हलि परे, नञ्ससमासे तु सोर्लोपो न स्यादिति सूत्रार्थः । तथाचात्र विष्णुरित्यस्य वकारे हलि परे षकारोत्तरवर्तिनः सोर्लोपे एष विष्णुरिति सिद्धम् ।

**स शम्भुरिति**—सस् शम्भुरित्यवस्थायां 'ससजुषो रुः' इति रुत्वं बाधित्वा 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रेण शम्भुरित्यस्य शकारे हलि परे सकारस्य लोपे स शम्भुरिति सिद्ध्यति ।

**एषको रुद्र इति ।** एतद् शब्दाद् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इतिसूत्रेण अकच् प्रत्ययेऽनुबन्धलोपे कृते सति एषकस् रुद्र इत्यवस्थायां 'ससजुषो रुः' इति रुत्वे 'हशि च' इत्युत्वे 'आद् गुणः' इति गुणे एषको रुद्र इति सिद्ध्यति । 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इतिसूत्रे अकोर्ग्रहणाभावे एषकस् रुद्र इत्यवस्थायां

---

११४. ककार रहित एतत् और तत् शब्द के सु प्रत्यय का लोप होता है हल् परे रहते, नञ् समास को छोड़कर ।

**११५. सोऽचि लोपे चेत्पादपूरणम् ६।१।१३४ ॥** सस् इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत। सेमामविड्ढि प्रभृतिम्। सैष दाशरथी रामः।

इति विसर्गसंधिः ॥

---

सुलोपे एषक रुद्र इत्यनिष्टं प्रसज्येत, कृते तु तस्मिन् अत्र प्रयोगे एतद्शब्दस्य सककारकत्वान्न सुलोप इति शम्।

**असः शिव इति।** असस् शिव इत्यत्र 'ससजुषो रुः' इति रुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्गे 'विसर्जनीयस्य सः' इति विसर्गस्य सकारे 'स्तोः श्चुना श्चुः', इति श्चुत्वेन सकारस्य शकारे असश्शिव इति सिद्ध्यति। 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इतिसूत्रे ऽनञ्समासग्रहणाभावे असस् शिव इत्यवस्थायां सुलोपेन अस शिव इत्यनिष्टप्रयोग आपद्येत। कृते तु तस्मिन् अत्र नञ्समासत्वान्न सुलोप इति दिक्।

**एषोऽत्रेति।** एषस् अत्रेत्यवस्थायां 'ससजुषो रुः' इति रुत्वे 'अतो रोरप्लुतादप्लुते' इति सूत्रेण रोरुत्वे; 'आद् गुणः' इतिगुणे 'एङः पदान्तादति' इति पूर्वरूपे एषोऽत्रेति सिद्धयति। 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रे हलि ग्रहणाभावे एषस् अत्रेत्यवस्थायां सुलोपे एष अत्र इत्यनिष्टप्रयोग आपद्येत सति तु तस्मिन् अत्र हल्परत्वाभावान्न सुलोप इति शम्।

**सेमामविड्ढिप्रभृतिमिति।** सस् इमामविड्ढिप्रभृतिमित्यत्र 'ससजुषो रुरि'ति रुत्वं बाधित्वा 'सोऽचि लोपे चेत्पादपूरणम्' इति सूत्रं प्रवर्तते। अत्र सूत्रे स इति प्रथमैकवचनान्तं स्वरूपपरम् ततः षष्ठ्या सौत्रो लुक् सस् शब्दस्येति लभ्यते। एतत्तदोरित्यतः सुलोप इत्यनुवर्तते। ततश्च सस् इत्यस्य सोर्लोपः स्यादचि परे लोपे सत्येव पादश्चेत् पूर्येत, इतिसूत्रार्थः। तथाचात्र इकारे ऽचि परे सुलोपे, 'आद् गुणः' इति गुणे सेमामविड्ढिप्रभृतिमिति सिद्धम्।

**सैष दाशरथी राम इति—**सस्—एष दाशरथी राम इत्यत्र 'ससजुषो रुरि'ति रुत्वं बाधित्वा 'सोऽचि लोपे चेत्पादपूरणम्', इतिसूत्रेण एकारेऽचि परे सोर्लोपे 'वृद्धिरेचि' इति वृद्धौ सैष दाशरथी राम इति सिद्धम्।

इति विसर्गसन्धिप्रकरणम्।

---

११५. सस् के सु का लोप होता है अच् परे रहते यदि लोप होने पर ही छन्द के पाद की पूर्ति होती हो।

इति विसर्गसन्धिः ॥

## अथ षड्लिङ्गेषु अजन्तपुंल्लिङ्गाः ।

**११६. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५ ॥** धातुं प्रत्ययं प्रत्ययान्तं च वर्ज्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

**११७. कृत्तद्धितसमासाश्च १।२।४६ ॥** कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः ।

**११८. स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२ ॥** सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ।

---

अथ 'स्वौजसमौडि'त्यादिना स्वादयः वक्ष्यन्ते । तत्र सूत्रे ङ्याप्प्रातिपतिकादित्यधिक्रियते । किं तत् प्रातिपदिकमित्याकाक्षायामाह-**अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति** । अर्थोऽस्यास्तीत्यर्थवत् । नपुंसकलिङ्गानुसारात् शब्दस्वरूपमिति विशेष्यमध्याहार्यम् । न धातुः अधातुः । न प्रत्यय अप्रत्ययः । उभयत्र प्रसज्यप्रतिषेधः । अप्रत्ययपदमावर्तते । तत्रैकं प्रत्ययभिन्नपरम्, द्वितीयं प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् इतिपरिभाषया तदादिविशेष्यकतदन्तविधिना प्रत्ययान्ततदादिभिन्नपरम् । पदं पदं प्रतिपदं तत्र भवं प्रातिपदिकमिति विग्रहः । ततश्च धातुभिन्नं प्रत्ययभिन्नं प्रत्ययान्ततदादिभिन्नं च अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यादिति सूत्रार्थः ।

**कृत्तद्धितसमासाश्चेति** । कृच्च तद्धितश्च समासश्चेति द्वन्द्वः । अर्थवत्सूत्रात्प्रातिपदिकमित्यनुवर्तते, तस्य बहुवचनान्ततया विपरिणामः । कृतः तद्धितस्य च प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषया तदन्तविधिः । ततश्च कृदन्तं तद्धितान्तं समासश्च एते प्रातिपदिकसंज्ञकाः स्युरिति सूत्रार्थः ।

---

११६. धातु प्रत्यय और प्रत्ययान्त से भिन्न अर्थवद् शब्दस्वरूप की प्रातिपदिक संज्ञा होती है ।

११७. कृदन्त तद्धितान्त और समास की भी प्रातिपादिक संज्ञा होती है ।

११८. ङ्यन्त आबन्त और प्रातिपादिक से परे सु आदि २१ प्रत्यय होते हैं ।

**११९. ङ्याप्प्रातिपदिकात् ४।१।१ ॥**

**१२०. प्रत्ययः ३।१।१ ॥**

**१२१. परश्च ३।१।२ ॥** इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ।

**१२२. सुपः १।४।१०१ ॥** सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ।

**१२३. द्व्येकयोर्द्विवचनैकवचने १।४।२२ ॥** द्वित्वैकत्वयोरेते स्तः ।

**१२४. विरामोऽवसानम् १।४।११० ॥** वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ।

---

**ङ्याप्प्रातिपदिकादिति ।** ङी च, आप् च, प्रातिपदिकं चेति समहारद्वन्द्वः । ङ्यापोः प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषया तदन्तविधिः । 'प्रत्ययः', 'परश्च', इतिसूत्रद्वयमधिक्रियते, तस्य बहुवचनान्ततया विपरिणामः । 'स्वौजसि'त्यादिना चास्य सम्बन्धः । ततश्च ङ्यन्ताद् आबन्तात् प्रातिपादिकाच्च परे स्वादयः प्रत्ययाः स्युरिति सूत्रार्थः ।

**सुप इति ।** अत्र सूत्रे तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः' इतिसूत्रात् त्रीणि त्रीणि इतिपदद्वयमनुवर्तते । ततश्च सुप्सम्बन्धीनि त्रीणि त्रीणि वचनानि क्रमश एकवचनद्विवचनबहुवचनसंज्ञानि स्युरिति सूत्रार्थः । प्रथमादिसप्तविभक्तिषु प्रथमप्रत्ययस्य एकवचनसंज्ञा द्वितीयप्रत्ययस्य द्विवचनसंज्ञा तृतीयप्रत्ययस्य बहुवचनसंज्ञेति फलितम् ।

**द्व्येकयोरिति ।** अत्र द्व्येकशब्दौ द्वित्वैकत्वपरौ ततश्च द्वित्वविवक्षायां द्विवचनमेकत्वविवक्षायामेकवचनमित्यर्थः ।

**विरामोऽवसानमिति ।** विरमणं—क्रियाया अभावो, विराम इति विग्रहः । क्रिया चात्र शब्दशास्त्रे प्रत्यासत्त्या वर्णानाम् उच्चारणरूपा गृह्यते । ततश्च वर्णानामुच्चारणाभावोऽवसानसंज्ञः स्यादिति सूत्रार्थः । 'खरवसानयोर्विसर्जनीयः'इत्यादौ, अवसानपदग्राह्यस्याभावस्य बुद्धिकृतमेव परत्वं बोध्यम् ।

**राम इति ।** रमन्ते योगिनोऽस्मिन्निति विग्रहे रम्धातोः हलश्चेत्यधिकरण

---

११९–१२१. पञ्चमाध्याय की समाप्ति तक इन तीनों सूत्रों का अधिकार है ।

१२२. सुप के तीन-तीन वचन क्रम से एकवचन द्विवचन और बहुवचन संज्ञक होते हैं ।

१२३. द्वित्व विवक्षा में द्विवचन और एकत्व की विवक्षा में एकवचन होता है ।

१२४. वर्णों के अभाव को अवसान संज्ञा होती है ।

**१२५. सरूपाणामेकशेष एकविभक्तौ १।२।६४ ॥** एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते।

**१२६. प्रथमयोः पूर्वसवर्णः ६।१।१०२ ॥** अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते।

**१२७. नादिचि ६।१।१०४ ॥** आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ।

---

घञ् प्रत्ययेऽनुबन्धलोपे वृद्धौ कृदन्तत्वात् 'कृत्तद्धितसमासाश्च' इतिसूत्रेण रामं इत्यस्य प्रातिपदिकसंज्ञायां प्रथमाया एकत्वविवक्षायां सुप्रत्ययेऽनुबन्धलोपे 'ससजुषो रुः' इति रुत्वे, 'खरवसानयोर्विसर्जनीयः' इति विसर्गे राम इति सिद्धम्।

**रामौ इति**—रामशब्दस्य 'कृत्तद्धितसमासाश्च' इतिप्रतिपदिकसंज्ञायां द्वित्वविवक्षायां रामरामइतिरूपद्वयोपस्थितौ, 'सरूपाणामेकशेष एकविभक्तौ' इतिसूत्रं प्रवर्तते। एकविभक्तौ इत्यस्य सरूपाणामित्यत्रान्वयः। समानं रूपं येषा तानि सरूपाणि तेषां सरूपाणामिति विग्रहः। अत्र निर्धारणे षष्ठी। 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः'इतिसूत्राद् एव इत्यस्यापकर्षः। एवकारार्थस्य सारूप्येऽन्वयः। दृष्टमित्यस्याध्याहारः। ततश्च एकविभक्तौ येषां शब्दानां सारूप्यमेव दृष्टं तेषामेकस्य शेष इति सूत्रार्थः फलितः। तथाचात्र एकशेषे कृते प्रथमाया द्विवचने औ विभक्तौ 'वृद्धिरेचि' इतिवृद्धि बाधित्वा, 'प्रथमयोः पूर्वसवर्णः' इतिसूत्रं प्रवृत्तम्। अत्र 'अकः सवर्णे दीर्घः', इत्यत अक इति दीर्घ इति चानुवर्तते। 'इको यणची'तिसूत्राद् अचीत्यनुवर्तते। 'एकः पूर्वपरयोरि'त्यधिक्रियते। प्रथमा च प्रथमा च प्रथमे तयोः प्रथमयोरिति विग्रहः। अत्र एकः प्रथमाशब्दो प्रथमाविभक्तिपरः, द्वितीयः प्रथमाशब्दो द्वितीयाविभक्तिपरः। केवलप्रथमाविभक्तिपरत्वं तु न तथा सति प्रथमाया एकवचनद्विवचनयोरेव ग्रहणे शिवोऽर्च्यं इत्यत्र 'नादिचि' इति निषेधात् औजसोरेव दीर्घः स्यादिति 'तस्माच्छसो नः पुंसी'ति सूत्रे तच्छब्देन परामर्शासंभवात्। प्रथमयोरित्यवयवषष्ठी। ततश्च अकः प्रथमाद्वितीयाविभक्त्योरवयवेऽचि परे पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घ एकादेशः स्यादिति सूत्रार्थः। तथाचात्र मकारोत्तरवर्त्तिनः अकाराद् अकः प्रथमाविभक्त्यवयवे, औरूपेऽचि परे पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घं एकादेशे प्राप्ते,

---

१२५. एक विभक्ति में जिनका समान रूप देखा जाय वहाँ उनमें से एक ही शेष रहता है। ( अन्य का लोप होता हैं )।

१२६. अक् से प्रथमा द्वितीया सम्बन्धी अच् परे रहते पूर्वसवर्ण (पूर्वका सवर्ण) दीर्घ एकादेश होता है।

१२७. अवर्ण से इच् परे रहते पूर्वसवर्ण दीर्घ नहीं होता।

**१२८. बहुषु बहुवचनम् १।४।२१ ॥** बहुत्वविवक्षायां बहुवचनं स्यात् ।

**१२९. चुटू १।३।७ ॥** प्रत्ययाद्यौ चुटू इतौ स्तः ।

**१३०. विभक्तिश्च १।४।११० ॥** सुप्तिङौ विभक्तिसंज्ञौ स्तः ।

**१३१. न विभक्तौ तुस्माः १।३।४ ॥** विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सस्य नेत्त्वम् । रामाः ।

---

'नादिचि' इतिसूत्रं प्रवृत्तम् । 'प्रथमयोः पूर्वसवर्ण' इत्यतः पूर्वसवर्ण इत्यनुवर्तते, 'अकः सवर्णे दीर्घ' इत्यतो दीर्घ इत्यनुवर्तते । ततश्च अवर्णाद् इचि परे पूर्वसवर्ण-दीर्घो न भवतीति सूत्रार्थः । तथाचात्र मकारोत्तरवर्तिनः अकाराद् औकारे इचि परे पूर्वसवर्णदीर्घनिषेधे 'वृद्धिरेची'तिवृद्धौ रामौ, इतिसिद्धम् ।

बहुष्विति । बहुशब्दो बहुत्वपरः, तथा बहुत्वविवक्षायां बहुवचनं स्यादिति सूत्रार्थः ।

रामाः इति । राम इत्यस्य प्रातिपदिकसंज्ञायाम् प्रथमाया बहुत्वविवक्षयाम्—अनेकरामशब्दोपस्थितौ जस् प्रत्यये सरूपाणामित्येकशेषे 'चुटू' इतिसूत्रं प्रवर्तते । अत्र 'उपदेशेऽजनुनासिक इत्' इत्यत इदित्यनुवर्तते । तस्य द्विवचनान्ततया विपरिणामः । 'आदिर्ञिटुडवः' इत्यत आदिरित्यनुवर्तते तस्यापि द्विवचनान्ततया विपरिणामः । 'चुटू' इत्यन्वयानुरोधात् । 'षः प्रत्ययस्ये'त्यतः प्रत्ययस्येत्यनुवर्तते । ततश्च प्रत्ययस्य आदिभूतौ चवर्गटवर्गौ इत्संज्ञकौ भवत इति सूत्रार्थः । तथाचात्र नकारस्येत्संज्ञायां लोपे 'विभक्तिश्च' इतिसूत्रप्रवृत्तिः । अत्र 'सुपः' इतिसूत्रं तिङस्त्रीणित्रीणीत्यतस्तिङ इति चानुवर्तते । सुपः तिङश्च विभक्तिसंज्ञकाः स्युरिति सूत्रार्थः । तेन विभक्तिसंज्ञायां सकारस्य हलन्त्यमिति इत्संज्ञाप्राप्तौ 'न विभक्तौ तुस्माः' इतिसूत्रं प्रवृत्तम् । तु सू म् एषां द्वन्द्वः । 'उपदेशेऽजनुनासिक इत्' इत्यत इदित्यनुवर्तते । तस्य तुस्मा इत्यत्रान्वयानुरोधाद् बहुवचनान्ततया विपरिणामः । ततश्च विभक्तिस्थास्तवर्गसकारमकारा इत्संज्ञका न स्युरिति सूत्रार्थः । तथा चात्र सकारस्येत्संज्ञानिषेधे राम अस् इति स्थिते 'अकः सवर्णे दीर्घः' इतिदीर्घं बाधित्वा 'अतो गुणे' इतिपररूपे 'प्रथमयोः पूर्वसवर्णः' इतिपूर्वसवर्णदीर्घे च प्राप्ते परत्वात् पूर्वसवर्णदीर्घे 'ससजुषो रुः' इतिरुत्वे 'खरवसानयोर्विसर्जनीयः' इतिविसर्गे रामाः, इति सिद्धम् ।

---

१२८. बहुत्व की विवक्षा में बहुवचन होता है ।

१२९. प्रत्यय के आदि में स्थित चवर्ग और टवर्ग की इत्संज्ञा होती है ।

१३०. सुप् और तिङ् की विभक्ति संज्ञा होती है ।

१३१. विभक्ति में स्थित तवर्ग सकार मकार की इत् संज्ञा नहीं होती है ।

**१३२. एकवचनं सम्बुद्धिः २।३।४९ ॥** सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ।

**१३३. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१४ ॥** यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन् प्रत्यये परेऽङ्गसंज्ञं स्यात् ।

**१३४. एङ्ह्रस्वात्सम्बुद्धेः ६।१।६७ ॥** एङन्ताद्ह्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः ।

**१३५. अमि पूर्वः ६।१।१०७ ॥** अकोऽम्यचि पूर्वरूपमेकादेशः । रामम् । रामौ ।

---

हे राम इति । रामशब्दस्य 'कृत्तद्धिते'तिप्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् सम्बोधने प्रथमाया एकवचने सुप्रत्ययेऽनुबन्धलोपे 'एकवचनं सम्बुद्धिः' इतिसूत्रं प्रवृत्तम् । अत्र 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यतः प्रथमापदमनुवर्तते; तस्य षष्ठ्यन्ततया विपरिणामः । 'सम्बोधने च' इत्यतः सम्बोधने इत्यनुवर्तते । ततश्च सम्बोधने प्रथमाविभक्तेरेकवचनं सम्बुद्धिसंज्ञं स्यादिति सूत्रार्थः । तथाचात्र सोः सम्बुद्धिसंज्ञायां 'यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्' इतिसूत्रं प्रवर्तते । अत्र यः इति शब्दस्वरूपमिति च अध्याह्रियते । तत् प्रकृतिरूपम् आदिर्यस्य तत्तदादीति विग्रहः । ततश्च यस्मात्–प्रकृतिभूतात् यः प्रत्ययो विधीयते तस्मिन् प्रत्यये परे तदादि शब्दस्वरूपम् अङ्गसंज्ञकम्भवतीति सूत्रार्थः । अत्र सुप्रत्ययो रामशब्दाद् विधीयते तस्मिन् परे तदादिशब्दस्वरूपं व्यपदेशिवद्भावे न राम इति, तस्य अङ्गसंज्ञायाम् । 'एङ्ह्रस्वात्सम्बुद्धेः' इतिसूत्रं प्रवृत्तम् । अत्र 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इतिन्यायात्सम्बुद्ध्या अङ्गस्याक्षेपः तत्र एङ्ह्रस्वादिति विशेषणम् । 'येन विधिस्तदन्तस्य' इत्यनेन अङ्गविशेष्यकतदन्तविधिः । 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इत्यतः प्रथमान्तं हल्इत्यनुवर्तते । 'लोपो व्योर्वलि; इत्यतो लोप इत्यनुवर्तते । सम्बुद्धेरित्यवयवषष्ठी । ततश्च एङन्तादङ्गाद् ह्रस्वान्ताङ्गाच्च परं यत् सम्बुद्ध्यवयवभूतं हल् तस्य लोप इतिसूत्रार्थः । तथाचात्र राम इत्याकारकह्रस्वान्तादङ्गात् परं सम्बुद्ध्यवयवभूतं हल् स् इति तस्य लोपे हे शब्दस्य प्राक्प्रयोगे हे राम इति सिद्धम् । हे रामौ । हे रामा । इत्यनयोः सिद्धिप्रकारश्च पूर्ववद् बोध्यः ।

---

१३२. सम्बोधन में प्रथमा के एकवचन ( सु ) की सम्बुद्धि संज्ञा होती है ।

१३३. जो प्रत्यय जिससे किया जाय तदादि शब्द रूप की उस प्रत्यय के परे रहते अङ्ग संज्ञा होती है ।

१३४. एङन्त ह्रस्वान्त अङ्ग से परे सम्बुद्धि के हल् का लोप होता है ।

१३५. अक् से अम् सम्बन्धी अच् परे रहते पूर्वपर के स्मान में पूर्वरूप एकादेश होता है ।

**१३६. लशक्वतद्धिते १।३।८॥** तद्धितवर्जाः प्रत्ययाद्या लशकवर्गा इतः स्युः ।

**१३७. तस्माच्छसो नः पुंसि ६।१।१०३ ॥** पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ।

**१३८. अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२ ॥** अट् कवर्गं पवर्गं आङ् नुम् एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः समानपदे । इति प्राप्ते ।

**१३९. पदान्तस्य ८।४।३७ ॥** नस्य णो न । रामान् ।

---

**रामम् इति ।** रामशब्दस्य 'कृत्तद्धितसमासाश्च' इतिप्रातिपदिकसंज्ञायां प्रातिपदिकत्वाद् द्वितीयैकवचने अम् प्रत्यये 'न विभक्तौ तुस्माः, इति मकारेत्संज्ञानिषेधे 'अकः सवर्णे दीर्घ' इतिदीर्घं बाधित्वा 'अतो गुणे' इतिपररूपं प्राप्तम् तद्बाधित्वा 'प्रथमयोः पूर्वसवर्ण' इतिपूर्वसवर्णदीर्घे प्राप्ते 'अमि पूर्वः इतिसूत्रं प्रवृत्तम् । अत्र 'अकः सवर्णे दीर्घः' इत्यतः अक इति पञ्चम्यन्तम् 'इको यणचि' इतिसूत्राद् अचीति चानुवर्तते । एकः पूर्वपरयोरित्यधिक्रियते । ततश्च अकः परः अमि विद्यमानो योऽच् तस्मिन् परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यादितिसूत्रार्थः । तथाचात्र मकारोत्तरवर्तिनः अकाराद् अमोऽचि परे पूर्वपरयोः स्थाने पूर्वरूपे राममिति सिद्ध्यति ।

**रामौ इति ।** रामशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वाद् द्वितीयाद्विवचने औट्प्रत्ययेऽनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति प्राप्तदीर्घस्य 'नादिचि' इति निषेधे 'बृद्धिरेचि' इति सूत्रेण मकारोत्तरवर्तिनः अकाराद् औकारे एचि परे पूर्वपरयोः स्थाने औकारे बृद्धौ रामौ इति सिद्धम् ।

**रामान् इति ।** रामइत्यस्य कृत्तद्धितेति प्रातिपदिकसंज्ञायां प्रातिपदिकत्वाद् द्वितीयाबहुवचने शस्प्रत्यये 'लशक्वतद्धिते, इतिसूत्रप्रवृत्तिः । ल श कु एषां समाहारद्वन्द्वः । अत्र 'उपदेशेऽजनुनासिक इत्' इत्यत इत् इति, आदिर्ञिटुडवः' इत्यत आदिरिति' 'षः प्रत्ययस्य' इत्यतः प्रत्यस्य इति चानुवर्तते । अतद्धिते इति षष्ठ्यर्थे

---

१३६. तद्धित प्रत्यय को छोड़कर अन्य समस्त प्रत्ययों के आदि में स्थित लकार शकार और कवर्ग की इत् संज्ञा होती है ।

१३७. पूर्व सवर्ण दीर्घ से परे शस् के सकार को नकार आदेश होता है ।

१३८. अट्, कवर्ग, पवर्ग; आङ्, नुम् (अनुस्वार) इनका पृथक्-पृथक् जितनो का सम्भव हो, व्यवधान होने पर भी रेफ अथवा षकार से परे नकार को णकार होता है समानपद में ।

१३९. पदान्त में स्थित न को ण नहीं होता ।

**१४०. टाङसिङसामिनात्स्याः ७।१।१२॥** अदन्तादङ्गाट्टादीनामिनादयः स्युः। णत्वम्। रामेण।

---

सप्तमी। ततश्च तद्धितभिन्नप्रत्ययस्य आदिभूताः लकारशकारकवर्गा इत्संज्ञकाः स्युरिति सूत्रार्थः। तथाचात्र शसः शकारस्येत्संज्ञायां लोपे राम अस् इतिस्थिते 'अकः सवर्णे दीर्घ' इतिबाधित्वा 'अतो गुणे' इतिपररूपे प्राप्ते तद्बाधित्वा 'प्रथमयोः पूर्वसवर्णः' इतिपूर्वसवणदीर्घे रामास् इति स्थिते 'तस्माच्छसो नः पुंसि' इतिसूत्रं प्रवृत्तम्। तच्छब्दस्य पूर्वपरामर्शकत्वेन तस्मादित्यनेन सन्निहितत्वात् पूर्वसवर्णदीर्घस्य परामर्शः। 'तस्मादित्युत्तरस्य' इतिपरिभाषया तस्मादिति पञ्चम्या परत्वलाभः। शस इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते। स चावयवः अर्थात् सकार एव, अन्यस्यासम्भवात्। ततश्च पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य स्थाने नकारः स्यात्पुंल्लिङ्गे इतिसूत्रार्थः। तथाचात्र सकारस्य नकारे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इतिसूत्रं प्रवर्तते। अट् कु पु आङ् नुम् एषां द्वन्द्वः। तत एतैर्व्यवाय इति तत्पुरुषः। अत्र 'रषाभ्यां नो णः समानपदे' इतिसूत्रमनुवर्तते। अडादिभिः समस्तैर्व्यवधानस्य कुत्राप्यसम्भवः। एकैकव्यवायेऽपीति व्याख्यापि न युक्ता रामेणेत्यादावनेकव्यवायेन णत्वाप्राप्तेः। अतः अडादिभिर्व्यस्तैर्यथासम्भवं मिलितैश्चेति व्याख्येयम्। ततश्च अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रेफात्परस्य षकारात्परस्य च नकारस्य स्थाने णकारः स्यात् समानपदे इतिसूत्रार्थः फलितः। तथाचात्र अट्पवर्गयोर्व्यवधानेऽपि रेफात्परस्य नकारस्य स्थाने णकारे प्राप्ते 'पदान्तस्य' इतिसूत्रं प्रवृत्तम्। अत्र रषाभ्यां नो ण इत्यनुवर्तते। 'न माभूपूकमिगमिप्यायीवेपाम्,' इत्यतो न इत्यनुवर्तते। ततश्च रेफषकाराभ्यां परस्य पदान्तस्य नकारस्य स्थाने णकारो न स्यादिति सूत्रार्थः। तथाचात्र नकारस्य णकारनिषेधे रामान् इति सिद्धम्।

**रामेण इति।** रामशब्दस्य 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् तृतीयैकवचने टाप्रत्यये टकारस्येत्संज्ञालोपयोः कृतयोः राम इत्यस्याङ्गसंज्ञायां 'टाङसिङसामिनात्स्याः'इतिसूत्रं प्रवर्तते। अत्र'अङ्गस्य'इतिसूत्रमधिक्रियते, तस्य पञ्चम्यन्तत्वेन विपरिणामः। 'अतो भिस ऐस', इत्यतः 'अत'इति पञ्चम्यन्तमनुवर्तते, तच्चाङ्गस्य विशेषणम्। ततस्तदन्तविधिः। पञ्चम्या परत्वलाभः। ततश्च अकारान्तादङ्गात्परेषां टा ङसि ङस् एतेषां स्थाने क्रमाद् इन्, आत्, स्य एते आदेशाः स्युरिति सूत्रार्थः। तथाचात्र राम इत्यस्माद् अकारान्तादङ्गात्परस्य टाइत्यस्य

---

१४०. अदन्त अङ्ग से परे टा, ङसि; ङस् के स्थान में क्रम से इन, आत्, स्य आदेश होते हैं।

**१४१. सुपि च ७।३।१०२ ॥** यञादौ सुप्यतोऽङ्गस्य दीर्घः । रामाभ्याम् ।

**१४२. अतो भिस ऐस् ७।१।९ ॥** अदन्तादङ्गाद्भिस ऐस् स्यात् । अनेकाल् शित्सर्वस्य । रामैः ।

**१४३. ङेर्यः ७।१।१३ ॥** अदन्तादङ्गात्परस्य ङेर्यादेशः ।

**१४४. स्थानिवदादेशोऽनल्विधौ १।१।५६ ॥** आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् सुपि चेति दीर्घः । रामाय ।

---

इनादेशे आद्गुणे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नकारस्य णकारे रामेण इतिसिद्धम् ।

**रामाभ्याम् इति ।** रामेत्यस्य 'कृत्तद्धिते'तिप्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् तृतीयाद्विवचने भ्याम् प्रत्यये, सुपि च इतिसूत्रं प्रवर्तते । अत्र 'अतो दीर्घो यञि' इतिसूत्रमनुवर्तते । यञि इति सुपि इत्यस्य विशेषणम् । 'यस्मिन् विधिस्तदादावल्ग्रहणे' इतिपरिभाषोपस्थितिः । सप्तम्यन्ते अल्ग्रहणे विशेषणीभूते यो विधिरारभ्यते स तदादौ बोध्यः इति तदर्थः । यञि इतिसप्तम्यन्ते विशेषणीभूते'सुपि चे'-तिसूत्रेण आरभ्यमाणो दीर्घविधिर्यञादौ भविष्यति । 'अङ्गस्ये'त्यधिक्रियते । तस्य अत इति विशेषणम् । ततश्च अदन्तस्याङ्गस्य दीर्घः स्यात् यञादौ सुपि परे इति सूत्रार्थः । सुप् इति सुइत्यारभ्य सुपः पकारेण प्रत्याहारः । तथाचात्र भ्यामि परे अलोऽन्त्यपरिभाषया मकारोत्तरवर्तिनः अकारस्य दीर्घे रामाभ्यामिति सिद्धम् ।

**रामैः इति ।** रामेत्यस्य 'कृत्तद्धितसमासाश्चे'तिप्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् तृतीयाबहुवचने भिस्प्रत्यये राम भिस्, इतिस्थिते 'न विभक्तौ तुस्माः' इतिसकारस्य इत्संज्ञानिषेधे, अतो भिस ऐस् इतिसूत्रं प्रवृत्तम् । अत्र अङ्स्येत्यधिक्रियते । तस्य अत इति पञ्चम्यन्तेनान्वयानुरोधात् पञ्चम्यन्ततया विपरिणामः । विशेषणत्वाद् 'येन विधिस्तदन्तस्य' इति तदन्तविधिः । ततश्च आकारान्तादङ्गात्परस्य भिसः स्थाने ऐस् आदेशः स्यादिति सूत्रार्थः । तथाचात्र अनेकाल्त्वाद् भिस ऐसादेशे 'वृद्धिरेची'ति वृद्धौ 'ससजुषोरुँ'ति रुत्वे 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण रेफस्य विसर्गे रामैः इति सिद्धम् ।

**रामाय इति ।** रामशब्दस्य 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसंज्ञायां प्रातिपदिकत्वाच्चतुर्थ्येकवचने ङेप्रत्यये ङस्येत्संज्ञायां लोपे 'ङेर्यः' इतिसूत्रं प्रवृत्तम् । अत्र

---

१४१. यञादि सुप् परे रहते अदन्त अङ्ग को दीर्घ होता है ।

१४२. अदन्त अङ्ग से परे भिस् के स्थान में ऐस् आदेश होता है ।

१४३. अदन्त अङ्ग से परे ङे के स्थान में य आदेश होता है ।

१४४. आदेश स्थानिवत् होता है परन्तु स्थानी-सम्बन्धी जो अल् तदाश्रय विधि कर्तव्य हो तो स्थानिवद्भाव नहीं होता ।

रामाभ्याम् ।

१४५. **बहुवचने झल्येत् ७।३।१०३ ॥** झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः । सुपि किम् पचध्वम् ।

१४६. **वाऽवसाने ८।४।५६ ॥** अवसाने झलां चरो वा । रामात्, रामाद्

'अतो भिस ऐस्' इति सूत्राद् अत इत्यनुवर्तते । अङ्गस्येत्यधिक्रियते, तस्य पञ्चम्यन्ततया विपरिणामः । तदन्तविधिः । ततश्च अकारान्तादङ्गात् परस्य ङे इत्येतस्य यादेशः स्यादिति सूत्रार्थः । तथाचात्र राम इत्यकारान्तादङ्गात् परस्य ङे इत्यस्य यादेशे राम य इति जाते 'स्थानिवदादेशोऽनल्विधौ' इतिसूत्रप्रवृत्तिः । स्थानिना तुल्यं स्थानिवत्, स्थानिवृत्तिधर्मवान् इति फलितम् । अला विधिरल्विधिः, अलः परस्य विधिरल्विधिः, अलो विधिरल्विधिः, अलि विधिरल्विधिः, इति चतुर्विधसमासेन अल्विधिरित्यस्य अलाश्रयविधिरित्यर्थलाभः । ततश्च आदेशः स्थानिवृत्तिधर्मवान् भवति अलाश्रयविधौ तु नेति सूत्रार्थः । तथाचात्र स्थानी ङे इति तद्वृत्तिर्धर्मः सुप्त्वं तस्य यादेशेऽतिदेशेन 'सुपि च' इति सूत्रेण यरूपे यञादौ सुपि परे मकारोत्तरवर्तिनः अकारस्य दीर्घे रामाय इति सिद्धम् ।

**रामाभ्याम् इति ।** राम इत्यस्य प्रातिपदिकत्वाच्चतुर्थीद्विवचने भ्याम् प्रत्यये 'सुपि च' इति सूत्रेण दीर्घे रामाभ्याम् इति सिद्धम् ।

**रामेभ्यः, इति ।** राम इत्यस्य 'कृत्तद्धितसमासाश्चेति' प्रातिपदिकसंज्ञायां प्रातिपदिकत्वाच्चतुर्थीबहुवचने भ्यस्प्रत्यये रामभ्यस् इतिस्थिते 'न विभक्तौ तुस्माः' इति सकारेत्संज्ञानिषेधे 'सुपि च' इतिदीर्घे प्राप्ते 'बहुवचने झल्येत्' इतिसूत्रं प्रवृत्तम् । अत्र 'अतो दीर्घो यञि' इत्यत अत इति 'सुपि च' इत्यतः सुपीति चानुवर्तते । झलि इति सुपि इत्यस्य विशेषणम् 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिः । अङ्गस्येत्यधिकियते तदन्तविधिः । ततश्च झलादौ बहुवचने सुपि परे अदन्ताङ्गस्य एकारः स्यादिति सूत्रार्थः । तथाचात्र भ्यसि परे अलोऽन्त्यपरिभाषया मकारोत्तरवर्तिनः अकारस्य एकारे कृते 'ससजुषो रुरिति' रुत्वे 'खरवासनयोर्विसर्जनीयः' इति रेफस्य विसर्गे रामेभ्य इति सिद्धम् ।

**रामात् इति ।** राम इत्यस्य 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञायां प्रातिपदिकत्वाद् ङसि प्रत्ययेऽनुबन्धलोपे 'टाङसिङसामिनात्स्याः' इतिसूत्रेण अस् इत्यस्य आत् इत्यादेशे 'अकः सवर्णे दीर्घः' इति दीर्घे 'झलां जशोऽन्ते' इति तका-

१४५. झलादि बहुवचन सुप् परे रहते अदन्त अङ्ग को एकार आदेश होता है ।
१४६. अवसान में झलों के स्थान में चर् होता है विकल्प से ।

रामाभ्याम् । रामेभ्यः । रामस्य ।

**१४७. ओसि च ७।३।१०४ ॥** ओसि परेऽतोऽङ्गस्यैकारः । रामयोः ।

**१४८. ह्रस्वनद्यापो नुट् ७।१।५४ ॥** ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ।

---

रस्य जश्त्वेन दकारे 'वाऽवसाने' इतिसूत्रं प्रवृत्तम्, अत्र 'झलां जश् झशि' इत्यतो झलामिति 'अभ्यासे चर्च' इत्यतः चर् इति चानुवर्तते । ततश्च अवसाने झलां स्थाने चरो वा स्युरिति सूत्रार्थः । तथाचात्र दकारस्य चर्त्वेन तकारे रामात् इति— चर्त्वाभावपक्षे रामाद् इति च सिद्धम् । रामाभ्याम्, रामेभ्यः, अनयोः सिद्धिप्रकारः पूर्ववद्बोध्यः ।

**रामस्य इति ।** राम इत्यस्य 'कृत्तद्धितेति प्रातिपदिकसंज्ञायां प्रातिपादिकत्वात् षष्ठ्येकवचने ङस्प्रत्यये 'लशक्वतद्धिते' इति ङकारस्येत्संज्ञायां लोपे 'टाङसिङसामिनात्स्याः' इतिसूत्रेण असः स्थाने स्यादेशे रामस्येति सिद्धम् ।

**रामयोः इति ।** राम इत्यस्य 'कृत्तद्धितसमासाश्चेति' प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् षष्ठीद्विवचने ओस् प्रत्यये राम ओस् इतिस्थिते 'न विभक्तौ तुस्माः' इतिसकारेत्संज्ञानिषेधे 'ओसि च' इतिसूत्रं प्रवृत्तम् । अत्र 'अतो दीर्घो यञि' इतिसूत्राद् अत इत्यनुवर्तते । अङ्गस्येत्यधिक्रियते । अदन्ताङ्गस्य एकारः स्याद् ओसि परे इतिसूत्रार्थः । अलोऽन्त्यपरिभाषाया मकारोत्तरस्य अकारस्य स्थाने एकारे रामे ओस् इति जाते 'एचोऽयवायावः' इति ओकारे परे एकारस्य अय् आदेशे 'ससजुषो रुः' इति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इतिरफेस्य विसर्गे रामयोः इति सिद्धम् ।

**रामाणाम् इति ।** राम इत्यस्य 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् षष्ठीबहुवचने आम् प्रत्यये राम आम् इतिस्थिते । 'न विभक्तौ तुस्माः' इतिमकारेत्संज्ञानिषेधे 'ह्रस्वनद्यापो नुट्' इतिसूत्रं प्रवृत्तम् । अत्र ह्रस्वश्च, नदी च, आप् च, इति समाहारद्वन्द्वः । अङ्गस्येत्यधिक्रियते, तस्य पञ्चम्यन्तत्वेन विपरिणामः । ततस्तदन्तविधिः । 'आमि सर्वनाम्नः सुट्' इत्यत आमि इत्यनुवर्तते । 'तस्मादित्युत्तरस्य' इतिपरिभाषया 'ह्रस्वनद्याप' इत्यत्र पञ्चम्या आमि इत्यत्र सप्तम्याः षष्ठी प्रकल्प्यते परत्वांशलाभश्च । ततश्च ह्रस्वान्ताद्, नद्यन्ताद्, आबन्ताच्चाङ्गात्परस्य आमो नुडागमः स्यादितिसूत्रार्थः । अत्र राम इति ह्रस्वान्ताद-

---

१४७. ओस् परे रहते अदन्त अङ्ग को एकार आदेश होता है ।

१४८. ह्रस्वान्त नद्यन्त और आबन्त अङ्ग से परे आम् को नुट् आगम होता है ।

**१४९. नामि ६।४।३** ॥ नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् । रामाणाम् रामे । रामयोः । सुपि-एत्वे कृते ।

**१५०. आदेशप्रत्यययोः ८।३।५९** ॥ इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च यः सस्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ।

---

ङ्गात्परस्य आमो नुडागमेऽनुबन्धलोपे रामनाम इतिस्थिते 'नामि' इति सूत्रं प्रवृत्तम् । अत्र 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या 'अचश्च' इतिपरिभाषया अच इत्यस्योपस्थितिः । अङ्गस्येत्यधिक्रियते । तद्विशेष्यकतदन्तविधिः । ततश्च अजन्ताङ्गस्य दीर्घः स्याद् नामि परे इति सूत्रार्थः । तथा चात्र मकारोत्तराकारस्य अलोऽन्त्य परिभाषया दीर्घे रामनाम् इति जाते 'अट्कुप्वाङ्नुम्व्यवायेऽपि, इति अट्पवर्गव्यवधानेऽपि रेफात्परस्य नकारस्य स्थाने णकारे रामाणाम् इति सिद्धम् ।

**रामे** इति । राम इत्यस्य प्रातिपदिकत्वाङ्डिप्रत्ययेऽनुबन्धलोपे 'आद्गुणः' इतिगुणे रामे इति सिद्धम् । रामयोरित्यस्य सिद्धिस्तु पूर्ववद्बोध्या ।

**रामेषु** इति । राम इत्यस्य 'कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् सप्तमीबहुवचने सुप्प्रत्ययेऽनुबन्धलोपे 'बहुवचने झल्येत्' इति एत्वे कृते 'आदेशप्रत्यययोः' इतिसूत्रं प्रवर्तते । अत्र 'अपदान्तस्य मूर्धन्यः 'इण्कोः' इतिसूत्रद्वयमधिक्रियते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तं पदमनुवर्तते । ततश्च इण्कवर्गाभ्यां परस्य अपदान्तस्य आदेशरूपसकारस्य प्रत्ययावयवसकारस्य च स्थाने मूर्धन्यादेशः स्यादिति सूत्रार्थः । तथाचात्र 'स्थानेऽन्तरतमः' इतिपरिभाषया मकारोत्तरवर्तिन एकाराद् इणः परस्य सुप्प्रत्ययावयवस्य विवृताघोषप्रयत्नवतः सकारस्य स्थाने विवृताघोषप्रयत्नवति मूर्धन्यादेशे षकारे कृते रामेषु इति सिद्धम् ।

**रामशब्दस्य रूपाणि**

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | रामः | रामौ | रामाः । |
| द्वितीया | रामम् | रामौ | रामान् । |
| तृतीया | रामेण | रामाभ्याम् | रामैः । |
| चतुर्थी | रामाय | रामाभ्याम् | रामेभ्यः । |

---

१४९. नाम् परे रहते अजन्त अङ्ग को दीर्घ होता है ।

१५०. इण् कवर्ग से परे अपदान्त आदेशरूप और प्रत्ययावयव सकार को मूर्धन्य आदेश होता है ।

**१५१. सर्वादीनि सर्वनामानि १।१।२७ ॥** सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् इदम् इदस् एक द्वि युष्मद् अस्मद् भवतु किम् ।

**१५२. जसः शी ७।१।१७ ॥** अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ।

---

| | | | |
|---|---|---|---|
| पञ्चमी | रामात्-रामाद् | रामाभ्याम् | रामेभ्यः । |
| षष्ठी | रामस्य | रामयोः | रामाणाम् । |
| सप्तमी | रामे | रामयोः | रामेषु । |
| संबोधनम् | हे राम | हे रामौ | हे रामाः । |

**कृष्णशब्दस्य रूपाणि—**कृष्णः, कृष्णौ, कृष्णाः । कृष्णम्, कृष्णौ, कृष्णान् । कृष्णेन, कृष्णाभ्याम्, कृष्णैः । कृष्णाय, कृष्णाभ्याम्, कृष्णेभ्यः । कृष्णात्-कृष्णाद्, कृष्णाभ्याम्, कृष्णेभ्यः । कृष्णस्य, कृष्णयोः, कृष्णानाम् । कृष्णे, कृष्णयोः, कृष्णेषु । हे कृष्ण, हे कृष्णौ, हे कृष्णाः ।

**सर्वादीनीति ।** सर्वः सर्वशब्दः, आदिः प्रथमावयवः येषां तानि सर्वादीनि । शब्दस्वरूपाणीति अध्याह्रियते बहुव्रीहिर्द्विधा भवति, तद्गुणसंविज्ञानः, अतद्गुणसंविज्ञानश्चेति । तस्यान्यपदार्थस्य गुणाः विशेषणानि तेषां संविज्ञानं क्रियान्वयितया विज्ञानं यत्र स तद्गुणसंविज्ञान इति विग्रहः । यथा लम्बकर्णमानयेत्यादौ, लम्बकर्णविशिष्ट एवानीयत इति तद्गुणसंविज्ञानः । न तद्गुणसंविज्ञानः अतद्गुणसंविज्ञान इति व्युत्पत्तिः । यथा चित्रगुमानयेत्यादौ । यस्य चित्राः गावः सन्ति स एवानीयते न तु चित्रा गावोऽपि इत्यतद्गुणसंविज्ञानः । अत्र तद्गुणसंविज्ञानबहुव्रीहिस्वीकारेण सर्वशब्दस्यापि संग्रहः । ततश्च सर्वादिगणपठितानि शब्दस्वरूपाणि सर्वनामसंज्ञकानि स्युरिति सूत्रार्थः फलितः । सर्वादयश्च पञ्चत्रिंशत् ।

**सर्वे इति ।** सर्वशब्दस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकमि'तिप्रातिपदिकसंज्ञायां 'सर्वादीनि सर्वसामानि' इति सर्वनामसंज्ञायां प्रातिपदिकत्वात् प्रथमाबहुचने जस् प्रत्ययेऽनुबन्धलोपे पूर्वसवर्णदीर्घे प्राप्ते, 'जसः शी' इतिसूत्रं प्रवर्तते । अत्र 'अतो भिस् ऐस्' इतिसूत्रात् अत इत्यनुवर्तते । 'सर्वनाम्नः स्मै' इत्यतः सर्वनाम्न इत्यनुवर्तते । तदन्तविधिः । ततश्च अदन्तादङ्गात् परस्य सर्वनाम्नो विहितस्य जसूप्रत्य-

---

१५१. सर्वादि शब्द रूप सर्वनामसंज्ञक होते हैं ।

१५२. अदन्त सर्वनाम से परे "जस्" को "शी" आदेश होता है ।

**१५३. सर्वनाम्नः स्मै ७।१।१४ ॥** अदन्तादङ्गात्परस्य सर्वनाम्नो ङेः स्मै । सर्वस्मै ।

**१५४. ङसिङ्योः स्मात्स्मिनौ ७।१।१५ ॥** अदन्तादङ्गात्परस्य सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ।

**१५५. आमि सर्वनाम्नः सुट् ७।१।५२ ॥** अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् ।

---

यस्य स्थाने शी आदेशः स्यादिति सूत्रार्थः । अनेकाल्त्वात् श्यादेशस्य 'अनेकाल् शित्सर्वस्य' इति शसः श्यादेशेऽनुबन्धलोपे 'आद्गुणः' इति गुणे सर्वे इति सिद्धम् ।

**सर्वस्मै इति ।** सर्वशब्दस्य प्रातिपदिकसंज्ञायां सर्वनामसंज्ञायां च प्रातिपदिकत्वाच्चतुर्थ्येकवचने ङेप्रत्ययेऽनुबन्धलोपे 'ङेर्यः' इति यादेशे प्राप्ते, तं प्रबाध्य 'सर्वनाम्नः स्मै' इतिसूत्रं प्रवृत्तम् । अत्र 'अतो भिस ऐस्' इत्यस्माद् अत इति ङेर्यः इत्यतो ङेरिति चानुवर्तते । तदन्तविधिः । ततश्च अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्य ङेइत्येतस्य स्थाने स्मै इत्यादेशः स्यादिति सूत्रार्थः । तथाचात्र सर्वशब्दाद् ङे इत्यस्य स्थाने स्मै आदेशे सर्वस्मै इति सिद्धम् ।

**सर्वस्मात् इति ।** सर्वशब्दस्य प्रातिपदिकसंज्ञायां सर्वनामसंज्ञायां च प्रातिपदिकत्वात्पञ्चम्येकवचने ङसिप्रत्ययेऽनुबन्धलोपे 'टाङसिङसामिनात्स्याः' इतिसूत्रेण आत् आदेशे प्राप्ते 'ङसिङ्योः स्मात्स्मिनौ' इति सूत्रं प्रवृत्तम् । अत्र 'अतो भिस ऐस्' इत्यस्माद् अत इति 'सर्बनाम्नः स्मै' इत्यतः सर्वनाम्न इति चानुवर्तते । तदन्तविधिः । ततश्च अदन्तात्सर्वनाम्नः परस्य ङसि इत्यस्य स्थाने स्मात् इति ङिइत्यस्य स्थाने स्मिन् इति चादेशः स्यादिति सूत्रार्थः । तथा चात्र अदन्तात्सर्ननाम्नः सर्वशब्दाद्विहितस्य ङसि इत्यस्य स्थाने स्मात् इत्यादेशे कृते 'झलां जशोऽन्ते' इतिजश्त्वे कृते वाऽवसाने इति वैकल्पिके चर्त्वे सर्वस्मात् इति, चर्त्वाभावपक्षे सर्वस्माद् इति च सिद्धम् ।

**सर्वेषामिति ।** सर्व इत्यस्य प्रातिपदिकसंज्ञायां सर्वनामसंज्ञायां च प्रातिपदिकत्वात् षष्ठीबहुवचने आम् प्रत्यये 'न विभक्तौ तुस्माः' इति मकारेत्संज्ञानिषेधे सर्व आम् इतिस्थिते 'ह्रस्वनद्यापो नुट्' इति सूत्रेण आमो नुडागमे प्राप्ते 'आमि सर्व-

---

१५३. अदन्त सर्वनाम से परे ङे को स्मै आदेश होता है ।

१५४. अदन्त सर्वनाम से परे ङसि और ङि को क्रम से स्मात् और स्मिन् आदेश होते हैं ।

१५५. अवर्णान्त अङ्ग से परे सर्वनाम से किये गये आम् को सुट आगम होता है ।

एवं विश्वादयोऽप्यदन्ताः । उभशब्दो नित्यं द्विवचनान्तः । उभौ । उभौ । उभाभ्याम् । उभाभ्याम् । उभाभ्याम् । उभयोः । उभयोः । तस्येह पाठोऽकजर्थः ।

---

नाम्नः सुट्' इतिसूत्रप्रवृत्तिः । अत्र 'आज्जसेरसुक्' इत्यनुवर्तते । 'अङ्गस्ये'त्यधिक्रियते, तस्य पञ्चम्यन्ततया विपरिणामः । अङ्गविशेष्यकतदन्तविधिः । 'तस्मादित्युत्तरस्य' इतिपरिभाषया आत् इति पञ्चम्या आमि इत्यत्र सप्तम्याः षष्ठीप्रकल्पनम् परत्वलाभश्च । सर्वनाम्न इति विहितविशेषणम् । ततश्च अवर्णान्तादङ्गात्परस्य सर्वनामसंज्ञकाद्विहितस्यामः सुट् आगमः स्यादिति सूत्रार्थः । तथा चात्र सर्वशब्दाद्विहितस्यामः सुडागमेऽनुबन्धलोपे 'बहुवचने झल्येत्' इत्येत्वे 'आदेशप्रत्यययोः' इतिसूत्रेण बकारोत्तरवर्तिन एकाराद् इणः परस्य 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इतिपरिभाषया आम्ग्रहणेन सामो ग्रहणात् अपदान्तस्य प्रत्ययावयवस्य सामः सकारस्य मूर्धन्यादेशे षकारे कृते सर्वेषाम् इति सिद्धम् ।

**सर्वस्मिन् इति** । सर्व इत्यस्य प्रातिपदिकसंज्ञायां सर्वनामसंज्ञायां च प्रातिपदिकत्वात् सप्तम्येकवचने ङिप्रत्ययेऽनुबन्धलोपे 'आद् गुणः' इतिगुणे प्राप्ते 'ङसिङ्योः स्मात्स्मिनौ' इतिसूत्रेण स्मिन् आदेशे सर्वस्मिन् इति सिद्धम् । सर्वशब्दस्य शेषरूपाणां सिद्धिप्रकारश्च रामशब्दवद् बोध्यः ।

**सर्वशब्दस्य रूपाणि** । सर्वः, सर्वौ, सर्वे । सर्वम्, सर्वौ, सर्वान् । सर्वेण, सर्वाभ्याम्, सर्वैः । सर्वस्मै, सर्वाभ्याम्, सर्वेभ्यः । सर्वस्मात्-सर्वस्माद्, सर्वाभ्याम्, सर्वेभ्यः । सर्वस्य, सर्वयोः, सर्वेषाम् । सर्वस्मिन्, सर्वयोः, सर्वेषु । हे सर्व, हे सर्वौ, हे सर्वाः ।

**विश्वशब्दस्य रूपाणि** । विश्वः, विश्वौ, विश्वे । विश्वम्, विश्वौ, विश्वान् । विश्वेन, विश्वाभ्याम्, विश्वैः । विश्वस्मै, विश्वाभ्याम्, विश्वेभ्यः । विश्वस्मात्-विश्वस्माद्, विश्वाभ्याम्, विश्वेभ्यः । विश्वस्य, विश्वयोः, विश्वेषाम् । विश्वस्मिन्, विश्वयोः, विश्वेषु । हे विश्व, हे विश्वौ, हे विश्वाः ।

**अकजर्थ इति** । तेन उभकाविति सिध्यति । कप्रत्यये तु 'उभादुदात्तो नित्यम्' इत्यत्र विभक्तेन 'नित्यम्' इत्यनेन अयचि उभयकाविति स्यात् ।

**उभयशब्दस्य रूपाणि**—अस्य द्विवचनं नास्ति । उभयः, उभये । उभयम्, उभयान् । उभयेन, उभयैः । उभयस्मै, उभयेभ्यः । उभयस्मात्-उभयस्माद्, उभयेभ्यः । उभयस्य, उभयेषाम् । उभयस्मिन्, उभयेषु । हे उभय, हे उभये ।

**डतरडतमौ प्रत्ययाविति**—'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' इतिसूत्रविहिताविरयर्थः । तथा च 'न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः' इति न्यायेन केवलं तयोः प्रयोगानर्हत्वेन सर्वनामसंज्ञायां

उभयशब्दस्य द्विवचनं नास्ति। डतरडतमौ प्रत्ययौ। प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः। नेम इत्यर्द्धे। समः सर्वपर्यायः। तुल्यपर्य्यायस्तु

---

प्रयोजनाभावात् प्रत्ययग्रहणपरिभाषया डतरप्रत्ययान्तस्य डतमप्रत्ययान्तस्य च ग्रहणमिति कतरकतमशब्दादीनामेव सर्वनामसंज्ञा भविष्यतीति।

**कतरशब्दस्य रूपाणि**—कतरः, कतरौ, कतरे। कतरम्, कतरौ, कतरान्। कतरेण, कतराभ्याम्, कतरैः। कतरस्मै, कतराभ्याम्, कतरेभ्यः। कतरस्मात्-कतरस्माद्, कतराभ्याम्, कतरेभ्यः। कतरस्य, कतरयोः, कतरेषाम्। कतरस्मिन्, कतरयोः। कतरेषु। इति।

**कतमशब्दस्य रूपाणि**—कतमः, कतमौ, कतमे। कतमम्, कतमौ, कतमान्। कतमेन, कतमाभ्याम्, कतमैः। कतमस्मै, कतमाभ्याम्, कतमेभ्यः। कतमस्मात्-कतमस्माद्, कतमाभ्याम्, कतमेभ्यः। कतमस्य, कतमयोः कतमेषाम्। कतमस्मिन्, कतमयोः, कतमेषु, इति।

**अन्यशब्दस्य रूपाणि**—अन्यः, अन्यौ, अन्ये। अन्यम्, अन्यौ, अन्यान्। अन्येन, अन्याभ्याम्, अन्यैः। अन्यस्मै, अन्याभ्याम्, अन्येभ्यः। अन्यस्मात्-अन्यस्माद् अन्याभ्याम्, अन्येभ्यः। अन्यस्य, अन्ययोः, अन्येषाम्। अन्यस्मिन्, अन्ययोः, अन्येषु, इति।

**अन्यतरशब्दस्य रूपाणि**—अन्यतरः, अन्यतरौ, अन्यतरे। अन्यतरम्, अन्यतरौ, अन्यतरान्। अन्यतरेण, अन्यतराभ्याम्, अन्यतरैः। अन्यतरस्मै, अन्यतराभ्याम्, अन्यतरेभ्यः। अन्यतरस्मात्-अन्यतरस्माद्, अन्यतराभ्याम्, अन्यतरेभ्यः। अन्यतरस्य, अन्यतरयोः, अन्यतरेषाम्। अन्यतरस्मिन्, अन्यतरयोः, अन्यतरेषु,। इति।

**इतरशब्दस्य रूपाणि**—इतरः, इतरौ, इतरे। इतरम्, इतरौ, इतरान्। इतरेण, इतराभ्याम्, इतरैः। इतरस्मै, इतराभ्याम्, इतरेभ्यः। इतरस्मात्-इतरस्माद्, इतराभ्याम्, इतरेभ्यः। इतरस्य, इतरयोः इतरेषाम्। इतरस्मिन्, इतरयोः इतरेषु। इति।

**त्वशब्दस्य रूपाणि**—त्वः, त्वौ, त्वे। त्वम्, त्वौ, त्वान्। त्वेन, त्वाभ्याम्, त्वैः। त्वस्मै, त्वभ्याम्, त्वेभ्यः। त्वस्मात्-त्वस्माद्, त्वाभ्याम्, त्वेभ्यः। त्वस्य, त्वयोः त्वेषाम्,। त्वस्मिन्, त्वयोः, त्वेषु, इति।

**नेमशब्दस्य रूपाणि**—नेमः, नेमौ, नेमे-नेमाः। नेमम्, नेमौ, नेमान्। नेमेन, नेमाभ्याम्, नेमैः। नेमस्मै, नेमाभ्याम्, नेमेभ्यः। नेमस्मात्-नेमस्माद्, नेमाभ्याम्, नेमेभ्यः। नेमस्य, नेमयोः, नेमेषाम्। नेमस्मिन्, नेमयोः, नेमेषु। इति।

**सर्वपर्यायसमशब्दस्य रूपाणि**—समः, समौ, समे। समम्, समौ, समान्।

न, यथासंख्यमनुदेशः समानामिति ज्ञापकात् ।

**१५६. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** १।१।३४ ॥ एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । असंज्ञायां किम् उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । दक्षिणा गाथकाः । कुशला इत्यर्थः ।

---

समेन, समाभ्याम्, समैः । समस्मै, समाभ्याम्, समेभ्यः । समस्मात्-समस्माद्, समाभ्याम्, समेभ्यः । समस्य, समयोः, समेषाम् । समस्मिन्, समयोः समेषु, इति । तुल्यपर्यायसमशब्दस्य न सर्वनामसंज्ञा 'यथासंख्यमनुदेशः समानाम्'इति निर्देशादतस्तस्य रामशब्दवदेव रूपाणि ।

**पूर्वे इति ।** पूर्वशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमाबहुवचने जस् प्रत्ययेऽनुबन्धलोपे'न विभक्तौ'ति सकारेत्संज्ञानिषेधे 'सर्वादीनि सर्वनामानि' इति सूत्रेण नित्यसर्वनामसंज्ञायां प्राप्तायां, 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति सूत्रं प्रवृत्तम् । अत्र, 'सर्वादीनि सर्वनामानि' इत्यतः सर्वनामानि इति, 'विभाषा जसि,' इति सूत्रं चानुवर्तते । ततश्च, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, एतेषां सप्तशब्दानां, इत्यतः सर्वादीनि-सर्वनामानि' इतिसूत्रात् प्रथमादिषु विभक्तिषु प्राप्ता या नित्यसर्वनामसंज्ञा सा जसि वा स्यात् व्यवस्थायाम् असंज्ञायां च इतिसूत्रार्थः फलितः । अपेक्ष्यत इति अपेक्षः । स्वस्य पूर्वादिशब्दस्य, अभिधेयम् वाच्यम्, स्वाभिधेयम्, तेन अपेक्षः—अपेक्ष्यमाणः अवधेर्नियमः, स्वाभिधेयापेक्षावधिनियमः व्यवस्थाशब्दस्य अर्थः । अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकाः पूर्वादयः शब्दा व्यवस्थायां बोध्याः । तथाचात्र वैकल्पिकसर्वनामसंज्ञायाम्, 'जसः शी' इति जसः श्यादेशे, 'लशक्वतद्धिते' इति शकारस्येत्संज्ञाया गुणे पूर्वे इति । सर्वनामसंज्ञाया अभावपक्षे तु पूर्व अस् इत्यवस्थायाम् 'प्रथमयोः पूर्वसवर्णः' इतिपूर्वसवर्णदीर्घे 'ससजुषो रुः' इतिरुत्वे 'खरवसानयोर्विसर्जनीयः' इतिविसर्गे पूर्वाः इति च सिद्धम् ।

**उत्तराः कुरवः इति ।** 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इतिसूत्रे असंज्ञाग्रहणाभावे संज्ञाभूतस्यापि उत्तरशब्दस्य जसि वैकल्पिकसर्वनामसंज्ञायाम् उत्तरे 'उत्तराः' इतिरूपद्वयमापद्येत, तच्च संज्ञायामनिष्टमिति

---

१५६. पूर्व आदि शब्दो की व्यवस्था में और असंज्ञा में सर्वत्र गण सूत्र से नित्य प्राप्त सर्वनाम संज्ञा जस् में विकल्प से होती है । ( पूर्वादि शब्दो के अर्थ से अपेक्षित अवधि के नियम को व्यवस्था कहते है )

**१५७. स्वमज्ञातिधनाख्यायाम् १।१।३५ ॥** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे, स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु । स्वाः । ज्ञातयोऽर्था वा ।

**१५८. अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६ ॥** बाह्ये परिधानीये

---

असंज्ञाग्रहणमावश्यकम् ।

**दक्षिणाः गाथका इति ।** 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इतिसूत्रे व्यवस्थाग्रहणाभावे कुशलार्थकदक्षिणशब्दस्यापि जसि वैकल्पिकसर्वनामसंज्ञायां दक्षिणे दक्षिणाः इति रूपद्वयमापद्येत, तच्चानिष्टमिति व्यवस्थाग्रहणमावश्यकम् । तथा च प्रकृते दक्षिणशब्दोऽवध्यंशे नित्यसाकांक्षदक्षिणत्वावच्छिन्नस्य न बोधक इति न तस्य सर्वनामसंज्ञा ।

**स्वे स्वाः इति ।** स्वशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमाबहुवचने जसि अनुबन्धलोपे 'सर्वादीनि सर्वनामानि' इति नित्यसर्वनामसंज्ञायां प्राप्तायां 'स्वमज्ञातिधनाख्यायाम्' इतिसूत्रं प्रवृत्तम् । अत्र सर्वनामानि इति 'विभाषा जसि' इति चानुवर्तते । ज्ञातिश्च धनं च ज्ञातिधने तयोराख्या ज्ञातिधनाख्या न ज्ञातिधनाख्या अज्ञातिधनाख्या तस्याम् अज्ञातिधनाख्यायाम् इति विग्रहः । स्वशब्दस्य, आत्मा, आत्मीयः, ज्ञातिः धनम् इतिचत्वारोऽर्थाः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियाम् धने' इत्यमरकोशात् । ततश्च ज्ञातिधनभिन्ने आत्मनि आत्मीये चार्थे स्वशब्दस्य प्राप्ता नित्यसर्वनामसंज्ञा जसि वा स्यादिति सूत्रार्थः फलितः । तथा चात्र वैकल्पिकसर्वनामसंज्ञायाम् 'जसः शी' इति जसः श्यादेशे शकारस्य 'लशक्वतद्धिते' इति सूत्रेणेत्संज्ञायाम् लोपे 'आद् गुण'; इतिगुणे स्वे इति । सर्वनामसंज्ञाया अभावपक्षे स्व अस् इत्यवस्थायाम् 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे 'ससजुषो रुः' इति रुत्वे 'खरवसानयोर्विसर्जनीयः' इतिरेफस्य विसर्गे स्वाः इति च सिद्धम् ।

**स्वशब्दस्य रूपाणि**—स्वः, स्वौ, स्वे-स्वाः । स्वम्, स्वौ, स्वान् । स्वेन, स्वाभ्याम्, स्वैः । स्वस्मै, स्वाभ्याम्, स्वेभ्यः । स्वस्मात्-स्वस्माद्-स्वात्-स्वाद्, स्वाभ्याम् स्वेभ्यः । स्वस्य, स्वयोः, स्वेषाम् । स्वस्मिन्-स्वे, स्वयोः, स्वेषु, इति ।

**अन्तरे इति ।** अन्तरशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमाबहुचने जसि अनुबन्धलोपे 'सर्वादीनि सर्वनामानि' इति नित्यंसर्वनामसंज्ञायां प्राप्तायाम्

---

१५७. ज्ञाति और धन से अन्य–आत्मा–आत्मीय अर्थ में स्व शब्द की गण सूत्र में नित्य प्राप्त सर्वनाम संज्ञा जस् परे रहते विकल्प से होती है ।

१५८. बाह्य और परिधानीय अर्थ में अन्तर शब्द को गण सूत्र से प्राप्त नित्य सर्वनामसंज्ञा जस् परे रहते विकल्प से होती है ।

चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा जसि वा । अन्तरे, अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे, अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ।

**१५९. पूर्वादिभ्यो नवभ्यो वा ७।१।१६ ॥** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ।

---

'अन्तरं बहिर्योगोपसंव्यानयोः' इतिसूत्रं प्रवर्तते । अत्र 'सर्वनामानीति', 'विभाषा-जसि' इतिचानुवर्तते । बहिः अनावृतप्रदेशः । तेन योगः सम्बन्धो यस्य सः बहिर्योगः बहिर्विद्यामानोऽर्थ इति यावत् । उपसंवीयते परिधीयते इति उपसंव्यानम् अन्तरीयम् वस्त्रम् । ततश्च बाह्ये परिधानीये च अर्थे अन्तरशब्दस्य सर्वादीनीति सूत्रात्प्राप्ता नित्यसर्वनामसंज्ञा जसि वा स्यादिति सूत्रार्थः । तथाचात्र वैकल्पिकसर्वनामसंज्ञायां 'जशः शी' इति जसः श्यादेशे 'लशक्वतद्धिते' इति शकारस्येत्संज्ञायां लोपे 'आद्गुणः' इतिगुणे अन्तरे इति । सर्वनामसंज्ञाया अभावपक्षे तु अन्तर अस् इत्यवस्थायाम् 'प्रथमयोः पूर्वसर्वणः' पूर्वसवर्णदीर्घे 'ससजुषोरुः' इति सस्य रुत्वे 'खरवसानयोर्वि-सर्जनीयः' इतिरेफस्य विसर्गे अन्तरा इति च सिद्धम् ।

**अन्तशरब्दस्य रूपाणि**—अन्तरः, अन्तरौ, अन्तरे-अन्तराः । अन्तरम्, अन्तरौ, अन्तरान्, अन्तरेण, अन्तराभ्याम्, अन्तरैः । अन्तरस्मै, अन्तराभ्याम्, अन्तरेभ्यः, अन्तरस्मात्-अन्तरस्माद्-अन्तरात्-अन्तराद्, अन्तराभ्याम् अन्तरेभ्यः । अन्तरस्य, अन्तरयोः, अन्तरेषाम् । अन्तरस्मिन् अन्तरे अन्तरयोः, अन्तरेषु, इति ।

**पूर्वस्मात् इति** । पूर्वशब्दस्य प्रातिपदिकसंज्ञायां सर्वनामसंज्ञायां च प्रातिपदि-कत्वात् पञ्चम्येकवचने ङसि प्रत्ययेऽनुबन्धलोपे 'न विभक्तौ तुस्माः' इति सकारेत्सं-ज्ञानिषेधे 'टाङसिङसामिनात्स्याः, इति सूत्रं बाधित्वा 'ङसिङ्योः स्मात्स्मिनौ' इति स्मात् आदेशे प्राप्ते 'पूर्वादिभ्यो नवभ्यो वा' इति सूत्रं प्रवृत्तम् । अत्र 'ङसिङ्योः स्मात्स्मिनौ'इति सूत्रमनुवर्तते । ततश्च पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर एभ्यो नवभ्यः श देभ्यः परस्य ङसिप्रत्ययस्य स्थाने स्मात् आदेशः, ङिप्रत्य-यस्य स्थाने स्मिन् आदेशश्च वा स्यात् इति सूत्रार्थः । तथा चात्र वैकल्पिके स्मात् आदेशे कृते 'झलां जशोऽन्ते इति जश्त्वे 'वावसाने इति वैकल्पिके चर्त्वे पूर्वस्मात् इति, चर्त्वाभावपक्षे पूर्वस्माद् इति, स्मादादेशाभावपक्षे, पूर्व अस् इत्यवस्थायां 'टाङसिङसामिनात्स्याः' इतिसूत्रेण आदेशे जश्त्वे वैकल्पिके चर्त्वे च कृते पूर्वात् इति चर्त्वाभावपक्षे च पूर्वाद् इति सिद्धम् ।

---

१५९. पूर्वादि शब्दों से परे ङसि और ङि के स्थान में स्मात् और स्मिन् आदेश विकल्प से होता हैं ।

१६०. **प्रथमचरमतयाल्पाऽर्द्धकतिपयनेमाश्च १।१।३३॥** एते जसि उक्तसंज्ञा वा स्युः। प्रथमे प्रथमाः। तयः प्रत्ययः द्वितये, द्वितयाः। शेषं

---

**पूर्वस्मिन् इति।** पूर्व इत्यस्य प्रातिपदिकसंज्ञायां सर्वनामसंज्ञायां प्रातिपदिकत्वात् सप्तम्येकवचने ङिप्रत्ययेऽनुबन्धलोपे, 'पूर्वादिभ्यो नवभ्यो वा' इति सूत्रेण वैकल्पिके स्मिन्नादेशे पूर्वस्मिन्निति। स्मिन्नादेशाभावपक्षे तु 'आद् गुणः' इति गुणे पूर्वे इति च सिद्धम्।

**पूर्वशब्दस्य रूपाणि**—पूर्वः, पूर्वौ, पूर्वे-पूर्वाः। पूर्वम्, पूर्वौ, पूर्वान्। पूर्वेण, पूर्वाभ्याम्, पूर्वैः। पूर्वस्मै, पूर्वाभ्याम्, पूर्वेभ्यः। पूर्वस्मात्-पूर्वस्माद्-पूर्वात्-पूर्वाद्, पूर्वाभ्याम्, पूर्वेभ्यः। पूर्वस्य, पूर्वयोः पूर्वेषाम्। पूर्वस्मिन्-पूर्वे, पूर्वयोः, पूर्वेषु, इति॥

**परशब्दस्य रूपाणि**—परः, परौ, परे-पराः। परम्, परौ परान्। परेण, पराभ्याम्, परैः। परस्मै, पराभ्याम्, परेभ्यः। परस्माद्-परस्माद्-परात्-पराद्, पराभ्याम्; परेभ्यः। परस्य, परयोः, परेषाम्। परस्मिन्—परे, परयोः, परेषु, इति।

**अवरशब्दस्य रूपाणि**—अवरः, अवरौ, अवरे-अवराः।। अवरम्, अवरौ, अवरान्। अवरेण, अवराभ्याम्, अवरैः। अवरस्मै, अवराभ्याम्, अवरेभ्यः। अवरस्मात् अवरस्माद्-अवरात्-अवराद्, अवराभ्याम्, अवरेभ्यः। अवरस्य, अवरयोः, अवरेषाम्। अवरस्मिन्-अवरे, अवरयोः, अवरेषु, इति।

**दक्षिणशब्दस्य रूपाणि**—दक्षिणः, दक्षिणौ, दक्षिणे-दक्षिणाः। दक्षिणम्, दक्षिणौ दक्षिणान्। दक्षिणेन, दक्षिणाभ्याम्, दक्षिणैः। दक्षिणस्मै दक्षिणाभ्याम्, दक्षिणेभ्यः। दक्षिणस्मात्-दक्षिणस्माद्-दक्षिणात्-दक्षिणाद्, दक्षिणाभ्याम्, दक्षिणेभ्यः। दक्षिणस्य, दक्षिणयोः, दक्षिणेषाम्। दक्षिणस्मिन्-दक्षिणे, दक्षिणयोः, दक्षिणेषु, इति।

**उत्तरशब्दस्य रूपाणि**—उत्तरः, उत्तरौ, उत्तरे-उत्तराः। उत्तरम्, उत्तरौ, उत्तरान्। उत्तरेण, उत्तराभ्याम्, उत्तरैः। उत्तरस्मै, उत्तराभ्याम्, उत्तरेभ्यः। उत्तरस्मात्-उत्तरस्माद् उत्तरात्-उत्तराद्, उत्तराभ्याम्, उत्तरेभ्यः। उत्तरस्य, उत्तरयोः उत्तरेषाम्। उत्तरस्मिन्-उत्तरे, उत्तरयोः उत्तरेषु, इति।

**प्रथमे इति।** प्रथम इत्यस्य प्रातिपदिकसंज्ञायाम् प्रातिपदिकत्वात्प्रथमाबहुवचने जस् प्रत्ययेऽनुबन्धलोपे 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति सूत्रं प्रवृ-

---

१६०. प्रथम चरम तयप्प्रत्ययान्त अल्प अर्ध कतिपय और नेम शब्दों को जस् परे रहते विकल्प से सर्वनाम संज्ञा होती है। (वा० तीय प्रत्ययान्त की सर्वत्र अप्राप्त सर्वनाम संज्ञाङिद्बचनों में विकल्प से होती है।)

रामवत् । नेमे, नेमाः । शेषं सर्ववत् । ( तीयस्य ङित्सु वा ) । द्वितीयस्मै,

---

त्तम् । अत्र 'सर्वनामानि' इति 'विभाषा जसि' इति चानुवर्तते । तय इत्यस्य प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया 'संख्याया अवयवे तयप्' इतिसूत्रविहिततयप्प्रत्ययन्तस्य ग्रहणम् । ततश्च प्रथम, चरम, तयप्रत्ययान्त, अल्प, अर्ध, कतिपय, नेम, एते शब्दाः जसि वा सर्वनामसंज्ञकाः स्युरिति सूत्रार्थः । तथा च प्रथमशब्दस्य वैकल्पिकसर्वनामसंज्ञायाम् 'जसः शी' इतिजसः श्यादेशेऽनुबन्धलोपे 'आदगुणः' इति गुणे प्रथमे, इति । सर्वनामसंज्ञाया अभावपक्षे प्रथम अस् इत्थवस्थायाम् 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे 'ससजुषो रुः' इति रुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्गे प्रथमाः इति च सिद्धम् ।

**द्वितये इति** । द्वितय इत्यस्य प्रातिपदिकसंज्ञायाम् प्रातिपदिकत्वात् जसि अनुबन्धलोपे 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति वैकल्पिकसर्वनामसंज्ञायाम् 'जसः शी' इति जसः श्यादेशेऽनुबन्धलोपे 'आद् गुणः' इति गुणे द्वितये इति । सर्वनामसंज्ञाया अभावपक्षे तु पूर्वसवर्णदीर्घे रुत्वे विसर्गे च द्वितयाः इति च सिद्धम् ।

**नेमे इति** । नेमे इत्यस्य प्रातिपदिकत्वात् जसि अनुबन्धलोपे 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति वैकल्पिकसर्वनामसंज्ञायाम् जसः श्यादेशे गुणे नेमे इति । सर्वनामसंज्ञाया अभावपक्षे पूर्वसवर्णदीर्घे रुत्वे विसर्गे च कृते नेमाः इति च सिद्धम् ।

**प्रथमशब्दस्य रूपाणि**—प्रथमः, प्रथमौ, प्रथमे-प्रथमाः । प्रथमम्, प्रथमौ, प्रथमान् । प्रथमेन, प्रथमाभ्याम्, प्रथमैः । प्रथमाय, प्रथमाभ्याम्, प्रथमेभ्यः । प्रथमात्-प्रथमाद्, प्रथमाभ्याम्, प्रथमेभ्यः । प्रथमस्य, प्रथमयोः प्रथमानाम् । प्रथमे, प्रथमयोः, प्रथमेषु, इति ।

**चरमशब्दस्य रूपाणि**—चरमः, चरमौ, चरमे-चरमाः । चरमम्, चरमौ, चरमान् । चरमेण, चरमाभ्याम् चरमैः । चरमाय, चरमाभ्याम् चरमेभ्यः । चरमात्-चरमाद्, चरमाभ्याम्, चरमेभ्यः । चरमस्य, चरमयोः, चरमाणाम् । चरमे, चरमयोः, चरमेषु । इति ।

**द्वितयशब्दस्य रूपाणि**—द्वितयः, द्वितयौ, द्वितये-द्वितयाः । द्वितयम्, द्वितयान् । द्वितयेन, द्वितयाभ्याम्, द्वितयैः । द्वितयाय, द्वितयाभ्याम्, द्वितयेभ्यः । द्वितयात्-द्वितयाद्, द्वितयाभ्याम्, द्वितयेभ्यः । द्वितयस्य, द्वितययोः, द्वितयानाम् । द्वितये, द्वितययोः द्वितयेषु, इति ।

**अल्पशब्दस्य रूपाणि**—अल्पः, अल्पौ, अल्पे-अल्पाः । अल्पम्, अल्पौ, अल्पान् । अल्पेन, अल्पाभ्याम्, अल्पैः । अल्पाय, अल्पाभ्याम्, अल्पेभ्यः । अल्पात्-

द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ।

**१६१. जराया जरसन्यतरस्याम् ७।२।१०१ ॥** जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । पदाङ्गाधिकारे तस्य च तदन्तस्य च । निर्दिश्यमानस्यादेशा भवन्ति । एकदेशविकृतमनन्यवत् । इति जर्‌शब्दस्य जरस् निर्जरसौ । निर्जरस इत्यादि । पक्षे हलादौ च रामवत् । विश्वपाः ।

---

अल्पाद् अल्पाभ्याम्, अल्पेभ्यः । अल्पस्य, अल्पयोः, अल्पानाम् । अल्पे, अल्पयोः, अल्पेषु इति ।

**अर्धशब्दस्य रूपाणि**—अर्धः, अर्धौ, अर्धे-अर्धाः । अर्धम् अर्धौ, अर्धान् । अर्धेन, अर्धाभ्याम् अर्धैः । अर्धाय अर्धाभ्याम्, अर्धेभ्यः । अर्धात्-अर्धाद्, अर्धाभ्याम्, अर्धेभ्यः । अर्धस्य, अर्धस्योः, अर्धानाम् । अर्धे, अधयोः अर्धेषु, इति । नेमशब्दरूपं प्रागेत्रोक्तं सर्वादौ ।

**द्वितीयस्मै इति ।** द्वितीयशब्दस्य प्रातिपदिकत्वात् चतुर्थ्येकवचने ङे प्रत्ययेऽनुबन्धलोपे 'तीयस्य ङित्सु वा' इति वार्तिकप्रवृत्तिः । तीय इत्यस्य प्रत्ययत्वात् 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदन्तविधिः । ततश्च तीयप्रत्ययान्तस्य ङित्सु प्रत्ययेषु परेषु सर्वनामसंज्ञा वा भवतीति वार्तिकार्थः । तथाचात्र वैकल्पिकसर्वनामसंज्ञायाम् 'सर्वनाम्नः स्मै' इति सूत्रेण स्मै आदेशे द्वितीयस्मै इति । सर्वनामसंज्ञाया अभावपक्षे तु 'ङेर्यः' इति यादेशे कृते स्थानिद्भावेन यादेशस्य सुप्त्वात् 'सुपि च' इति दीर्घे द्वितीयाय इति च सिद्धम् ।

**तृतीयशब्दस्य रूपाणि**—तृतीयः, तृतीयौ, तृतीयाः । तृतीयम्, तृतीयौ, तृतीयान् । तृतीयेन तृतीयाभ्याम्, तृतीयैः । तृतीयस्मै-तृतीयाय, तृतीयाभ्याम्, तृतीयेभ्यः । तृतीयस्मात् - तृतीयस्माद् - तृतीयात्-तृतीयाद्, तृतीया याम्, तृतीयेभ्यः । तृतीयस्य, तृतीययोः, तृतीयानाम् । तृतीयस्मिन् तृतीययोः, तृतीयेषु, इति ।

**निर्जरः, इति ।** निर्जरशब्दस्य प्रातिपदिकसंज्ञायाम् प्रातिपदिकत्वात् प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे 'ससजुषो रुः' इति रुत्वे 'खरवसानयोर्विसर्जनीयः, इति विसर्ग निर्जरः इति सिद्धम् ।

**निर्जरसौ, इति ।** निर्जरइत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमा-

---

१६१. जरा शब्द को जरस् आदेश होता है विकल्प से अजादि विभक्ति परे रहते । (प० पदाधिकार और अङ्गाधिकार में जो कार्य जिसके लिए कहे गये हैं वे उसको और तदन्त को भी होते हैं ) । (प० सूत्र में जितने का निर्देश है तावन्मात्र को आदेश होता है ) प० एक देश में विकार (अधिक अथवा न्यून) होनेपर भी वह शब्द अन्य नहीं होता है ।

**१६२. दीर्घाज्जसि च ६।१।१०५ ।।** दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः। विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम्। विश्वपौ।

---

द्विवचने औ प्रत्यये 'जराया जरसन्यतरस्याम्' इतिसूत्रं प्रवृत्तम्। अत्र 'अष्टन आ विभक्तौ' इत्यतः विभक्तौ इति 'अचि र ऋतः' इत्यतः अचि इति चानुवर्तते। 'यस्मिन् विधिस्तदादावल्ग्रहणे' इतिपरिभाषया तदादिविधिः। ततश्च जराशब्दस्य स्थाने जरस् आदेशो वा स्यात् अजादौ विभक्तौ परे इति सूत्रार्थः। अत्र हि जराशब्दस्याभावात् कथं जरसादेश इतिशङ्कायाम्, 'पदाङ्गाधिकारे च यत् कार्य तत् तस्य तदन्तस्य च भवतीति परिभाषार्थः। 'जराया जरसन्यतरस्या'मिति सूत्रस्य अङ्गाधिकारपठितत्वात् जराशब्दस्य जराशब्दान्तस्य च स्थाने जरसादेशो भवति। जरसादेशस्य अनेकल्त्वात् 'अनेकालशित्सर्वस्य' इति परिभाषया निर्जर इत्यस्य सर्वस्य स्थाने जरसादेशः स्यादिति शङ्कायां 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषाप्रवृत्तिः। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयित्वं निर्दिश्यमानत्वम्। षष्ठीप्रकृतिः जरायाइत्यत्र जरा इति तज्जन्य प्राथमिका-शास्त्रान्तरासहकृता उपस्थितिः जराविषयिका न तु निर्जरविषयिका तस्या पदाङ्गाधिकारे इति शास्त्रसहकारेण जातत्वात् इति षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयस्य जराइत्यस्य निर्दिश्यमानत्वम्। तथा च जरा इत्यस्यैव स्थाने जरसादेशः। ननु निर्जरइत्यत्र जराशब्दाभावात् कथं जरसादेश इति शङ्कायाम् 'एकदेशविकृतमनन्यवत्' इति परिभाषा प्रवर्तते। 'एकदेशविकृतम् अन्यवत् न भवतीति परिभाषार्थः 'छिन्नेऽपि पुच्छे श्वा श्वैव नाश्वो न गर्दभः' इति न्यायात्। तथाचात्र जर इत्यस्य जराशब्देन ग्रहणात् तस्य स्थाने जरसादेशे निर्जरसौ इति। जरसादेशाभावपक्षे तु 'निर्जर औ' इत्यवस्थायाम् 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते 'नादिचि' इति निषेधे 'वृद्धिरेचीति' वृद्धौ निर्जरौ इति च सिद्धम्।

**निर्जरशब्दस्य रूपाणि**—निर्जरः, निजरसौ-निर्जरौ, निर्जरसः-निर्जराः। निर्जरसम्-निर्जरम् निर्जरसौ-निर्जरौ, निर्जरस-निर्जरान्। निर्जरसा-निर्जरेण, निर्जराभ्याम्, निर्जरैः। निर्जरसे-निर्जराय, निर्जराभ्याम्, निर्जरेभ्यः। निर्जरसःनिर्जरात्-निर्जराद्, निर्जराभ्याम्, निर्जरेभ्य, निर्जरसः, निर्जरस्य, निर्जरसोः–निर्जरयोः, निर्जरसाम्-निर्जराणाम्। निर्जरसि-निर्जरे, निर्जरसोः-निर्जरयोः, निर्जरेषु, इति।

**विश्वपाः इति**। विश्वपाशब्दस्य प्रातिपदिकसंज्ञायाम् प्रातिपदिकत्वात् प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोये 'ससजुषोरुः' इति रुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्गे विश्वपाः, इति सिद्धम्।

---

१६२. दीर्घ से जस् और इच् परे रहते पूर्वसवर्ण दीर्घ नहीं होता।

**१६३. सुडनपुंसकस्य १।१।४३ ॥** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ।

**१६४. स्वादिष्वसर्वनामस्थाने १।४।१७ ॥** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदसंज्ञं स्यात् ।

---

**विश्वपौ इति ।** विश्वपाशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमाद्विवचने औ प्रत्यये 'प्रथमयोः पूर्वसवर्णः' इतिपूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति सूत्रं प्रवर्तते । अत्र 'प्रथमयोः पूर्वसवर्णः' इत्यतः पूर्वसवर्ण इति 'नादिचि' इत्यतः न इति इचि इति चानुवर्तते । ततश्च दीर्घात् जसि इचि च परे पूर्वसवर्णदीर्घो न स्यादिति सूत्रार्थः । यद्यपि इह औङि 'नादिचि' इत्यनेनैव निषेधः सिद्धः जसि तु पूर्वसवर्णदीर्घेऽपि काचित् क्षतिर्नास्ति तथापि गौर्य्यौ, गौर्य्य, इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् । तथाचात्र औरूपे इचि परे पूर्वसवर्ण दीर्घनिषेधे 'वृद्धिरेचि, इति वृद्धौ विश्वपौ इति सिद्धम् ।

**विश्वपा इति ।** विश्वपाशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमाबहुवचने जस् प्रत्ययेऽनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति जसि परे पूर्वसवर्णदीर्घनिषेधे 'अकः सवर्णे दीर्घ' इति दीर्घ 'न विभक्तौ तुस्माः' इति सकारेत्संज्ञानिषेधे 'ससजुषो रुः' इतिरुत्वे 'खरवसानयोर्विसर्जनीयः' इति विसर्गे च कृते विश्वपाः इति सिद्धम् ।

पदसंज्ञाविधायकं 'स्वादिष्वसर्वनामस्थाने' इति सूत्रं वक्ष्यति, तत्र किं सर्वनामस्थानमित्याकाङ्क्षायाम्—**सुडनपुंसकस्येति ।** अत्र 'शि सर्वनामस्थानम्, इत्यतः सर्वनामस्थानमित्यनुवर्तते । तस्य बहुवचनान्तत्वेन विपरिणामः । सुडिति सु इत्यारभ्य औटः टकारेण प्रत्याहारः । ततश्च नपुंसकभिन्नप्रातिपदिकस्य संबन्धिनः सु औ जस् अम् औट् एते प्रत्ययाः सर्वनामस्थानसंज्ञका भवन्तीति फलितोऽर्थः ।

**स्वादिष्वसर्वनामस्थाने इति ।** अत्र 'सुप्तिङन्त पदम्' इत्यतः पदम् इत्यनुवर्तते । स्वादिषु इति सप्तम्या 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषया पूर्वस्येत्यस्य लाभः । व्याख्यानात् कप्प्रत्ययावधिषु इत्यस्य लाभः । तथा च सर्वनामस्थानभिन्नकप्प्रत्ययावधिषु परेषु पूर्वस्य पदसंज्ञा भवतीति सूत्रार्थः ।

---

१६३. नपुंसकलिङ्ग को छोड़कर सु औ जस् अम् औट् इन पाँच वचनों को सर्वनामस्थान संज्ञा होती है ।

१६४. सु प्रत्यय से लेकर कप्प्रत्यय पर्यन्त सर्वनामस्थान से भिन्न प्रत्यय परे रहते पूर्व की पद संज्ञा होती है ।

**१६५. यचि भम् १।४।१८ ॥** यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ।

**१६६. आ कडारादेका संज्ञा १।४।१ ॥** इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया, या पराऽनवकाशा च ।

**१६७. आतो धातोः ६।४।१४० ॥** आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्या-

---

**यचि भम् इति ।** य् च अच् च इति समाहारद्वन्द्वः । सौत्रत्वात् 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टजभावः । 'स्वादिष्वसर्वनामस्थाने' इत्यनुवर्तते । तच्च यचि इत्यनेन विशेष्यते । 'यस्मिन् विधिस्तदादावल्ग्रहणे' इतिपरिभाषया तदादिविधिः पूर्वांशलाभः पूर्वसूत्रवत् । ततश्च सर्वनामस्थानभिन्नेषु यकारादिषु अजादिषु च कप्प्रत्ययावधिषु स्वादिषु पूर्वस्य भसंज्ञा भवतीति सूत्रार्थः ।

**विश्वपः इति ।** विश्वपाशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् द्वितीयाबहुवचने शस् प्रत्ययेऽनुबन्धलोपे 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञा 'यचि भम्' इति भसंज्ञा च प्राप्ता 'आकडारादेका संज्ञा, इति सूत्रवृत्त्या संज्ञयोर्विरोधाभावेऽपि एकैव संज्ञा विधेया ! ततश्च अत्र परत्वादनवकाशत्वाच्च 'यचि भम्' इति भसंज्ञायाम् 'आतो धातोः' इति सूत्रं प्रवृत्तम् । अत्र 'अङ्गस्य' इति 'भस्य' इति चाधिक्रियते । अत इति धातोरित्यस्य विशेषणम्, तदन्तविधिः । 'अल्लोपोऽनः' इत्यतः लोप इत्युनुवर्तते । धातोरिति अङ्गस्येत्यस्य विशेषणम्, तदन्तविधिः । ततश्च आकारान्तो यो धातुस्तदन्तस्य भसंज्ञकस्य अङ्गस्य लोपः स्यादिति सूत्रार्थः । अत्र आकारान्तो धातुः पा इति तदन्तं भसंज्ञकमङ्गं विश्वपा इति तस्य लोपे प्राप्ते 'अलोऽन्त्यस्य' इति परिभाषया पकारोत्तरर्वातिनः अकारस्य लोपे 'ससजुषो रुः' इति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे विश्वपः, इति सिद्धम् ।

**विश्वपा-इति ।** विश्वपाशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् तृतीयैकवचने टा प्रत्ययेऽनुबन्धलोपे 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञा 'यचि भम्' इति भसंज्ञायाम् 'अलोऽन्त्यस्य' इति परिभाषया 'आतो धातोः' इतिसूत्रेण पकारोत्तरर्वात्तिन आकारस्य लोपे विश्वपा इति सिद्धम् ।

---

१६५. सु प्रत्यय से लेकर कप् प्रत्यय तक सर्वनामस्थान से भिन्न यकारादि तथा अजादि प्रत्यय परे रहते पूर्व की भ संज्ञा होती है ।

१६६. 'कडाराः कर्मधारये' इस सूत्र से पहले—एक को एक ही संज्ञा होती है । जो पर और अनवकाश हो ।

१६७. आकारान्त जो धातु तदन्त भसंज्ञक अङ्ग का लोप होता है ।

मित्यादि । एवं शंखध्मादयः । धातोः किम् । हाहान् । हरिः । हरी ।

**१६८. जसि च ७।३।१०९ ॥** ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि । हरयः ।

---

**विश्वपाशब्दस्य रूपाणि**—विश्वपाः, विश्वपौ, विश्वपाः । विश्वपाम्, विश्वपौ, विश्वपः । विश्वपा, विश्वपाभ्याम्, विश्वपाभिः । विश्वपे, विश्वपाभ्याम्, विश्वपाभ्यः । विश्वपः, विश्वपाभ्याम्, विश्वपाभ्यः । विश्वपः, विश्वपोः, विश्वपाम् । विश्वपि, विश्वपोः, विश्वपासु । इति ।

**शङ्खध्माशब्दस्य रूपाणि**—शङ्खध्माः, खङ्खध्मौ, खङ्खध्माः । खङ्खध्माम्, शङ्खध्मौ, शङ्खध्मः । शङ्खध्मा, शङ्खध्माभ्याम्, शङ्खध्माभिः । खङ्खध्मे, शङ्खध्माभ्याम्, शङ्खध्माभ्यः । शङ्खध्मः, शङ्खध्माभ्याम्, शङ्खध्माभ्यः । शङ्खध्मः, शङ्खध्मोः, शङ्खध्माम् । शङ्खध्मि, शङ्खध्मोः, शङ्खध्मासु । इति ।

**हाहान् इति ।** हाहाशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् द्वितीयाबहुवचने शस् प्रत्ययेऽनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि' इति सकारस्य नकारे हाहान् इति सिध्यति । आतो धातो रतिसूत्रे धातोरित्यस्याभावे आकारान्तस्य भसंज्ञकस्याङ्गस्य लोप इत्यर्थे हाहाशब्दस्याकारान्तत्वात् शसि आकारलोपे हाहः' इत्यनिष्टं प्रसज्येत । अतः धातोरित्यावश्यकम् । सति तु तस्मिन् अत्राकारान्तधातोरसत्त्वात् न आकारलोप इति शम् ।

**हाहाशब्दस्य रूपाणि** । हाहाः, हाहौ, हाहाः । हाहाम्, हाहौ, हाहान् । हाहा, हाहाभ्याम्, हाहाभिः । हाहे, हाहाभ्याम्, हाहाभ्यः । हाहाः, हाहाभ्याम्, हाहाभ्यः । हाहाः, हाहौः, हाहाम् । हाहे, हाहौः हाहासु, इति ।

**हरिः इति ।** हरिशब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमैकवचने सु प्रत्ययेऽनुबन्धलोपे 'ससजुषो रुः' इति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे हरिः इति सिद्धम् ।

**हरी इति ।** हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् प्रथमाद्विवचने औ प्रत्यये 'प्रथमयोः पूर्वसवर्णः' इति सूत्रेण रेफोत्तरवर्तिन इकारादकः प्रथमासम्बन्धिनि औकारेऽचि परे पूर्वपरयोः स्थाने पूर्वसवर्दीर्घे ईकारे कृते हरी इति सिद्धम् ।

**हरयः इति ।** हरि इत्यस्य प्रातिपदिकसंज्ञायाम् प्रातिपदिकत्वात् प्रथमाबहुवचने जस् प्रत्यये 'चुटू' इति जकारस्येत्संज्ञायां लोपे 'हलन्त्यम्' इति सकारस्येत्संज्ञायां प्राप्तायां 'न विभक्तौ तुस्माः' इति निषेधे हरि अस् इति स्थिते 'प्रथमयोः

---

१६८. ह्रस्वान्त अङ्ग को गुण होता है जस् परे रहते ।

१६९ ह्रस्वान्त अङ्ग को गुण होता है सम्बुद्धि परे रहते ।

**१६९. ह्रस्वस्य गुणः ७।३।१०८ ॥** सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ।

**१७०. शेषो घ्यसखि १।४।७ ॥** शेष इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ यावीदूतौ तदन्तं सखिवर्जं घिसंज्ञम् ।

**१७१. आङो नाऽस्त्रियाम् ७।३।१२० ॥** घे परस्याङो ना स्याद-

---

पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते तं प्रबाध्य 'जसि च' इतिसूत्रं प्रवृत्तम् । अत्र 'ह्रस्वस्य गुणः' इत्नुवर्तते । अङ्गस्येत्यधिक्रियते । तच्च ह्रस्वस्येति विशेषणम् । तदन्तविधिः । ततश्च ह्रस्वान्तस्याङ्गस्य गुणः स्यात् जसि परे इति सूत्रार्थः । तथा-चात्र 'अलोऽन्त्यस्य' इति परिभाषा तालुस्थानजन्यस्य रेफोत्तरवर्तिन इकारस्य स्थाने आन्तरतम्यादेकारे गुणे 'एचोऽयवायावः' इतिसूत्रेण एकारस्य अयादेशे ससजुषो रुरिति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे कृते हरयः इति सिद्धम् ।

**हे हरे इति** । हरि इत्यस्य प्रातिपदिकत्वात्संबोधनप्रथमैकवचने सुप्रत्ययेऽनुबन्ध-लोपे 'एकवचनं संबुद्धिः' इति सम्बुद्धिसंज्ञायां यस्मात्प्रत्ययविधिरित्यङ्गसंज्ञायां हे शब्दस्य प्राक्प्रयोगे हे हरि स् इति स्थिते 'ह्रस्वस्य गुणः' इति सूत्रं प्रवर्तते । अत्र 'संबुद्धौ च' इत्यतः सम्बुद्धौ इत्यनुवर्तते । ततश्च ह्रस्वस्य गुणः स्यात् सम्बुद्धौ परे इति सूत्रार्थः । तथाच अत्र गुणे 'एङ्ह्रस्वात्सम्बुद्धेः इति सम्बुद्धिलोपे हे हरे इति सिद्धम् ।

**हरिम् इति** । हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् द्वितीयैकवचने अम् प्रत्यये 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्ण दीर्घे प्राप्ते तं बाधित्वा 'अमि पूर्वः' इति पूर्वरूपे हरिम् इति सिद्धम् ।

**हरी इति** । हरि शब्दस्य प्रातिपदिकत्वात् द्वितीयाद्विवचने औट् प्रत्ययेऽनुबन्ध-लोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे हरी इति सिद्धम् ।

**हरीन् इति** । हरि शब्दस्य प्रातिपदिकत्वात् द्वितीयाबहुवचने शस्-प्रत्ययेऽनु-बन्धलोपे 'प्रथमयोः पूर्वसवर्ण' इति पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि' इति सकारस्य नकारे 'अट्कुप्वाङ्नुम्व्यवायेऽपि, इति तस्य णत्वे प्राप्ते 'पदान्तस्य' इति निषेधे हरीन् इति सिद्धम् ।

---

१७०. ह्रस्व इकारान्त उकारान्त शब्दो को घि संज्ञा होती है सखि शब्द को छोड़ कर ।

१७१. घि संज्ञक से परे आङ् (टा) को ना होता है ।

स्त्रियाम् । आङिति टासंज्ञा प्राचाम् । हरिणा । हरिभ्याम् । हरिभिः ।

**१७२. घेर्ङिति ७।३।१११ ॥** घिसंज्ञस्य ङिति सुपि गुणः । हरये । हरिभ्याम् । हरिभ्यः ।

**१७३. ङसिङसोश्च ६।१।११० ॥** एङो ङसिङसोरति परे पूर्वरूपमेका-

---

**हरिणा, इति ।** हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् तृतीयैकवचने टा प्रत्ययेऽनुबन्धलोपे कृते 'शेषो घ्यसखि' इति सूत्रं प्रवृत्तम् । अत्र 'यू स्त्र्याख्यौ नदी' इत्यतो यू इत्यनुवर्तते । तेन इवर्णवर्णाविति लभ्यते । 'ङिति ह्रस्वश्च' इत्यतो ह्रस्व इति चानुवर्तते । उक्तात् नदीसंज्ञकाद् अन्यः शेषः । ह्रस्व इत्यस्य शेष इत्यस्य च इवर्णोवर्णाभ्यां प्रत्येकमन्वयः । शब्दस्वरूपमित्यध्याहार्यम् । तस्य यू इति विशेषणम् । तदन्तविधिः । असखीति पर्युदासः । ततश्च नदीसंज्ञकभिन्नौ ह्रस्वौ याविवर्णोवर्णौ तदन्तं सखिभिन्नं शब्दस्वरूपं घिसंज्ञं स्यादिति सूत्रार्थः । तथाचात्र नदीसंज्ञकभिन्नत्वेन ह्रस्वेकारान्तत्वेन च हरि इत्यस्य घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति सूत्रं प्रवर्तते । अत्र 'अच्च घेः इत्यतो घेरित्यनुवर्तते । घेरित पञ्चम्या परत्वलाभः । ततश्च घिसंज्ञकात्परस्य आङः–टा इत्यस्य स्थाने ना आदेशः स्यादस्त्रियाम्-इति सूत्रार्थः । तथाचात्र घिसंज्ञकाद् हरिशब्दात् परस्य आ इत्यस्य स्थाने नादेशे हरिना इति स्थिते 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नकारस्य णत्वे हरिणा इति सिद्धम् ।

**हरिभिरिति ।** हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात्तृतीयाबहुवचने भिस् प्रत्यये सकारस्य हलन्त्यमितीत्संज्ञायाः 'न विभक्तौ तुस्माः' इति निषेधे 'ससजुषो रुः' इति सकारस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे हरिभिरिति सिद्धम् ।

**हरये, इति ।** हरि इत्यस्य प्रातिपदिकसंज्ञायां घिसंज्ञायां प्रातिपदिकत्वाच्चतुर्थ्येकवचने ङे प्रत्ययेऽनुबन्धलोपे हरि ए इति स्थिते 'घेर्ङिति' इति सूत्रं प्रवर्तते । अत्र 'सुपि च' इत्यतः सुपीति 'ह्रस्वस्य गुणः' इत्यतो गुण इति चानुवर्तते । ततश्च घिसंज्ञकस्य शब्दस्य ङिति सुपि गुणः स्यादिति सूत्रार्थः । तथाचात्र 'अलोऽन्त्यस्य' इति परिभाषया एकारे परे हरि इत्यत्र रेफोत्तरवर्तिन इकारस्यान्तरम्यादेकारे गुणे कृते हरे ए इति स्थिते 'एचोऽयवायावः' इति सूत्रेण एकारस्य स्थाने अयादेशे हरये इति सिद्धम् ।

---

१७२. घि संज्ञक को गुण होता है ङित् सुप् परे रहते ।

१७३. एङन्त से परे ङसि ङस् सम्बन्धी अकार परे रहते पूर्वरूप के स्थान में पूर्वरूप एकादेश होता है ।

देशः । हरेः । हरेः । हर्योः । हर्योः । हरीणाम् ।

**१७४. अच्च घेः ७।३।११९ ॥** इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च । हरौ । हरिषु । एवं कव्यादयः ।

---

**हरेः इति**—हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् पञ्चम्येकवचने ङसि प्रत्ययेऽनुबन्धलोपे 'घेर्ङिति' इति गुणे कृते हरे अस् इति स्थिते 'एचोऽयवायावः' इत्ययादेशे प्राप्ते तं बाधित्वा 'ङसिङसोश्च' इति सूत्रं—प्रवृत्तम् । अत्र 'एङः पदान्तादति' इति सूत्राद् एङ इति, अति इति चानुवर्तते 'अमि पूर्वः' इत्यतः पूर्व इत्यनुवर्तते । एकः पूर्वपरयोरित्यधिक्रियते । ततश्च एङ्प्रत्याहारान्तःपातिवर्णाद् ङसिङसोरति परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यादिति सूत्रार्थः । तथाचात्र रेफोत्तरवर्त्तिन एकाराद् ङसिप्रत्ययाकारे परे पूर्वपरयोः स्थाने पूर्वरूपे 'ससजुषो रुः' इति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे हरेरिति सिद्धम् । एवं षष्ठ्येकवचनेऽपि बोध्यम् ।

**हर्योरिति**—हरिइत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् षष्ठी द्विवचने ओस् प्रत्यये 'न विभक्तौ तुस्माः' इतिसकारेत्संज्ञानिषेधे 'इको यणचि' इति यणि 'ससजुषो रुः' इति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे हर्योरिति सिद्धम् ।

**हरीणामिति**—हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात् षष्ठीबहुवचने आम् प्रत्यये 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे 'अट्-कुप्वाङ्नुम्व्यवायेऽपि' इति रेफोत्तरवर्तिन इकाररूपाटो व्यवधानेऽपि रेफात्परस्य नस्य णत्वे हरीणामिति सिद्धम् ।

**हरौ इति**—हरि इत्यस्य प्रातिपदिकसंज्ञायां घिसंज्ञायां प्रातिपदिकत्वात् सप्तम्येकवचने ङिप्रत्ययेऽनुबन्धलोपे हरि इ इतिस्थिते 'घेर्ङिति' इति गुणे प्राप्ते 'अच्च घेः' इति सूत्रं प्रवृत्तम् । अत्र 'ङेराम्नद्याम्नीभ्यः' इत्यतो ङेरित्यनुवर्तते । 'इदुद्-भ्याम्' इति 'औत्' इति च सूत्रमनुवर्तते । 'अलोऽन्त्यस्य' इति परिभाषोपस्थितिः । तस्मादित्युत्तरस्येति परिभाषया इदुद्भ्यामित्यत्र पञ्चम्या उत्तरस्येति लभ्यते । ततश्च इदुद्भ्यामुत्तरस्य ङिप्रत्ययस्य स्थाने औकारादेशः स्यात् घिसंज्ञकस्यान्तादेशश्चाकारः स्यादिति सूत्रार्थः । तथाचात्र रेफोत्तरस्येकारस्य स्थाने अकारादेशे ङेः स्थाने औकारादेशे च कृते हर औ इति स्थिते 'वृद्धिरेचि' इति वृद्धौ हराविति सिद्धम् ।

**हरिषु इति**—हरि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात्सप्तमीबहुवचने सुप्प्रत्ययेऽनुबन्धलोपे 'आदेशप्रत्यययोः' इति षत्वे हरिषु इति सिद्धम् ।

---

१७४. इकार उकार से परे ङि को औत् और इकार को अकार आदेश होता है ।

**१७५. अनङ् सौ ७।१।९३ ॥** सख्युरङ्गस्यानङादेशोऽसंबुद्धौ सौ ।

**१७६. अलोऽन्त्यात्पूर्व उपधा १।१।६५ ॥** अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः ।

**१७७. सर्वनामस्थाने चासंबुद्धौ ६।४।८ ॥** नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ।

---

**हरिशब्दस्य रूपाणि**—हरिः, हरी, हरयः । हरिम्, हरी, हरीन् । हरिणा, हरिभ्याम्, हरिभिः । हरये, हरिभ्याम्, हरिभ्यः । हरेः, हरिभ्याम्, हरिभ्यः । हरेः, हर्योः, हरीणाम् । हरौ, हर्योः, हरिषु । हे हरे, हे हरी, हे हरयः । इति ।

**कविशब्दस्य रूपाणि**—कविः, कवी, कवयः । कविम्, कवी, कवीन् । कविना, कविभ्याम्, कविभिः । कवये, कविभ्याम्, कविभ्यः । कवेः, कविभ्याम्, कविभ्यः । कवेः, कव्योः, कवीनाम् । कवौ, कव्योः, कविषु । हे कवे, हे कवी, हे कवयः, इति ।

**सखा, इति** । सखि इत्यस्य प्रातिपञ्जिकसंज्ञायां प्रातिपदिकत्वात् प्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे सखि स् इति स्थिते यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमित्यङ्गसंज्ञायां 'अनङ् सौ' इति सूत्रं प्रवृत्तम् । अत्र 'सख्युरसम्बुद्धौ' इति सूत्रमनुवर्तते । अङ्गस्येत्यधिक्रियते । तथा च अङ्गसंज्ञकस्य सखिशब्दस्य अनङ् आदेशः स्यात्सम्बुद्धिभिन्ने सुप्रत्यये परे इति सूत्रार्थः । तथाचात्र 'ङिच्च' इति परिभाषया खकारोत्तरवर्तिन इकारस्य स्थानेऽनङादेशोऽनुबन्धलोपे सखन् स् इति स्थिते 'अलोऽन्त्यात्पूर्व उपधा' इति सूत्रं प्रवर्तते । अल इति पञ्चमी अन्त्यादिति सामानाधिकरण्यात् । साजात्यात्पूर्वोऽप्यलेव गृह्यते । अल्प्रत्याहारः वर्णपर्यायः । ततश्च अन्ते विद्यमानाद् वर्णात्पूर्वो वर्ण उपधासंज्ञः स्यादिति सूत्रार्थः । तथाचात्र अन्ते विद्यमानाद् नकारादलः पूर्वो वर्णः खकारोत्तरवर्ती अकारस्तस्य उपधासंज्ञायाम् 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रं प्रवृत्तम् । 'अङ्गस्ये'त्यधिक्रियते । 'नोपधायाः' इति 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति चानुवर्तते । न इति लुप्तषष्ठ्यन्तमङ्गस्येत्यस्य विशेषणम् । तदन्तविधिः । अङ्गस्येत्यवयवषष्ठी । ततश्च नकारान्तस्याङ्गस्य अवयवभूतोपधाया दीर्घः स्यात्सम्बुद्धिभिन्ने सर्वनामस्थाने परे, इति सूत्रार्थः । तथा चात्र

---

१७५. अङ्गसंज्ञक सखि शब्द को अनङ् आदेश होता है सम्बुद्धि भिन्न सु प्रत्यय परे रहते ।

१७६. अन्त्य अल् से पूर्व वर्ण की उपधा संज्ञा होती है ।

१७७. नान्त उपधा को दीर्घ होता है सम्बुद्धि भिन्न सर्वनाम स्थान परे रहते ।

**१७८. अपृक्त एकाल् प्रत्ययः १।२।४१ ॥** एकालप्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ।

**१७९. हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८ ॥** हलन्तात्परं, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते ।

**१८०. नलोपः प्रातिपदिकान्तस्य ८।२।८ ॥** प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ।

**१८१. सख्युरसंबुद्धौ ७।१।९२ ॥** सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ।

---

सौ सम्बुद्धिभिन्ने सर्वनामस्थाने परे नकारान्तमङ्गं सखन् इति तदवयवभूतोपधा खकारोत्तरवर्त्ती अकारस्तस्य दीर्घे सखान् स् इति जाते 'अपृक्त एकाल् प्रत्ययः' इति सूत्रं प्रवर्तते । एकश्चासावल् एकालिति कर्मधारयः । एकालरूपः प्रत्ययोऽपृक्तसंज्ञो भवतीति सूत्रार्थः । तथा च स् इत्यस्यापृक्तसंज्ञायां 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सूत्रं प्रवृत्तम् । अत्र 'लोपो व्योर्वलि' इत्यतो लोप इत्यनुवर्तते । हल् च ङी च आप् च हल्ङ्यापस्तेभ्य इति विग्रहः । पञ्चम्या परत्वलाभः । दीर्घादिति ङ्यापोरेव विशेषणं न तु हलोऽसम्भवात् । हल्ङ्याभ्य इत्यस्य सुतिस्याक्षिप्तप्रकृति-विशेषणतया तदन्तविधिः सुतिसि इति समाहारद्वन्द्वः । उकारे इकारे च लुप्ते परिशिष्टः यकारस्तकारश्च सुतिसि इत्यनेन विवक्ष्यते । तत्र हलित्यस्य अपृक्तमित्यस्य च सामानाधिकरण्येनान्वयः । 'सहचरितासहचरितयोर्मध्ये सहचरितस्यैव ग्रहणम्' इति परिभाषया तिप्साहचर्यात्तिङः सिप एव ग्रहणं न तु सिचः । अत्र ङ्याब् ग्रहणं सोरेव विशेषणं न तु तिस्योः, व्याख्यानात् । व्याख्यानं च विस्तरभयान्नेह लिख्यते । ततश्च—हलन्तात्परं सुतिसीत्येतदपृक्तं हल् लुप्यते, दीर्घौ यौ ङ्यापौ तदन्तात्परं सु इत्येतदपृक्तं हल् लुप्यते, इति निष्कृष्टः सूत्रार्थः । तथा चात्र सखान् इति हलन्तात्परस्य सु इत्येतदपृक्तस्य हलो लोपे 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रं प्रवृत्तम् । अत्र 'पदस्य' इत्यधिक्रियते । नेति प्रातिपदिकेति च लुप्तषष्ठीकं पदम् । अन्तशब्दोऽवयववाची । ततश्च प्रातिपदिकसंज्ञकं यत्पदं तदन्तावयवस्य नकारस्य

---

१७८. एक वर्ण प्रत्यय की अपृक्त संज्ञा होती है ।

१७९. हलन्त से परे सु ति सि सम्बन्धी अपृक्त हल का लोप होता है और दीर्घ ङी आप् से परे सु सम्बन्धी अपृक्त हल का लोप होता है ।

१८०. प्रातिपदिक संज्ञक पद के अन्तिम नकार का लोप होता है ।

१८१ अङ्गसंज्ञक सखि शब्द से परे सम्बुद्धि भिन्न सर्वनामस्थान णिद्वत् होता है ।

**१८२. अचो ञ्णिति ७।२।११५ ॥** अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये।

**१८३. ख्यत्यात्परस्य ६।१।११२ ॥** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उः। सख्युः।

---

लोपः स्यादिति मूलोक्तार्थः फलितः। तथाचात्र प्रातिपदिकसंज्ञकं पदं सखान् इति तदन्तावयवस्य नकारस्य लोपे सखेति सिद्धम्।

**सखायौ इति**—सखि इत्यस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात्प्रथमाद्विवचने औप्रत्यये सखि औ इतिस्थिते 'इको यणचि' इति यणि प्राप्ते 'सख्युरसम्बुद्धौ' इति, सूत्रं प्रवृत्तम्। अत्र 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति, 'गोतो णित्' इत्यतो णिदिति चानुवर्त्तते। सख्युरितिपञ्चम्या परत्वलाभः। 'अङ्गस्ये'त्यधिक्रियते, तस्य पञ्चम्यन्तत्वेन विपरिणामः। णिदितिसामानाधिकरण्यानुरोधेन असम्बुद्धावित्यस्य सर्वनामस्थाने इत्यस्य च प्रथमान्तत्वेन विपरिणामः। ततश्च अङ्गसंज्ञकात्सखिशब्दात्परं सम्बुद्धिभिन्नं सर्वनामस्थानं णिद्वत् = णित्कार्यकृत्स्यादिति सूत्रार्थः। तथाचात्र औ, इत्यस्य णिद्वद्भावे 'अचोञ्णिति' इति सूत्रं प्रवृत्तम्। अत्र 'मृजेर्वृद्धिः' इत्यतो वृद्धिरित्यनुवर्तते। अङ्गस्येत्येत्यधिक्रियते। इस्य अच् इति विशेषणम्। तदन्तविधिः अत्र णच् अणौइतौ यस्य तत् ञ्णिदिति विग्रहः। ततश्च अजन्तस्याङ्गस्य वृद्धिः स्याद् ञिति णिति च परे इति सूत्रार्थः। तथाचात्र णिति औ प्रत्यये परेऽलोऽन्त्यस्येति परिभाषया खकारोत्तरवर्तिन इकारस्य स्थाने आन्तरतम्यादैकारे वृद्धौ 'एचोऽयवायावः' इति सूत्रेण औकारेऽचि परे ऐकारस्य आयादेशे सखायाविति सिद्धम्।

**सखायः, इति**—सखि इत्यस्य प्रातिपदिकत्वात्प्रथमाबहुवचने जसप्रत्ययेऽनुबन्धलोपे 'सख्युरसम्बुद्धौ' इति णिद्वद्भावे 'अचोञ्णिति' इति वृद्धौ 'एचोऽयवायावः' इत्यायादेशे 'ससजुषो रुः' इति सस्य रुत्वे 'खरवसानयोर्विसर्जनीयः' इति सूत्रेण रेफस्य स्थाने विसर्गे कृते—सखायः, इति सिद्धम्।

**ख्यत्यादिति।** खिखी इत्यनयोः तिती इत्यनयोश्च कृतयणादेशयोः ख्यत्य इति निर्देशः। 'एङः पदान्तादति' इत्यतः अतीत्यनुवर्तते। तस्य परस्येति सामानाधिकरण्यात् षष्ठ्यन्तत्वेन विपरिणामः। 'ङसिङसोश्च' इत्यतः ङसिङसोरिति 'ऋत उत्' इत्यतः उदिति चानुवर्तते। ततो मूलोक्तार्थलाभः।

---

१८२. अजन्त अङ्ग को वृद्धि होती है ञित् णित् प्रत्यय परे रहते।

१८३. यण् हो जाने पर ह्रस्व खि ति शब्द और दीर्घ खी, ती शब्द से परे ङसि ङस् के उकार को अकार आदेश होता है।

**१८४. औत् ७।३।११८॥** इदुद्भ्यां परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ।

**१८५. पतिः समास एव १।४।८॥** पतिशब्दः समास एव घिसंज्ञः । पत्ये । पत्युः । पत्युः । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ।

**१८६. बहुगणवतुडति संख्या १।१।२२॥** एते संख्या संज्ञाः स्युः ।

---

**सख्युरिति ।** सखिशब्दस्य प्रातिपदिकत्वात्पञ्चम्येकवचने ङसि प्रत्ययेऽनुबन्धलोपे 'इको यणचि' इति यणि 'ख्यत्यात्परस्य' इत्युत्वे रुत्वे विसर्गे च कृते सख्युरिति सिद्धम् ।

**औत् ।** इदुद्भ्यामिति सूत्रमनुवर्तते 'ङेराम्नद्याम्नीभ्यः' इत्यतो ङेरिति च ।

**सख्यौ ।** सखिशब्दस्य प्रातिपदिकत्वात्सप्तम्येकवचने ङिप्रत्ययेऽनुबन्धलोपे 'औत्' इति ङेरौत्वे यणि सख्याविति सिद्ध्यति ।

**सखिशब्दस्य रूपाणि ।** सखा सखायौ, सखायः । सखायम्, सखायौ, सखीन् । सख्या, सखिभ्याम्, सखिभिः । सख्ये, सखिभ्याम्, सखिभ्यः । सख्युः, सखिभ्याम्, सखिभ्यः । सख्युः, सख्योः, सख नाम् । सख्यौ, सख्योः, सखिषु । हे सखे हे सखा, हे सखायः । **पतिरिति ।** 'शेषोध्यसखि' इत्यतो घीत्यनुवर्तते ।

**पत्ये इति ।** पतिशब्दस्य प्रातिपदिकत्वाच्चतुर्थ्येकवचने ङे प्रत्ययेऽनुबन्धलोपे "शेषो घ्यसखि' इति घिसंज्ञायां प्राप्तायाम् 'पतिः समास एव' इत्यस्य नियमार्थत्वात्तदभावेन 'घेर्ङिति' इति गुणाभावे यणि पत्ये इति सिद्धम् ।

**पत्युरिति ।** पतिशब्दस्य प्रातिपादकत्वापचम्येकवचने ङसिप्रत्ययेऽनुबन्धलोपे यणि 'ख्यत्यात्परस्य' इत्युत्वे रुत्वे विसर्गे च कृते पत्युरिति सिद्धम् ।

**पत्यौइति ।** पतिशब्दस्य प्रातिपदिकत्वात्सप्तम्येकवचने ङिप्रत्ययेऽनुबन्धलोपे 'औत्' इत्यौत्वे यणि पत्याविति सिद्धम् ।

**पतिशब्दस्य रूपाणि ।** पतिः, पती, पतयः । पतिम्, पती, पतीन् । पत्या, पतिभ्याम्, पतीभिः । पत्ये, पतिभ्याम्, पतिभ्यः । पत्युः, पतिभ्याम्, पतिभ्यः । पत्युः, पत्योः, पतीनाम् । पत्यौ, पत्योः, पतिषु । हे पते, हे पती, हे पतयः । इति ।

---

१८४. इकार से परे ङि को औत् आदेश होता है ।

१८५. पति शब्द की समास में ही घि संज्ञा होती है ।

१८६ बहु शब्द गण शब्द वतु प्रत्ययान्त और डति प्रत्ययान्त शब्द की संख्या संज्ञा होती है ।

**१८७. डति च १।१।२५ ॥** डत्यन्ता संख्या षट्संज्ञा स्यात् ।

**१८८. षड्भ्यो लुक् ७।१।२२ ॥** षड्भ्यः परयोर्जश्शसोः लुक् स्यात् ।

**१८९. प्रत्ययस्य लुक्श्लुलुपः १।१।६१ ॥** लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ।

**१९०. प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२ ॥** प्रत्यये लुप्ते तदाश्रितं कार्य्यं स्यात् । इति जसि चेति गुणे प्राप्ते ।

**१९१. न लुमताऽङ्गस्य १।१।६३ ॥** लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः । त्रिभ्यः ।

---

समासे तु भूपत्यादिशब्दस्य घिसंज्ञया हरिशब्दवद्रूपाणि । तथाहि भूपतिः, भूपती, भूपतयः । भूपतिम्, भूपती, भूपतीन् । भूपतिना, भूपतिभ्याम्, भूपतिभिः । भूपतये, भूपतिभ्याम्, भूपतिभ्यः । भूपतेः, भूपतिभ्याम्, भूपतिभ्यः । भूपतेः, भूपत्योः, भूपतीनाम् । भूपतौ, भूपत्योः, भूपतिषु । हे भूपते हे भूपती, हे भूपतयः ।

**डति च ।** डतीत्यविभक्तिको निर्देशः । प्रत्ययत्त्वात्तदन्तग्रहणम् । अत्र पूर्वसूत्रात्संख्येति 'ष्णान्ता षट्' इत्यतः षडिति चानुवर्तते ।

**षड्भ्यो लुक् ।** 'जश्शसोः शिः' इत्यतो जश्शसोरित्यनुवर्तते ।

**कति इति ।** कतिशब्दाज्जसि प्रत्ययेऽनुबन्धलोपे 'बहुगणवतुडति संख्या' इति संख्यासंज्ञायां 'डति च' इति षट्संज्ञायां 'षड्भ्यो लुक्' इति जसो लुकि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणत्वात् 'जसि च' इति गुणे प्राप्ते 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाद्गुणाभावे कतीति सिद्धम् ।

**कतीनाम् इति ।** कतिशब्दादामि 'ह्रस्वनद्यापो नुट्' इति 'षट् चतुर्भ्यश्च' इति वा नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे कतीनाम् इति सिद्धम् ।

---

१८७ डति प्रत्ययान्त संख्या वाचक शब्द की षट् संज्ञा होती है ।

१८८ षट् संज्ञक से परे जस् और शस् का लुक् होता है ।

१८९. लुक् श्लु, लुप इन शब्दों से किया गया जो प्रत्यय का अदर्शन उसकी क्रम से लुक्, श्लु, लुप् संज्ञा होती है ।

१९०. प्रत्यय के लोप होने पर प्रत्यय को मानकर होने वाला कार्य किया जाता है ।

१९१. लुक् श्लु लुप् शब्दों से जहाँ लोप हुआ हो वहाँ तन्निमित्तक अङ्ग कार्य नहीं होता ।

**१९२. त्रेस्त्रयः ७।१।५३ ॥** त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । त्रिषु । गौणत्वेऽपि-प्रियत्रयाणाम् ।

**१९३. त्यदादीनामः ७।२।१०२ ॥** एषामकारो विभक्तौ । ( द्विपर्य्यन्तानामेवेष्टिः ) । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः, द्वयोः । पाति लोकमिति पपीः सूर्यः ।

**१९४. दीर्घाज्जसि च ६।१।१०५ ॥** दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः । पप्यौ । पप्यः । हे पपीः पपीम् । पपीन् । पप्या । पपीभ्याम् ।

---

**त्रयः इति ।** त्रिशब्दाज्जसि प्रत्ययेऽनुबन्धलोपे 'जसि च' इति गुणे 'एचोऽयवायावः' इत्ययादेशे रुत्वे विसर्गे च कृते त्रय इति सिद्धम् ।

**त्रीन् इति ।** त्रिशब्दाच्छसि प्रत्ययेऽनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे 'तस्माच्छसो नः पुंसि' इति नत्वे त्रीनिति साधु ।

**त्रेस्त्रयः ।** अत्र 'आमि सर्वनाम्नः सुट्' इत्यत अमीत्यनुवर्तते ।

**त्रयाणाम् इति ।** त्रिशब्दादामि 'त्रेस्त्रयः' इति त्रेस्त्रयादेशे 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे त्रयाणामिति सिद्धम् ।

**त्यदादीनामः ।** अत्र 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते ।

**द्वौ इति ।** द्विशब्दाद् औविभक्तौ 'त्यदादीनामः' इत्यत्वे 'वृद्धिरेचि' इति वृद्धौ द्वाविति सिद्धम् ।

**द्वाभ्याम् ।** द्विशब्दाद् भ्यामि विभक्तौ 'त्यदादीनामः' इत्यत्वे 'सुपि च' इति इति दीर्घे द्वाभ्यामिति सिद्धम् ।

**द्वयोरिति ।** द्विशब्दादोसि प्रत्यये 'त्यदादीनामः' इत्यत्वे 'ओसि च' इत्येत्वे अयादेशे रुत्वे विसर्गे च कृते द्वयोरिति सिद्धम् ।

**पप्यौ इति ।** पपीशब्दाद् औ विभक्तौ 'प्रथमयो पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति तन्निषेधे यणि पप्याविति साधु ।

**बहुश्रेयसी इति ।** बहुश्रेयसीशब्दस्य प्रातिपदिकत्वात्सौ 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपे बहुश्रेयसीति सिद्धम् ।

**अम्बार्थेति ।** अत्र 'सम्बुद्धौ च' इत्यनुवर्तते ।

---

१९२. त्रिशब्द को त्रय आदेश होता है आम् परे रहते ।

१९३. त्यदादियों को अकार अन्तादेश होता है विभक्तिपरे रहते ।

१९४. दीर्घ से जस् और इच् परे रहते पूर्व सवर्ण दीर्घ नहीं होता ।

पपीभ्याम् । पपीभ्याम् । पपीभिः पप्ये । पपीभ्यः । पपीभ्यः । पप्यः । पप्योः । दीर्घत्वान्न नुट् पप्याम् । ङौ तु सवर्णदीर्घः । पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ।

**१९५. यू स्त्र्याख्यौ नदी १।४।३ ॥** ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । ( प्रथमलिङ्गग्रहणं च ) । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ।

---

**हे बहुश्रेयसि इति ।** बहुश्रेयसीशब्दात्सम्बोधनप्रथमैकवचने सुप्रत्ययेऽनुबन्धलोपे अस्य शब्दस्य पुंल्लिङ्गत्वाद् 'यूस्त्र्याख्यौ नदी' इति सूत्रेण नदीसंज्ञाया अप्राप्त्या 'प्रथमलिङ्गग्रहणं च' इति वार्तिकेन नदीसंज्ञायाम् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे 'एङ्ह्रस्वात्सम्बुद्धेः' इति सम्बुद्धिलोपे हेशब्दस्य प्राक्प्रयोगे हे बहुश्रेयसि इति साधु ।

**आण्नद्याः ।** अत्र 'अङ्गस्ये'त्यविकृतं पञ्चम्यन्तत्वेन विपरिणम्यते । नद्या इति पञ्चम्यन्तं तस्य विशेषणम् । तदन्तविधिः । 'घेर्ङिति' इत्यतो ङितीत्यनुवर्तते तस्य षष्ठ्यन्तत्वेन विपरिणामः ।

**आटश्च ।** अत्र 'इको यणचि' इत्यतोऽचीत्यनुवर्तते । 'वृद्धिरेचि' इत्यतो वृद्धिरिति च । 'एकः पूर्वपरयो'रित्यधिक्रियते ।

**बहुश्रेयस्यै इति ।** बहुश्रेयसीशब्दाच्चतुर्थ्येकवचने ङेप्रत्ययेऽनुबन्धलोपे नदीसंज्ञायाम् 'आण्नद्याः' इत्याडागमेऽनुबन्धलोपे 'आटश्च' इतिवृद्धौ 'इको यणचि' इति यणि बहुश्रेयस्यै इति साधु ।

**बहुश्रेयस्याः इतिः ।** बहुश्रेयसीशब्दात्पञ्चम्येकवचने ङसिप्रत्ययेऽनुबन्धलोपे 'प्रथमलिङ्गग्रहणं च' इति नदीसंज्ञायाम् 'आण्नद्याः' इत्याडागमेऽनुबन्धलोपे 'आटश्च' इति वृद्धौ यणि रुत्वे विसर्गे च कृते बहुश्रेयस्या इति सिद्धम् ।

**बहुश्रेयसीनाम् इति ।** बहुश्रेयसीशब्दात्षष्ठीबहुवचने आमि प्रत्यये नदीसंज्ञायाम् नद्यन्तत्वात्परत्वाद्यणं बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे बहुश्रेयसीनाम् इति सिद्धम् ।

**बहुश्रेयस्याम् इति ।** बहुश्रेयसीशब्दात्सप्तम्येकवचने ङिप्रत्ययेऽनुबन्धलोपे 'प्रथमलिङ्गग्रहणं च' इति नदीसंज्ञायाम् 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि कृते 'ह्रस्वनद्यापो नुट्' इति सूत्रप्राप्तं नुटं बाधित्वा परत्वाद् 'आण्नद्याः' इत्याडागमऽनुबन्धलोपे 'आटश्च' इति वृद्धौ यणि बहुश्रेयस्यामिति सिद्ध्यति ।

---

१९५. ईदन्त ऊदन्त नित्य स्त्रीलिङ्ग शब्दों की नदी संज्ञा होती है । ( वा० जो शब्द पहले नित्य स्त्रीलिङ्ग हों वह उपसर्जन होने से अन्य लिङ्ग में भी नदी संज्ञक होते हैं ) ।

**१९६. अम्बार्थनद्योर्ह्रस्वः ७।३।१०७ ॥** अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ । हे बहुश्रेयसि ।

**१९७. आण्नद्याः ७।३।११२ ॥** नद्यन्तात्परेषां ङितामाडागमः ।

**१९८. आटश्च ६।१।९० ॥** आटोऽचि परे वृद्धिरेकादेशः । बहुश्रेयस्यै । बहुश्रेयसीनाम् ।

**१९९. ङेराम्नद्याम्नीभ्यः ७।३।११६ ॥** नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम् । बहुश्रेयस्याम् । शेषं पपीवत् । अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्रधीः ।

---

**बहुश्रेयसीशब्दस्य रूपाणि ।** बहुश्रेयसी, बहुश्रेयस्यौ, बहुश्रेयस्यः । बहुश्रेयसीम्, बहुश्रेयस्यौ, बहुश्रेयसीन् । बहुश्रेयस्या, बहुश्रेयसीभ्याम्, बहुश्रेयसीभिः । बहुश्रेयस्यै, बहुश्रेयसीभ्याम्, बहुश्रेयसीभ्यः । बहुश्रेयस्याः, बहुश्रेयसीभ्याम्, बहुश्रेयसीभ्यः । बहुश्रेयस्याः, बहुश्रेयस्योः, बहुश्रेयसीनाम् । बहुश्रेयस्याम्, बहुश्रेयस्योः, बहुश्रेयसीषु । हे बहुश्रेयसि, हे बहुश्रेयस्यौ, हे बहुश्रेयस्यः । इति ।

**अतिलक्ष्मीः इतिः ।** अतिलक्ष्मीशब्दात्सुप्रत्ययेऽनुबन्धलोपे रुत्वे विसर्गे च कृते अतिलक्ष्मीरिति सिद्ध्यति । सुलोपस्तु न लक्ष्मीशब्दस्य 'लक्षेर्मुट् ईप्रत्ययश्च' इति ईप्रत्ययान्तत्वेन ङ्यन्तत्वाभावेन हल्ङ्यादिसूत्राप्रवृत्तेः ।

**प्रध्यौ इति ।** प्रधीशब्दस्य प्रातिपदिकत्वात्प्रथमाद्विवचने औप्रत्यये 'इको यणचि' इति यणं बाधित्वा 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इतिसूत्रेण इयङि प्राप्ते तम्प्रबाध्य 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि प्रध्यौ इति साधु ।

**प्रधीशब्दस्य रूपाणि ।** प्रधीः प्रध्यौ, प्रध्यः । प्रध्यम्, प्रध्यौ, प्रध्यः । प्रध्या, प्रधीभ्याम्, प्रधीभिः । प्रध्ये, प्रधीभ्याम्, प्रधीभ्यः । प्रध्यः, प्रधीभ्याम्, प्रधीभ्यः । प्रध्यः, प्रध्योः प्रध्याम् । प्रध्यि, प्रध्योः, प्रधीषु । हे प्रधीः, हे प्रध्यौ, हे प्रध्यः । एवं ग्रामणीशब्दस्य रूपाणि भवन्ति । ङौ तु प्रधीशब्दस्य प्रध्यि, ग्रामणीशब्दस्य तु ग्रामण्यामिति विशेषः ।

**ग्रामण्याम् इति ।** ग्रामणीशब्दान्ङिप्रत्ययेऽनुबन्धलोपे 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि तत्सिद्धम् ।

---

१९६. अम्बार्थक और नदी संज्ञक को ह्रस्व होता है सम्बुद्धि परे रहते ।

१९७. नद्यन्त से परे ङिद्वचनों को आट् आगम होता है ।

१९८. आट् से अच् परे रहते वृद्धि एकादेश होता है ।

१९९. नद्यन्त, आबन्त और नी शब्द से परे ङि को आम् आदेश होता है ।

**२००. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७ ॥** श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ।

**२०१. एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२ ॥** धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये । प्रध्यौ । प्रध्यम् । प्रध्यौ । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ ।

---

**अनेकाचः किमिति ।** 'एरनेकाचोऽसंयोगपूर्वस्य' इति सूत्रेऽनेकाच इत्यस्याभावे नीशब्दाद् औ प्रत्यये इयङं बाधित्वा यणि कृते न्यौ इत्यनिष्टं प्रसज्येत अतस्तदावश्यकम् । सति तु तस्मिन् नीशब्दस्य अनेकाच्त्वाभावान्न यण् इति दिक् ।

**नियौ इति ।** नीशब्दादौ विभक्तौ 'इको यणचि' इति यणं बाधित्वा 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इतीयङि कृतेऽनुबन्धलोपे नियौ इति सिद्ध्यति ।

**नियमिति ।** नीशब्दाद् द्वितीयैकवचने अमि प्रत्यये 'अमि पूर्वः' इति पूर्वरूपं बाधित्वा परत्वाद् 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इतिसूत्रेण इयङि कृतेऽनुबन्धलोपे नियम् इति सिद्धम् ।

**नियः इति ।** नीशब्दाच्छस्यनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घं बाधित्वा परत्वाद्, 'अचि श्नुधातुभ्रुवां य्वोरिङुवङौ' इतीयङि कृतेऽनुबन्धलोपे रुत्वे विसर्गे च निय इति सिद्ध्यति ।

**नियाम् इति ।** नीशब्दान्ङिप्रत्ययेऽनुबन्धलोपे 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इती इयङि तत्सिद्धम् ।

**नीशब्दस्य रूपाणि ।** नीः, नियौ, नियः । नियम, नियौ, नियः । निया, नीभ्याम्, नीभिः । निये, नीभ्याम्, नीभ्यः । नियः, नीभ्याम्, नीभ्यः । नियः, नियोः, नियाम् । नियाम्, नियोः, नीषु । हे नीः, हे नियौ, हे नियः । इति ।

**असंयोगपूर्वस्य किमिति ।** 'एरनेकाचोऽसंयोगपूर्वस्य' इति सूत्रेऽसंयोगपूर्वस्येत्य-

---

२००. श्नु प्रत्ययान्त को तथा उवर्णान्त इवर्णान्त धातु को और "भ्रू" अङ्ग को इयङ् उवङ् आदेश होता है अजादि प्रत्यय परे रहते ।

२०१. धातु के अवयवों का संयोग नही है पूर्व में जिसके ऐसा जो इवर्ण उवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग उसको यण् होता है अजादि प्रत्यय परे रहते ।

२०२. **गतिश्च** १।४।६० ॥ प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । ( गतिकारकेतरपूर्वपदस्य यण् नेष्यते ) शुद्धधियौ ।

२०३. **न भूसुधियोः** ६।४।८५ ॥ एतयोरचि सुपि यण्न । सुधियौ इत्यादि । सुखमिच्छतीति सुखीः । सुतीः । सुख्यौ । सुत्यौ । सुख्युः । सुत्युः । शेषं प्रधीवत् । शम्भुर्हरिवत् । एवं भान्वादयः ।

२०४. **तृज्वत्क्रोष्टुः** ७।१।९५ ॥ असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ।

---

स्याभावे सुश्री-यवक्री-शब्दाभ्याम् औप्रत्यये यणि सति अनिष्टरूपापत्तिः स्यादतस्तदावश्यकम् । सति तु तस्मिन् संयोगपूर्वकत्वान्नात्र यण् । इयङि तत्सिद्धिः ।

**'गतिश्च'** । अत्र 'प्रादयः' 'उपसर्गाः क्रियायोगे' इति सूत्रद्वयमनुवर्तते ।

**शुद्धधियौ इति** । शुद्धधीशब्दादौविभक्तौ 'इको यणचि' इति यणं बाधित्वा इयङि प्राप्ते तं बाधित्वा 'एरनेकाच' इति यणि प्राप्ते 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति वार्तिकेन तन्निषेधे 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि तत्सिद्धिः ।

**न भूसुधियोः** । 'इणो यण्' इत्यतो यणिति 'अचि श्नुधातुभ्रुवाम्' इत्यतोऽचीति 'ओः सुपि' इत्यतः सुपीति चानुवर्तते ।

**तृज्वत्क्रोष्टुः** । अत्र-'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति 'सख्युरसम्बुद्धौ' इत्यतः असम्बुद्धौ इति चानुवर्तते ।

**ऋतो ङीति** । अत्र 'ह्रस्वस्य गुणः' इत्यतो गुण इत्यनुवर्तते । 'अङ्गस्ये'त्यधिक्रियते । ऋत इति तस्य विशेषणम् । तदन्तविधिः ।

**ऋदुशनस् इति** । अत्र 'अनङ् सौ' इति । 'सख्युरसम्बुद्धौ' इत्यतः असम्बुद्धौ इति चानुवर्तते । 'अङ्गस्ये'त्यधिकृतम् ऋदादिभिर्विशेष्यते, तदन्तविधिः ।

**अप्तृन्निति** । अत्र 'नोपधायाः' इत्यत उपधाया इति, चकाररहितम् 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रं चानुवर्तते ।

**क्रोष्टा इति** । क्रोष्टुशब्दात्सौ 'तृज्वत्क्रोष्टुः' इति तृज्वद्भावे 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते तं बाधित्वा 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङि अनु-

---

२०२. प्रादियों की क्रिया के योग में गति संज्ञा होती है । ( वा० गति कारक से इतर पूर्व पद हो तो यण् नहीं होता है ) ।

२०३ भू और सुधि को यण् नहीं होता अजादि सुप् परे रहते ।

२०४. क्रोष्टु शब्द को तृज्वद्भाव होता है सम्बुद्धि भिन्न सर्वनामस्थान परे रहते ।

**२०५. ऋतो ङिसर्वनामस्थानयोः ७।३।११०॥** ऋदन्ताङ्गस्य गुणो ङौ सर्वनामस्थाने च इति प्राप्ते ।

**२०६. ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४॥** ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ ।

---

बन्धलोपे 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृ पोतृप्रशास्तृणाम्' इति दीर्वे हल्ङ्यादिना सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे क्रोष्टेति सिद्धयति । तृन्तृजन्तत्वादेव दीर्घे सिद्धे नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । नियमाकारश्चेत्थम्—उणादिनिष्पन्नानां तृन्तृजन्तानां चेद्भवति दीर्घस्तर्हि नप्त्रादीनामेव इति । तेन पितृभ्रातृप्रभृतीनां दीर्घो न भवति ।

**क्रोष्टारौ इति** । क्रोष्टुशब्दाद् औविभक्तौ 'तृज्वत्क्रोष्टुः' इति तृज्वद्भावे -,ऋतो ङिसर्वनामस्थानयोः' इति गुणे रपरे च कृते 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्' इति दीर्घे तत्सिद्धम् ।

**विभाषेति** । अत्र 'तृज्वत्क्रोष्टुरि'त्यनुवर्तते । अचीति तृतीयादिविभक्तिविशेषणम् । तदादिविधिः ।

**क्रोष्ट्रा इति** । क्रोष्टुशब्दात्तृतीयैकवचने टाप्रत्ययेऽनुबन्धलोपे 'विभाषा तृतीयादिष्वचि' इति पाक्षिके तृज्वद्भावे यणि क्रोष्ट्रेति सिद्धयति । तृज्वद्भावाभावपक्षे 'आङो नाऽस्त्रियाम्' इति नादेशे क्रोष्टुनेति सिद्धम् ।

**ऋत उत्** । अत्र 'एङः पदान्तादति' इत्यतः अति इति 'ङसिङसोश्च' इत्यतो ङसिङसोरिति चानुवर्तते । 'अङ्गस्ये'त्यधिक्रियते । ऋत इति तस्य विशेषणम् तदन्तविधिः ।

**रात्सस्य** । अत्र 'संयोगान्तस्य लोपः' इत्यनुवर्तते । 'संयोगान्तस्य लोपः' इत्यनेनैव सलोपे सिद्धे नियमार्थमिदं सूत्रम् । रेफात्परस्य संयोगान्तस्य लोपश्चेत्तर्हि सस्यैव नान्यस्य इति नियमाकारः । तेन ऊर्क् इत्यादौ न संयोगान्तलोपः ।

**क्रोष्टुः इति** । क्रोष्टुशब्दात्पञ्चम्येकवचने ङसि प्रत्ययेऽनुबन्धलोपे 'विभाषा तृतीयादिष्वचि' इति पाक्षिके तृज्वद्भावे 'ऋत उत्' इति उदेकादेशे रपरत्वे 'रात्सस्य' इति सलोपे रेफस्य विसर्गे क्रोष्टुरिति, तृज्वदभावपक्षे 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपे रुत्वे विसर्गे च क्रोष्टोरिति च साधु ।

---

२०५. ऋदन्त अङ्ग को गुण होता है ङि और सर्वनामस्थान परे रहते ।

२०६. ऋदन्त और उशनस् आदि को अनङ् आदेश होता है सम्बुद्धि भिन्न सु परे रहते ।

२०७. अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् ६।४।११ ॥ अबादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्।

२०८. विभाषा तृतीयादिष्वचि ७।१।९७ ॥ अजादिषु तृतीयादिषु क्रोष्टुर्वा। तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे।

२०९. ऋत उत् ६।१।१११ ॥ ऋतो ङसिङसोरति उदेकादेशः। रपरः।

---

**क्रोष्टूनाम्**। क्रोष्टुशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुटः परत्वाद् 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इतिवार्त्तिकबलान्नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे क्रोष्टूनामिति सिद्धम्।

**क्रोष्टुशब्दस्य रूपाणि**। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः। क्रोष्टारम्, क्रोष्टारौ, क्रोष्टून्। क्रोष्ट्रा-क्रोष्टुना, क्रोष्टुभ्याम्, क्रोष्टुभिः। क्रोष्ट्रे क्रोष्टवे, क्रोष्टुभ्याम्, क्रोष्टुभ्यः। क्रोष्टुः-क्रोष्टोः, क्रोष्टुभ्याम्, क्रोष्टुभ्यः। क्रोष्टुः क्रोष्टोः, क्रोष्ट्रोः-क्रोष्ट्वोः, क्रोष्टूनाम्। क्रोष्टरि क्रोष्टौ, क्रोष्ट्रोः-क्रोष्ट्वोः, क्रोष्टुषु। हे क्रोष्टः, हे क्रोष्टारौ, क्रोष्टारः इत्यादि।

**हे अतिचमु इति**। अतिचमूशब्दात्सम्बोधने सौ 'प्रमलिङ्गग्रहणं च' इति नदीसंज्ञायां 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे 'एङ्ह्रस्वात्सम्बुद्धेः' इति सुलोपे हे अतिचमु इति सिद्धम्।

**अतिचम्वै**। अतिचमूशब्दान्ङेप्रत्ययेऽनुबन्धलोपे नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि' 'आटश्च' इति वृद्धौ यणि च कृते अतिचम्वै इति सिद्धम्।

**अतिचमूशब्दस्य रूपाणि**—अतिचमूः, अतिचम्वौ, अतिचम्वः। अतिचमूम्, अतिचम्वौ, अतिचमून्। अतिचम्वा, अतिचमूभ्याम्, अतिचमूभिः। अतिचम्वै, अतिचमूभ्याम्, अतिचमूभ्यः। अतिचमूभ्यः। अतिचम्वोः, अतिचमूनाम्। अतिचम्वाम्, अतिचम्वोः, अतिचमूषु। हे अतिचमु, हे अतिचम्वौ, हे अतिचम्वः।

**ओः सुपि**। अत्र 'अचिश्नुधात्वि'त्यतोऽचीति 'इणो यण्' इत्यतो यणिति चानुवर्तते। 'एरनेकाचोऽसंयोगपूर्वस्य', इति सूत्रम् एरिदि वर्जमनुवर्तते।

---

२०७. अप् तृन् आदि की उपधा को दीर्घ होता है सम्बुद्धिभिन्न सर्वनामस्थान परे रहते।

२०८. क्रोष्टु शब्द को तृज्वद्भाव होता है विकल्पसे अजादि तृतीयादि विभक्ति परे रहते।

२०९. ऋदन्त अङ्ग से ङसि ङस् सम्बन्धी अकार परे रहते पूर्व पर के स्थान में उकार आदेश होता है।

**२१०. रात्सस्य ८।२।२४ ॥** रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः। क्रोष्टु। क्रोष्ट्रोः। क्रोष्ट्रो। ( नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ) क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्। हूहूः। हूह्वौ। हूह्वः। हूहूम् इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्। खलपूः।

**२११. ओः सुपि ६।४।८३ ॥** धात्ववयवसंयोगपूर्वो नभवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेका चोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः। वर्षाभूः।

---

**खलप्वौ।** खलपूशब्दादौविभक्तौ 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति सूत्रप्राप्तमुवङं बाधित्वा 'ओः सुपि' इति यणि खलप्वाविति साधु।

**खलपूशब्दस्य रूपाणि।** खलपूः, खलप्वौ, खलत्वः। खलत्वम्, खलप्वौ, खलप्वः। खलप्वा, खलपूभ्याम्, खलपूभिः। खलप्वे, खलपूभ्याम्, खलपूभ्यः। खलप्वः, खलपूभ्याम्। खलपूभ्यः। खलप्वः, खलप्वोः, खलप्वाम्। खलप्वि, खलप्वोः, खलपूषु। हे खलपूः, हे खलप्वौ, हे खलप्वः। इति।

**स्वभुवौ।** स्वभूशब्दात्प्रथमाद्विवचने औप्रत्यये 'ओ सुपि' इति यणि प्राप्ते 'न भूसुधियोः' इति तन्निषेधे 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति उवङि अनुबन्धलोपे स्वभुवौ इति सिद्धम्।

**स्वभूशब्दस्य रूपाणि।** स्वभूः, स्वभुवौ, स्वभुवः। स्वभुवम्, स्वभुवौ, स्वभुवः। स्वभुवा, स्वभूभ्याम्, स्वभूभिः। स्वभुवे, स्वभूभ्याम्, स्वभूभ्यः। स्वभुवः, स्वभूभ्याम्, स्वभूभ्यः। स्वभुवः, स्वभुवोः, स्वभुवाम्। स्वभुवि, स्वभुवोः, स्वभूषु। हे स्वभूः, हे स्वभुवौ, हे स्वभुवः।

**वर्षाभ्वश्च।** अत्र 'ओः सुपि' इति 'अचिश्नुधातु' इत्यतः अचीति 'इणो यण्' इत्यतो यणिति चानुवर्तते।

**वर्षाभ्वौ।** वर्षाभूशब्दाद् औप्रत्यये 'ओः सुपि' इतिप्राप्तयणः 'न भूसुधियोः' इति निषेधे 'वर्षाभ्वश्च' इति यणि वर्षाभ्वौ इति साधु।

---

२१०. रेफ से परे संयोगान्त लोप सकार का ही होता हैं अन्य का नहीं ( वा०-नुम् और अच् परे रहते र भाव और तृज्वद्भाव की अपेक्षा पूर्वविप्रतिषेध से नुट् ही होता है। )

२११. धातु के अवयवों का संयोग पूर्व में नहीं है जिसके ऐसा जो धातु तदन्त जो अनेकाच् अङ्ग उसको यण् होता है अजादि सुप् परे रहते।

**२१२. वर्षाभ्वश्च ६।४।८४॥** अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि। दृन्भूः। ( दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः ) दृन्भ्वौ। एवं करभूः। धाता। हे धातः। धातारौ। धातारः। ( ऋवर्णान्नस्य णत्वं वाच्यम् ) धातॄणाम्। नप्त्रादयः। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रा-

---

**दृन्भ्वौ।** दृन्भूशब्दाद् औप्रत्यये ओः सुपि' इतिप्राप्तयणः 'न भूसुधियोः' इति निषेधे 'दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः' इति वार्त्तिकेन यणि दृन्भ्वौ इति सिद्धम्। वर्षाभूदृन्भूशब्दयोः रूपं खलपूशब्दवज्ज्ञेयम्।

**धाता।** धातृशब्दात्सौ 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङि अनुबन्धलोपे 'अप्तृन्' इत्यादिना दीर्घे, अपृक्तसंज्ञायां 'हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे धाता इति सिद्ध्यति।

**हे धातः।** धातृशब्दात्सम्बोधने सुप्रत्ययेऽनुबन्धलोपे 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे अकारे रपरत्वे 'हल्ङ्यादिभ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपे रुत्वे विसर्गे हेशब्दस्य प्राक्प्रयोगे हे धातः इति सिद्धम्।

**धातारौ।** धातृशब्दादौप्रत्यये 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे रपरत्वे 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्' 'इति दीर्घे धातारौ इति सिद्धम्।

**धातॄणाम्।** धातृशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'नामि' इतिदीर्घे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे धातॄणामिति साधु।

**धातृशब्दस्य रूपाणि**—धाता, धातारौ, धातारः। धातारम्, धातारौ, धातॄन्। धात्रा, धातृभ्याम्, धातृभिः। धात्रे, धातृभ्याम्, धातृभ्यः। धातुः, धातृभ्याम्, धातृभ्यः। धातुः, धात्रोः, धातॄणाम्। धातरि, धात्रोः, धातृषु। हे धातः, हे धातारौ, हे धातारः।

**पिता।** पितृशब्दात्सुप्रत्ययेऽनुबन्धलोपे 'ऋदुशनस्पुरुदंसोऽनेहसां च' इति अनङि अनुबन्धलोपे 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इतिनलोपे पिता इति सिद्धम्।

**पितरौ।** पितृशब्दात्प्रथमाद्विवचने औप्रत्यये 'ऋतो ङिसर्वनामस्थानयोः इति

---

२१२. वर्षाभू शब्द के अवयव उवर्ण के स्थान में यण् होता है अजादि सुप् परे रहते। ( वा० = दृन्करपुनःपूर्वक भू धातु के उवर्ण को यण् होता है अजादि सुप् परे रहते। वा० = ऋवर्ण से परे न को ण होता है। )

दयः। ना। नरौ।

**२१३. नृ च ६।४।६।।** अस्य नामि वा दीर्घः। नृणाम्। नॄणाम्।

**२१४. गोतो णित् ७।१।९०।।** ओकाराद्विहितं सर्वनायस्थानं णिद्वत्। गौः। गावौ। गावः।

---

गुणे अकारे रपरत्वे नप्त्रादिग्रहणस्य व्युत्पत्तिपक्षे नियमार्थत्वाद् 'अप्तृन्' इत्यादिना दीर्घाभावे पितरौ इति सिद्धम्।

**पितृशब्दस्य रूपाणि**—पिता, पितरौ, पितरः। पितरम्, पितरौ, पितॄन्। पित्रा, पितृभ्याम्, पितृभिः। पित्रे, पितृभ्याम्, पितृभ्यः। पितुः, पितृभ्याम्, पितृभ्यः। पितुः, पित्रोः, पितॄणाम्। पितरि, पित्रोः, पितृषु। हे पितः, हे पितरौ, हे पितरः।

**ना।** नृशब्दात्सुप्रत्ययेऽनुबन्धलोपे 'ऋदुशनस्पुरुदंसोऽनेहासां च' इति अनङि अनुबन्धलोपे 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे सुलोपे नलोपे च ना इति सिद्धम्।

**नरौ।** नृशब्दाद् औप्रत्यये 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे रपरत्वे नरौ इति सिद्धम्।

**नृ च।** नृ इति लुप्तषष्ठीकम्। अत्र 'नामि' इतिसूत्रम् 'ढ्लोपे' इत्यतो दीर्घ 'छन्दस्युभयथा' इत्यतः उभयथेति चानुवर्तते।

**नृणाम्।** नृशब्दादाम्प्रत्यये 'ह्रस्वनद्यापो नुट्' इति नुटचनुबन्धलोपे 'नामि' इति दीर्घे प्राप्ते 'नृ च' इति वैकल्पिके दीर्घे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इतिणत्वे नॄणाम् इति दीर्घाभावपक्षे नृणामिति च साधु।

**नृशब्दस्य रूपाणि**—ना, नरौ, नरः। नरम्, नरौ, नॄन्। न्रा, नृभ्याम्, नृभिः। न्रे, नृभ्याम्, नृभ्यः। नुः, नृभ्याम्, नृभ्यः। नुः, न्रोः, नॄणाम्-नृणाम्। नरि, न्रोः, नृषु। हे नः, हे नरौ, हे नरः।

**गोतो णित्।** अत्र 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवर्तते यस्य प्रथमान्तत्वेन विपरिणामः। णिद्वत् इत्यस्य णिति परे यत्कार्यन्तत्कार्यकृदित्यर्थः।

**गौः।** गोशब्दात्सौ अनुबन्धलोपे 'गोतो णित्' इति णिद्वद्भावे 'अचो ञ्णिति' इति वृद्धौ रुत्वे विसर्गे च गौ इति सिद्धम्।

**गावौ।** गोशब्दादौप्रत्यये गोतो णित्' इति णिद्वद्भावे 'अचो ञ्णिति' इति वृद्धौ 'एचोऽयवायावः', इत्यावादेशे गावौ इति सिद्धम्।

---

२१३. नृशब्द को दीर्घ होता है नाम् परे रहते विकल्प से।

२१४. ओकार से विहित सर्वनामस्थान णिद्वत् होता है।

**२१५. औतोऽम्शसोः ६।१।९३ ॥** औतोऽम्शसोरचि आकार एकादेशः। गाम् । गावौ । गाः । गवा । गोः इत्यादि ।

**२१६. रायो हलि ७।२।८५ ॥** अस्याकारादेशो हलि विभक्तौ । राः ।

---

**औतोऽम्शसोः** । आ ओतः इति पदच्छेदः । अत्र 'इको यणचि' इत्यतः अचीत्यनुवर्तते । एकः पूर्वपरयोरित्यधिक्रियते ।

**गाम्** । गोशब्दाद् अम्प्रत्यये 'गोतो णित्' इति णिद्वद्भावे 'अचोञ्णिति' इति प्राप्तां वृद्धिमपवादत्वाद्बाधित्वा 'औतऽम्शसोः' इति आकारैकादेशे गाम् इति सिद्धम् ।

**गाः** । गोशब्दाच्छसि अनुबन्धलोपेऽसर्वनामस्थानत्वाद् णिद्वद्भाववृद्ध्योरभावे 'औतोऽम्शसोः' इति आकारैकादेशे रुत्वे विसर्गे च गाः इति सिद्धम् ।

**गोः** । गोशब्दान्ङसिप्रत्ययेऽनुबन्धलोपे 'ङसिङसोश्च' इति पूर्वरूपे रुत्वे विसर्गे च गोः इति सिद्धम् । अजादौ विभक्ताववादेशः ।

**गोशब्दस्य रूपाणि**—गौः, गावौः, गावः । गाम्, गावौ, गाः । गवा, गोभ्याम्, गोभिः । गवे, गोभ्याम्, गोभ्यः । गोः, गोभ्याम्, गोभ्यः । गोः, गवोः, गवाम् । गवि, गवोः, गोषु । हे गौः, हे गावौ, हे गावः ।

**रायो हलि** । अत्र 'अष्टन आ विभक्तौ' इत्यतः आ इति विभक्तौ इति चानुवर्तते । हलीति विभक्तावित्यस्य विशेषणम् 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिः । ततश्च हलादौ विभक्तावित्यर्थलाभः । राय इति रैशब्दस्य षष्ठ्यन्तम् ।

**राः** । रैशब्दात्सुप्रत्ययेऽनुबन्धलोपे 'रायो हलि' इत्यात्वे रुत्वे विसर्गे च कृते राः इति सिध्यति । अजादौ विभक्तौ तु आयादेशः ।

**रैशब्दस्य रूपाणि**—राः, रायौ, रायः । रायम्, रायौ, रायः । राया, राभ्याम्, राभिः । राये, राभ्याम्, राभ्यः । रायः, राभ्याम्, राभ्यः । रायः, रायोः, रायाम् । रायि, रायोः । रासु । हे राः, हे रायौ, हे रायः ।

---

२१५. ओकार से अम् अस् सम्बन्धी अच् परे रहते पूर्व पर के स्थान में आकार एकादेश होता है ।

२१६. रै शब्द को आकार अन्तादेश होता है हलादि विभक्ति परे रहते ।

इत्यजन्तपुल्लिङ्गाः

रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ।

इत्यजन्तपुल्लिङ्गाः ।

रमा । २१७. औङ आपः ७।१।१८ ॥ आबन्तादङ्गात्परस्यौङः शी स्यात् ॥ औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ।

२१८. सम्बुद्धौ च ७।३।१०६ ॥ आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वा-

---

**ग्लौ इति** । ग्लौशब्दस्याजादौ आवादेशः । ओकारौकारयोः सावर्ण्याद् औतोऽम्शसोः', इतिसूत्रेण अमि शसि च आत्वन्तु न शङ्क्यम् ऐऔच् इतिसूत्रारम्भसामर्थ्याद् ओकारौकारयोः सावर्ण्याभावकल्पनात् ।

**ग्लौशब्दस्य रूपाणि**—ग्लौः, ग्लावौ, ग्लावः । ग्लावम्, ग्लावौ, ग्लावः । ग्लावा, ग्लौभ्याम्, ग्लौभिः । ग्लावे, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लावोः, ग्लावाम् । ग्लावि, ग्लावोः, ग्लौषु । हे ग्लौः, हे ग्लावौ, हे ग्लावः ।

॥ इत्यजन्ताः पुँल्लिङ्गाः ॥

**रमा** । रमते इति रमा । क्रीडार्थकरम्धातोः पचाद्यचि 'अजाद्यतष्टाप्' इति टाप्प्रत्यये रमा इति भवति । रमा इत्यस्याप्रातिपदिकत्वेऽपि आबन्तत्वेन 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया प्रातिपदिकत्वेन वा 'स्वौजसमौट्.....' इति सुप्रत्ययेऽनुबन्धलोपे हल्ङ्यादिना सुलोपे रमेति सिद्धम् ।

**औङ आपः** । आपः प्रत्ययत्वेन 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदन्तविधिः । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । 'जसः शी' इत्यतः शीत्यनुवर्तते ।

**रमे** । रमाशब्दाद् औप्रत्यये 'औङ आपः' इति औ इत्यस्य श्यादेशेऽनुबन्धलोपे 'आद्गुणः' इति गुणे रमे इति सिद्धम् ।

**रमाः** । रमाशब्दाज्जसि अनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते तस्य दीर्घाज्जसि च' इति निषेधे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे रुत्वे विसर्गे च रमाः इति सिद्धम् ।

**सम्बुद्धौ च** । अत्र 'बहुवचने झल्येत्' इत्यतः एदिति 'आङि चापः' इत्यत आप इति चानुवर्तते ।

---

२१७. आबन्त अङ्ग से परे औ को शी आदेश होता है ।

२१८. आबन्त अङ्ग के आकार को एकार होता है सम्बुद्धि परे रहते ।

दिति संबुद्धिलोपः। हे रमे। हे रमे। हे रमाः। रमाम्। रमे। रमाः।

**२१९. आङि चापः ७।३।१०५ ॥** आङि ओसि चाप एकारः। रमया। रमाभ्याम्। रमाभिः।

**२२०. याडापः ७।३।११३ ॥** आपो ङितो याट्। वृद्धिः। रमायै। रमाभ्याम्। रमाभ्यः। रामायाः। रमयोः। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः।

---

**हे रमे।** रमाशब्दात्सम्बोधने सौ 'सम्बुद्धौ च' इत्येत्वे कृते एङ्ह्रस्वात्सम्बुद्धेः' इति सुलोपे हे शब्दस्य प्राक्प्रयोगे हे रमे इति सिद्धम्।

**रमाम्।** रमाशब्दादमि 'अमि पूर्वः' इति पूर्वरूपे तत्सिद्धिः।

**रमाः।** रमाशब्दाच्छसि अनुबन्धलोपे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे पुंस्त्वाभावान्नत्वाभावे रुत्वे विसर्गे च कृते रमाः इति सिद्धम्।

**आङि चापः।** अत्र 'ओसि च' इत्यनुवर्तते। आप इति षष्ठी। अङ्गस्येत्यधिक्रियते। तदन्तविधिः। 'बहुवचने झल्येत्' इत्यतः एदित्यनुवर्तते।

**रमया।** रमाशब्दात् टाविभक्तौ अनुबन्धलोपे 'आङि चापः' इत्येत्वे 'एचोऽयवायावः' इत्ययादेशे रमया इति सिद्धम्।

**याडापः।** अत्र 'घेर्ङिति' इत्यतो ङितोत्यनुवर्तते। तस्य षष्ठ्यन्तत्वेन विपरिणामः।

**रमायै।** रमाशब्दान्ङेप्रत्ययेऽनुबन्धलोपे 'याडापः' इति याडागमेऽनुबन्धलोपे 'वृद्धिरेचि' इति वृद्धौ रमायै इति सिद्धम्।

**रमायाः।** रमाशब्दान्ङसिप्रत्ययेऽनुबन्धलोपे 'याडापः' इति याडागमेऽनुबन्धलोपे 'अकः सवर्णे दीर्घः' इति सवर्ण दीर्घे रुत्वे विसर्गे रमायाः इति साधु।

**रमयोः।** रमाशब्दादोसि 'आङि चापः' इत्येत्वे कृते 'एचोऽयवायावः' इत्ययादेशे रुत्वे विसर्गे च कृते रमयोः इति सिद्धम्।

**रमाणाम्।** रमाशब्दादामि 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इतिणत्वे रमाणामिति सिद्धम्।

**रमायाम्।** रमाशब्दान्ङिप्रत्ययेऽनुबन्धलोपे 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'याडापः' इति याडागमेऽनुबन्धलोपे सवर्णदीर्घे रमायामिति सिद्धम्।

---

२१९. आङ् और ओस् परे रहते आबन्त अङ्ग को एकार होता है।

२२०. आबन्त अङ्ग से परे ङिद्वचन को याट् आगम होता है।

**२२१. सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४॥** आबन्तात्सर्वनाम्नो ङित स्याट् स्यादापश्च ह्रस्वः। सर्वस्यै। सर्वस्याः। सर्वासाम्। सर्वस्याम्। शेषं रमावत्। एवं विश्वादय आबन्ताः।

**२२२. विभाषा दिक्समासे बहुव्रीहौ १।१।२८॥** सर्वनामता वा। उत्तरपूर्वस्यै, उत्तरपूर्वायै। तीयस्येति वा सर्वनामसंज्ञा। द्वितीयस्यै। एवं

---

**सर्वनाम्नः स्याड्ढ्रस्वश्च**। अत्र 'याडापः' इत्यत आप आप इत्यनुवर्तते। तच्च सर्वनाम्न इत्यस्य विशेषणम्। तदन्तविधिः। 'घेर्ङिति' इत्यतः ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। ततश्च आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादित्यर्थः। ह्रस्वश्चेति वाक्यान्तरम्। आप इत्यनुवृत्तमार्तते। तस्य षष्ठ्यन्तत्वेन विपरिणाम ह्रस्व इत्यनेनान्वयश्च। आप स्थाने ह्रस्वो भवतीति तदर्थः।

**सर्वस्यै**। सर्वाशब्दान्ङेविभक्तौ अनुबन्धलोपे 'याडापः' इति याडागमे प्राप्ते तम्प्रबाध्य 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडागमेऽनुबन्धलोपे आपो ह्रस्वे च 'वृद्धिरेचि' इति वृद्धौ सर्वस्यै इति सिद्धम्।

**सर्वस्याः**। सर्वाशब्दान्ङसिप्रत्ययेऽनुबन्धलोपे 'याडापः' इति प्राप्तं याडागमं बाधित्वा 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडागमेऽनुबन्धलोपे आपो ह्रस्वे सवर्णदीर्घे रुत्वे विसर्गे च सर्वस्याः इति सिद्धम्।

**सर्वासाम्**। सर्वाशब्दादामि दीर्घैकादेशस्य पूर्वान्तत्वेन ग्रहणात् सर्वा इत्यस्य सर्वनामत्वेन 'आमि सर्वनाम्नः सुट्' इति सुडागमेऽनुबन्धलोपे सर्वासामिति सिद्धम्।

**सर्वस्याम्**। सर्वाशब्दान्ङिप्रत्ययेऽनुबन्धलोपे 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडागमेऽनुबन्धलोपे आपो ह्रस्वे सवर्णदीर्घे च कृते सर्वस्यामिति सिद्धम्।

**सर्वाशब्दस्य रूपाणि**—सर्वा, सर्वे, सर्वाः। सर्वाम्, सर्वे, सर्वाः। सर्वया, सर्वाभ्याम्, सर्वाभिः। सर्वस्यै, सर्वाभ्याम्, सर्वाभ्यः,। सर्वस्याः, सर्वाभ्याम्, सर्वाभ्यः। सर्वस्याः, सर्वयोः, सर्वासाम्। सर्वस्याम्, सर्वयोः, सर्वासु। हे सर्वे, हे सर्वे, हे सर्वाः।

**विभाषेति**। अत्र 'सर्वादीनि सर्वनामानि' इत्यतः सर्वनामग्रहणमनुवर्तते।

**उत्तरपूर्वस्यै**। उत्तरपूर्वाशब्दान्ङेविभक्तावनुबन्धलोपे 'विभाषा दिक्समासे बहुव्रीहौ' इति वैकल्पिकसर्वनामसंज्ञायां याटं बाधित्वा 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति

---

२२१. आबन्त सर्वनाम से परे ङिद्वचन को आट् आगम होता है और आप् को ह्रस्व होता है।

२२२. दिक् समास में बहुव्रीहि को सर्वनाम संज्ञा विकल्प से होती है।

तृतीया। अम्बार्थेति ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। जरा जरसौ इत्यादि। हलादौ च रमावत्। गोपा विश्वपावत्। मतिः। मत्या।

---

स्याडागमेऽनुबन्धलोपे आपो ह्रस्वे च 'वृद्धिरेचि' इति वृद्धौ उत्तरपूर्वस्यै इति सर्वनामसंज्ञाया अभावपक्षे 'याडापः' इति याडागमेऽनुबन्धलोपे वृद्धौ उत्तरपूर्वायै इति च सिद्धम्।

**उत्तरपूर्वाशब्दस्य रूपाणि**—उत्तरपूर्वा, उत्तरपूर्वे, उत्तरपूर्वाः। उत्तरपूर्वाम्, उत्तरपूर्वे, उत्तरपूर्वाः। उत्तरपूर्वया, उत्तरपूर्वाभ्याम्, उत्तरपूर्वाभिः। उत्तरतूर्वस्यै-उत्तरपूर्वायै, उत्तरपूर्वाभ्याम् उत्तरपूर्वाभ्यः। उत्तरपूर्वस्याः-उत्तरपूर्वायाः, उत्तरपूर्वाभ्याम्, उत्तरपूर्वाभ्यः। उत्तरपूर्वस्याः-उत्तरपूर्वायाः, उत्तरपूर्वयोः, उत्तरपूर्वासाम् उत्तरपूर्वाणाम्। उत्तरपूर्वस्याम्-उत्तरपूर्वायाम्, उत्तरपूर्वयोः उत्तरपूर्वासु। हे उत्तरपूर्वे, है उत्तरपूर्वे, हे उत्तरपूर्वाः।

**द्वितीयस्यै**। द्वितीयाशब्दाण्ङेप्रत्ययेऽनुबन्धलोपे 'तीयस्य ङित्सुवा' इति वैकल्पिकसर्वनामसंज्ञायाम् 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याडागमेऽनुबन्धलोपे आपो ह्रस्वे वृद्धौ द्वितीयस्यै इति, सर्वनामसंज्ञाया अभावपक्षे याटि वृद्धौ उत्तरपूर्वायै इति च सिध्यति।

**द्वितीयाशब्दस्य रूपाणि**—द्वितीया, द्वितीये, द्वितीयाः। द्वितीयाम्, द्वितीये, द्वितीयाः। द्वितीयया, द्वितीयाभ्याम्, द्वितीयाभिः। द्वितीयस्यै-द्वितीयायै, द्वितीयाभ्याम्, द्वितोयस्याः - द्वितीयायाः, द्वितोयाभ्याम्, द्वितीयाभ्यः। द्वितीयस्याः-द्वितीयायाः, द्वितीययोः, द्वितीयानाम्। द्वितीयस्याम्-द्वितीयायाम्, द्वितीययोः, द्वितीयासु। हे द्वितीये, हे द्वितीये, हे द्वितीयाः।

**हे अम्ब**। अम्बाशब्दात्सम्बोधने सौ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे 'एङ्ह्रस्वात्सम्बुद्धेः' इति सम्बुद्धिलोपे हे शब्दस्य प्राक्प्रयोगे हे अम्बेति सिद्धम्। रमावदस्य रूपम्।

**जरसौ**। जराशब्दादौविभक्तौ 'जराया जरसन्यतरस्याम्' इति पाक्षिके जरसादेशे जरसौ इति, जरसादेशाभावे औङः श्यादेशे गुणे जरे इति च सिद्धम्।

**जराशब्दस्य रूपाणि**—जरा, जरसौ-जरे, जरसः-जराः। जरसम्-जराम्, जरसौ-जरे, जरसः-जराः। जरसा-जरया, जराभ्याम्, जराभिः। जरसे-जरायै, जराभ्याम्, जराभ्यः। जरसः-जरायाः, जराभ्याम्, जराभ्यः। जरसः-जरायाः, जरासु। हे जरे, हेरसौ-हे जरे, हे जरसः-हे जराः।

**मत्या**। मतिशब्दात् तृतीयैकवचने टाप्रत्ययेऽनुबन्धलोपे 'शेषोध्यसखि' इति घिसंज्ञायाम् अस्त्रियामितिपर्युदासात् 'आङो नाऽस्त्रियाम्' इति नाभावाभावे यणि मत्या इति सिद्धम्।

**२२३. ङिति ह्रस्वश्च १।४।६ ॥** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्य-स्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै, मतये । मत्याः । मत्याः । मतेः । मतेः ।

**२२४. इदुद्भ्याम् ७।३।११७ ॥** इदुद्भ्यां नदीसंज्ञकाभ्यां परस्य ङेराम् स्यात् । मत्याम्, मतौ । शेषं हरिवत् ।

---

**ङिति ह्रस्वश्च** । अत्र 'यू स्त्र्याख्यौ नदी' इति सूत्रम्, नरहितम् 'नेयङुवङ्-स्थानावस्त्री' इति सूत्रम्, 'वामि' इत्यतो वेति चानुवर्तते । ह्रस्वश्चेति वाक्यान्तरम् । अत्रापि यू स्त्र्याख्यावित्यस्य वेत्यस्य च सम्बन्ध । ह्रस्ववाक्ये स्त्र्याख्यावित्यनेन स्त्रीलिङ्गावित्येतावदेव विवक्षितं न तु नित्यस्त्रीलिङ्गाविति' व्याख्यानात् । ततश्च मूलोक्तार्थलाभः ।

**मत्यै** । मतिशब्दान्ङेविभक्तावनुबन्धलोपे 'ङिति ह्रस्वश्च' इति वैकल्पिकनदी-संज्ञायाम् 'आनद्याः' इत्याडागमेऽनुबन्धलोपे 'आटश्च' इति वृद्धौ 'इकोयणचि' इति यणि मत्यै इति, नदीसंज्ञाया अभावपक्षे 'शेषोघ्यसखि' इति घिसंज्ञायां 'घेर्ङिति' इति गुणे 'एचोऽयवायवः' इत्यादेशे मतये इति च सिद्धम् ।

**मत्याः** । मतिशब्दान्ङसिप्रत्ययेऽनुबन्धलोपे 'ङिति ह्रस्वश्च' इति वैकल्पिकनदी-संज्ञायां 'आण्नद्याः' इत्याडागमेऽनुबन्धलोपे 'आटश्च' इति वृद्धौ यणि रुत्वे विसर्गे मत्याः इति, नदीसंज्ञाया अभावपक्षे घिसंज्ञायां गुणे 'ङसिङसोश्च' इति पूर्वरूपे रुत्वे विसर्गे च कृते मतेः इति च सिद्धम् ।

**इदुद्भ्याम्** । अत्र 'ङेराम्नद्याम्नीभ्यः' इत्यतो ङेराम् इति नदी इति चानुवर्तते ।

**मत्याम्** । मतिशब्दात् ङिप्रत्ययेऽनुबन्धलोपे 'ङिति ह्रस्वश्च' इति वैकल्पिक-नदीसंज्ञायाम् 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि प्राप्ते तं बाधित्वा 'औत्' इति ङेरौत्वे प्राप्ते तत्प्रबाध्य 'इदुद्भ्याम्' इति ङेरामि 'आण्नद्याः' घिसंज्ञायां 'घेर्ङिति' इतिप्राप्तं गुणं बाधित्वा 'अच्च घेः' इति ङेरौत्वे अन्तादेशेऽकारे च कृते वृद्धौ मतौ इति च सिद्धम् ।

**मतिशब्दस्य रूपाणि**—मतिः, मती, मतयः । मतिम्, मती, मतीः । मत्या,

---

२२३. इयङ् उवङ् के स्थानी स्त्री शब्द से भिन्न नित्य स्त्रीलिङ्गवाची जो शब्द तदवयव, जो दीर्घ ईकार ऊकार तथा ह्रस्व इवर्ण उवर्ण की नदी संज्ञा विकल्प से होती है ङिद्वचन परे रहते ।

२२४. नदीसंज्ञक जो ह्रस्व इकार और उकार उनसे परे जो ङि उसके स्थान में आम् आदेश होता है ।

**२२५. त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९ ॥** स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ ।

**२२६. अचि र ऋतः ७।२।१०० ॥** तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः । तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः । आमि नुट् ।

**२२७. न तिसृचतसृ ६।४।४ ॥** एतयोर्नामि दीर्घो न । तिसृणाम् ।

---

मतिभ्याम्, मतिभिः । मत्यै-मतये, मतिभ्यः । मत्याः-मतेः, मतिभ्याम्, मतिभ्यः । मत्याः-मतेः, मत्योः, मतीनाम् । मत्याम्-मतौ, मत्योः, मतीनाम् । मत्याम्-मतौ, मत्योः, मतिषु । हे मते, हे मती, हे मतयः ।

**त्रिचतुरोरिति ।** अत्र 'अष्टन आ विभक्तौ' इत्यतः विभक्तौ इत्यनुवर्तते ।

**अचि र ऋतः ।** अत्र 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति सूत्रात् तिसृचतसृ इत्यनुवर्तते तच्चात्र लुप्तषष्ठीकमाश्रीयते ।

**तिस्रः ।** त्रिशब्दाज्जसि प्रत्ययेऽनुबन्धलोपे 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशे तिसृ अस् इति स्थिते 'इको यणचि' इति यणि प्राप्ते तम्प्रबाध्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते तं बाधित्वा 'अचि र ऋतः' इति ऋकारस्य रेफादेशे रत्वे विसर्गे च तिस्रः इति सिद्धम् । शसि तु पूर्वसवर्णदीर्घं बाधित्वा रेफादेशो भवतीति विशेषः ।

**न तिसृचतसृ ।** अत्र 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति 'नामि' इति सूत्रश्चानुवर्तते । 'तिसृचतसृ' इति लुप्तषष्ठीकम् ।

**तिसृणाम् ।** त्रिशब्दादामि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिस्रादेशे तिसृ आम् इति स्थिते 'ह्रस्वनद्यापो नुट्' इति प्राप्तं नुटं बाधित्वा 'अचि र ऋतः' इति ऋकारस्य रेफादेशं बाधित्वा नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे प्राप्ते 'न तिसृचतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे तिसृणामिति सिद्धम् ।

---

२२५. स्त्रीलिङ्ग में वर्तमान जो त्रि और चतुर्शब्द उनके स्थान में क्रमसे-तिसृ और चतसृ आदेश होता है विभक्ति के परे रहते ।

२२६. तिसृ और चतसृ शब्दावयव ऋकार के स्थान में रेफादेश होता है अच् परे रहते ।

२२७. नाम् परे रहते तिसृ और चतसृ शब्दावयव अच् को दीर्घ नहीं होता है ।

तिसृषु। द्वे। द्वे। द्वाभ्याम्। द्वाभ्याम्। द्वयोः। द्वयोः। गौरी। गौर्य्यौ। गौर्य्यः। हे गौरि। गौर्य्यै इत्यादि। एवं नद्यादयः। लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः। स्त्री। हे स्त्रि।

**२२८. स्त्रियाः ६।४।७९॥** अस्येयङ् स्यादजादौ प्रत्यये। स्त्रियौ। स्त्रियः।

---

**द्वे**। द्विशब्दादौ विभक्तौ 'त्यदादीनामः' इत्यत्वे 'अजाद्यतष्टाप्' इति टाप्प्रत्ययेऽनुबन्धलोपे सवर्णदीर्घे 'औङ आपः' इति श्यादेशेऽनुबन्धलोपे गुणे द्वे इति सिद्धम्।

**द्वयोः**। द्विशब्दादोसि अन्तादेशे 'त्यदादीनामः' इति अकारे टाप् प्रत्ययेऽनुबन्धलोपे दीर्घे 'आङि चापः' इत्येत्वे अयादेशे रुत्वे विसर्गे द्वयोरिति साधु।

**गौरी**। गौरीशब्दात्सौ 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे गौरीति साधु।

**गौर्य्यौ** : गौरीशब्दाद् औप्रत्यये 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घे प्राप्ते 'दीर्घाज्जसि च' इति निषेधे 'इको यणचि' इति यणि 'अचो रहाभ्यां द्वे' द्वित्वे गौर्य्यौ इति सिद्धम्।

**हे गौरि**। गौरीशब्दात्सम्बोधने सौ 'यू स्त्र्याख्यौ नदी' इति नदीसंज्ञायाम् 'अम्बार्थनद्योर्ह्रस्वः, इति ह्रस्वे 'एङ्ह्रस्वात्सम्बुद्धेः' इतिसुलोपे हे इत्यस्य प्राक्प्रयोगे हे गौरि इति सिद्धम्।

**गौरीशब्दस्य रूपाणि**—गौरी, गौर्य्यौ, गौर्य्यः। गौरीम्, गौर्य्यौ, गौरीः। गौर्य्या, गौरीभ्याम्, गौरीभिः। गौर्य्यै, गौरीभ्याम्, गौरीभ्यः। गौर्य्याः, गौरीभ्याम्, गौरीभ्यः। गौर्य्याः, गौर्य्योः, गौरीणाम्। गौर्य्याम्, गौर्य्योः, गौरीषु। हे गौरि, हे गौर्य्यौ, हे गौर्य्यः।

**लक्ष्मीः**। लक्ष्मीशब्दात्सौ अनुबन्धलोपे 'लक्षेर्मुट् ईप्रत्ययश्च' इति ईप्रत्ययान्तत्वेन ङ्यन्तत्वाभावात् 'हल्ङ्याब्भ्य' इत्यादिना सुलोपाभावे रुत्वे विसर्गे च लक्ष्मीः इति सिद्धम्।

तदुक्तम्—अवी तन्त्री तरी लक्ष्मी धी ह्री श्रीणामुदाहृतः।
सप्तानामपि शब्दानां सुलोपो न कदाचन॥ इति॥

**स्त्रियाः**। अत्र 'अचिश्नुधातु' इत्यादिना अचीति इयङिति चानुवर्तते।

**स्त्रियौ**। स्त्रीशब्दादौप्रत्यये पूर्वसवर्णदीर्घं बाधित्वा 'स्त्रियाः' इति सूत्रेण इयङादेशेऽनुबन्धलोपे स्त्रियौ इति सिद्धम्।

---

२२८. स्त्री शब्दावयव ईकार के स्थान में इयङ् आदेश होता है अजादि प्रत्यय परे रहते।

२२९. **वाम्शसोः ६।४।८०** ॥ अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम्, स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् । स्त्रीषु । श्रीः । श्रियौ । श्रियः ।

---

**वाम्शसोः** । अत्र अचीति 'स्त्रियाः' इति चनुवर्तते ।

**स्त्रियम्** । स्त्रीशब्दाद् अम्प्रत्यये 'वाम्शसोः' इति पाक्षिके इयङादेशे स्त्रियम् इति, इयङभावपक्षे 'अमि पूर्वः' इति पूर्वरूपे स्त्रीमिति च सिद्धम् ।

**स्त्रियः** । स्त्रीशब्दाच्छसि अनुबन्धलोपे 'वाम्शसोः' इति वैकल्पिके इयङादेशे रुत्वे विसर्गे च कृते स्त्रियः इति । इयङभावपक्षे 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्ण-दीर्घे रुत्वे विसर्गे स्त्रीः इति च सिद्धम् ।

**स्त्रिया** । स्त्रीशब्दात् टाप्रत्ययेऽनुबन्धलोपे 'स्त्रियाः' इति इयङादेशेऽनुबन्धलोपे स्त्रिया इति सिद्धम् ।

**स्त्रियै** । स्त्रीशब्दान्ङेविभक्तावनुबन्धलोपे 'यू स्त्र्याख्यौ नदी' इति नदीसंज्ञा-याम् 'आण्नद्याः' इत्याडागमेऽनुबन्धलोपे 'आटश्च' इति वृद्धौ 'स्त्रियाः' इति इयङा-देशेऽनुबन्धलोपे स्त्रियै इति सिद्धम् ।

**स्त्रियाः** । स्त्रीशब्दान्ङसिप्रत्ययेऽनुबन्धलोपे 'यू स्त्र्याख्यौ नदी' इति नदीसंज्ञा-याम् 'आण्नद्याः' इत्याडागमेऽनुबन्धलोपे 'आटश्च' इति वृद्धौ 'स्त्रियाः' इतीयङा-देशेऽनुबन्धलोपे रुत्वे विसर्गे च स्त्रियाः इति साधु ।

**स्त्रीणाम्** । स्त्रीशब्दादामि 'यू स्त्र्याख्यौ नदी' इति नदीसंज्ञायाम् 'स्त्रियाः' इति इयङं बाधित्वा परत्वात् 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'अट्कुप्वा-ङ्नुम्व्यवायेऽपि' इति णत्वे स्त्रीणामिति सिद्धम् ।

**स्त्रीशब्दस्य रूपाणि** । स्त्री, स्त्रियौ, स्त्रियः । स्त्रियम्—स्त्रीम्, स्त्रियौ, स्त्रियः-स्त्रीः । स्त्रिया, स्त्रीभ्याम्, स्त्रीभिः । स्त्रियै, स्त्रीभ्याम्, स्त्रीभ्यः । स्त्रियाः, स्त्रीभ्याम्, स्त्रीभ्यः । स्त्रियाः, स्त्रियोः, स्त्रीणाम् । स्त्रियाम्, स्त्रियोः, स्त्रीषु । हे स्त्रि, स्त्रियौ, हे स्त्रियः ।

**श्रीः** । श्रीशब्दात्सौ अङ्यन्तत्वात्सुलोपाभावे रुत्वे विसर्गे च श्रीः इति साधु ।

**श्रियौ** । श्रीशब्दादौप्रत्यये 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङादेशेऽनु-बन्धलोपे श्रियौ इति सिद्धम् ।

**नेयङुवङिति** । अत्र 'यू' स्त्र्याख्यौ नदी' इत्यतो यू इति नदी इति चानुवर्तते ।

**हे श्रीः** । श्रीशब्दात्सम्बोधने सौ अनुबन्धलोपे 'यू स्त्र्याख्यौ नदी' इति नदी-

---

२२९. स्त्रीशब्दावयव ईकार के स्थान में इयङ् आदेश होता है विकल्प से अम् और शस् परे रहते ।

**२३०. नेयङुवङ्स्थानावस्त्री १।४।४ ॥** इयङुवङोः स्थितिर्ययोस्ताविदूतौ नदीसंज्ञौ न स्तो न तु स्त्री । हे श्रीः । श्रियै श्रिये । श्रिया श्रियः ।

**२३१. वामि १।४।५ ॥** इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री । श्रीणाम्, श्रियाम् । श्रियि । श्रियाम् । धेनुर्मतिवत ।

---

संज्ञायां प्राप्तायाम् 'नेयङ्वङ्स्थानावस्त्री' इति नदीसंज्ञानिषेधे तेन 'अम्बार्थनद्योर्ह्रस्वः इति ह्रस्वाभावे रुत्वे विसर्गे हे श्रीः इति साधु ।

**श्रियै** । श्रीशब्दान्ङेविभक्तावनुबन्धलोपे 'ङिति ह्रस्वश्च' इति वैकल्पिकनदीसंज्ञायाम् 'आण्नद्याः' इत्याडागमेऽनुबन्धलोपे 'आटचश्च' इति वृद्धौ 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इतीयङादेशेऽनुबन्धलोपे श्रियै इति, नदीसंज्ञाया अभावपक्षे श्रिये इति च सिद्धम् ।

**श्रियाः** । श्रीशब्दान्ङसिविभक्तावनुबन्धलोपे वैकल्पिकनदीसंज्ञायाम्, आडागमेऽनुबन्धलोपे वृद्धौ इयङि रुत्वे विसर्गे च श्रियाः इति । तदभावे श्रिय इति च सिद्धम् ।

**वामि** । अत्र यू स्त्र्याख्यौ नदी' इति, नरहितम् 'नेयङुवङ्स्थानावस्त्री' इति चानुवर्तते ।

**श्रीणाम्** । श्रीशब्दादामि 'वामि' इति वैकल्पिकनदीसंज्ञायाम् 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे श्रीणाम् इति । नदीत्वाभावपक्षे 'अचिश्नुधातु' इत्यादिना इयङि श्रियाम् इति च सिद्धम् ।

**श्रियाम्** । श्रीशब्दान्ङिप्रत्ययेऽनुबन्धलोपे 'ङिति ह्रस्वश्च' इति वैकल्पिकनदीसंज्ञायाम् 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि आटि वृद्धौ 'अचि श्नुधातु' इत्यादिना इयङि श्रियाम् इति । नदीत्वाभावपक्षे इयङि श्रियि इति च सिद्धम् ।

**श्रीशब्दस्य रूपाणि**—श्रीः, श्रियौ, श्रियः । श्रियम्, श्रियौ, श्रियः । श्रिया, श्रीभ्याम् श्रीभिः । श्रियै-श्रिये, श्रीभ्याम्, श्रीभ्यः । श्रिया-श्रियः, श्रीभ्याम्, श्रीभ्यः । श्रियाः-श्रिय, श्रियोः, श्रीणाम्-श्रियाम् । श्रियाम्-श्रियि-श्रियोः, श्रीषु । हे श्रीः, हे श्रियौ, हे श्रियः ।

धेनुः धेनू, धेनवः । धेनुम्, धेनू, धेनूः । धेन्वा, धेनुभ्याम्, धेनुभिः । धेन्वैधेनवे, धेनुभ्याम्, धेनुभ्यः । धेन्वाः-धेनोः, धेनुभ्याम्, धेनुभ्यः । धेन्वा-धेनोः, धेन्वोः, धेनूनाम् । धेन्वाम्-धेनौ, धेन्वोः, धेनुषु । हे धेनो, हे धेनू, हे धेनवः ।

---

२३०. इयङ् और उवङ् के स्थानीभूत जो नित्य स्त्रीलिङ्ग दीर्घ इकार और ऊकार उनको नदी संज्ञा नहीं होती है स्त्रीशब्दात्रयव ईकार को छोड़कर ।

२३१. इयङ् और उवङ् के स्थानीभूत जो नित्य स्त्रीलिङ्ग दीर्घ ईकार और ऊकार उनको नदी संज्ञा होती है आम् परे रहते विकल्प से । स्त्री शब्द को छोड़कर ।

**२३२. स्त्रियां च ७।१।९६ ॥** स्त्रीवाचो क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ।

**२३३. ऋन्नेभ्यो ङीप् ४।१।५** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री गौरीवत् । भ्रूः श्रीवत् । स्वयम्भूः पुंवत् ।

**२३४. न षट्स्वस्रादिभ्यः ४।१।१० ॥** ङीप्टापौ न स्तः । स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ।

---

**स्त्रियां च** । अत्र 'तृज्वत्क्रोष्टुः, इति सूत्रमनुवर्तते ।

**ऋन्नेभ्यो ङीप** । अत्र स्त्रियामित्यधिक्रियते ।

**क्रोष्ट्री** । क्रोष्टुशब्दात् सौ अङ्गसंज्ञायां 'स्त्रियां च' इति तृज्वद्भावे 'ऋन्नेभ्यो ङीप्' इति ङीप्प्रत्ययेऽनुबन्धलोपे यणि ततो 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे क्रोष्ट्री इति सिद्धम् । गौरीशब्दवदस्य रूपं बोध्यम् ।

**न षट्स्वस्रादिभ्यः** । अत्र 'टाबृचि' इत्यतः टाप् इति 'ऋन्नेभ्यो ङीप्' इत्यतः ङीप् इति चानुवर्तते ।

**स्वसा** । स्वसृशब्दात् 'ऋन्नेभ्यो ङीप्' इति ङीपि प्राप्ते 'न षट्स्वस्रादिभ्यः, इति तन्निषेधे तत' सौ अनुबन्धलोपे 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङादेशेऽनुबन्धलोपे 'अप्तृन्' इत्यादिना दीर्घे 'हल्ङ्याब्भ्यः इत्यादिना सुलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे स्वसा इति सिद्धम् ।

**स्वसारौ** । स्वसृशब्दादौप्रत्यये 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे रपरत्वे 'अप्तृन्' इत्यादिना दीर्घे स्वसारौ इति सिद्धम् ।

**स्वसृशब्दस्यरूपाणि**—स्वसा, स्वसारौ, स्वसारः । स्वसारम्, स्वसारौ, स्वसृः । स्वस्रा, स्वसृभ्याम्, स्वसृभिः । स्वस्रे, स्वसृभ्याम्, स्वसृभ्यः । स्वसुः, स्वसृभ्याम्, स्वसृभ्यः । स्वसुः, स्वस्रोः, स्वसॄणाम् । स्वसरि, स्वस्रोः, स्वसृषु । हे स्वसः, हे स्वसारौ, हे स्वसारः ।

**नप्तृन्दाशब्दस्य रूपाणि**—ननान्दा, ननान्दरौ, ननान्दरः । ननान्दरम्,

---

२३२. स्त्रीलिङ्ग का वाचक जो क्रोष्टु शब्द तृजन्त ( क्रोष्टु ) शब्द के समान रूप प्राप्त करता है । अर्थात् क्रोष्टु शब्द के स्थान में क्रोष्टृ शब्द का प्रयोग होता है ।

२३३. ऋदन्त और नान्त शब्द से स्त्रीलिङ्ग की विवक्षा में ङीप् प्रत्यय होता है ।

२३४. षट्संज्ञक और स्वस्रादि गणपठितशब्दों से ङीप् अथवा टाप् प्रत्यय नहीं होते ।

इति अजन्तस्त्रीलिङ्गप्रकरणम् ।

स्वसा। स्वसारौ। माता पितृवत्। शसि मातॄः। द्यौर्गोवत्। राः पुंवत्। नौग्लौवत्।

इत्यजन्तस्त्रीलिङ्गाः।

## अथाजन्तनपुंसकलिङ्गाः

**२३५. अतोऽम्** ७।१।२४॥ अतोऽङ्गात् क्लीवात्स्वमोरम्। अमि पूर्वः। ज्ञानम्। एङ्ह्रस्वादिति हल्लोपः। हे ज्ञान।

**२३६. नपुंसकाच्च** ७।१।१९॥ क्लीबादौङःशी स्यात्। भसंज्ञायाम्।

**२३७. यस्येतिच** ६।४।१४८॥ ईकारे तद्धिते च परे भस्येवर्णावर्णयो-

---

ननान्दरौ, ननान्दुः। ननान्द्रा, ननान्दृभ्याम्। ननान्दृभिः। ननान्द्रे, ननान्दृभ्याम्, ननान्दृभ्यः। ननान्दुः, ननान्दृभ्याम्, नवान्दृभ्यः। ननान्दुः; ननान्द्रोः, ननान्दृणाम्। ननान्दरि, ननान्द्रोः, ननान्दृषु। हे ननान्दः, हे ननान्दरौ, हे ननान्दरः। दुहितृ यातृ मातृ शब्दानां पितृशब्दवदेव रूपं बोध्यम्। केवलमेषां शसि नत्वाभावो विशेषः।

इत्यजन्ता स्त्रीलिङ्गाः।

**अतोऽम्**। अत्र 'अङ्गस्य' इत्यधिक्रियते। तस्य पञ्चम्यन्तत्वेन विपरिणामः। 'स्वमोर्नपुंसकात्' इत्यनुवर्तते।

**ज्ञानम्**। ज्ञानशब्दात्सौ 'स्वमोर्नपुंसकात्' सोर्लुकि प्राप्ते तं बाधित्वा 'अतोऽम्' इति सोरमादेशे 'अमि पूर्वः' इति पूर्वरूपे ज्ञानम् इति सिद्धम्।

**हे ज्ञान**। ज्ञानशब्दात्सम्बोधने सौ 'स्वमोर्नपुंसकात्' इति लुकं बाधित्वा 'अतोऽम्' इति सोरमादेशे 'अमि पूर्वः' इति पूर्वरूपे 'एङ्ह्रस्वात्सम्बुद्धेः' इति मकारलोपे हेशब्दस्य वाक्यप्रयोगे हे ज्ञान इति सिद्धम्।

**नपुंसकाच्च**। अत्र 'जसः शी' इत्यतः शी इति 'औङ आपः' इत्यत औङ इति चानुवर्तते।

**यस्येति च**। अत्र 'नस्तद्धिते' इत्यतः तद्धिते इत्यनुवर्तते। भस्येत्यधिक्रियते। इश्च अश्च अनयोः समाहारः यं तस्य यस्येति विग्रहः। ततो मूलोक्तार्थलाभः।

---

२३५. अदन्त अङ्ग से परे सु और अम् के स्थान में अम् आदेश होता है नपुंसकलिङ्ग में।

२३६. नपुंसक से परे जो औङ् ( औ–औट् ) उसके स्थान में शी आदेश होता है।

२३७. ईकार और तद्धितप्रत्यय परे रहते भसंज्ञक इवर्ण और अवर्ण का लोप होता है। ( वा० औङ् के स्थान में शी से इकार के रहते भसंज्ञक इवर्ण और अवर्ण का लोप नहीं होता )।

र्लोपः। इत्यल्लोपे प्राप्ते ( औङः श्यां प्रतिषेधो वाच्यः ) ज्ञाने।

**२३८. जश्शसोः शिः ७।१।२०** ॥ क्लीबादनयोः शिः स्यात्।

**२३९. शि सर्वनामस्थानम् १।१।४२** ॥ शि इत्येतदुक्तसंज्ञं स्यात्।

**२४०. नपुंसकस्य झलचः ७।१।७२** ॥ झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने।

**२४१. मिदचोऽन्त्यात्परः १।१।४७** ॥ अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्। एवं धनवनफलादयः।

---

**ज्ञाने**। ज्ञानशब्दाद् औप्रत्यये 'नपुंसकाच्च' इति श्यादेशे ज्ञानेत्यस्य भसंज्ञायाम् 'यस्येति च' इत्यकारलोपे प्राप्ते 'औङः श्यां प्रतिषेधो वाच्यः' इति निषेधे 'आद्गुणः' इति गुणे ज्ञाने इति सिद्धम्।

**जश्शसोः शिः**। अत्र 'नपुंसकाच्च' इत्यतो नपुंसकादित्यनुवर्तते।

**नपुंसकस्य झलचः**। झल् च अच्चेति समाहारद्वन्द्वः। 'इदितोनुम्धातोः' इत्यतो नुम् इति,। 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यतः सर्वनामस्थाने इति चानुवर्तते। तदन्तविधिः।

**ज्ञानानि**। ज्ञानशब्दाज्जसि विभक्तौ 'जश्शसोः शिः' इति जसः श्यादेशेऽनुबन्धलोपे 'शि सर्वनामस्थानम्' इतिसर्वनामस्थानसंज्ञायाम् 'मिदचोऽन्त्यात्परः' इति सूत्रबलात्' 'नपुंसकस्य झलचः' इति सूत्रेण अन्तावयवे नुमागमेऽनुबन्धलोपे, 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधादीर्घे ज्ञानानि इति सिद्धम्।

**ज्ञानशब्दस्य रूपाणि**—ज्ञानम्, ज्ञाने, ज्ञानानि। ज्ञानम्, ज्ञाने, ज्ञानानि। ज्ञानेन, ज्ञानाभ्याम्, ज्ञानैः ज्ञानाय, ज्ञानाभ्याम्, ज्ञानेभ्यः। ज्ञानात्-ज्ञानाद्, ज्ञानाभ्याम्, ज्ञानेभ्यः। ज्ञानस्य, ज्ञानयोः, ज्ञानानाम्। ज्ञाने, ज्ञानयोः, ज्ञानेषु। हे ज्ञान, हे ज्ञाने, हे ज्ञानानि।

---

२३८. नपुंसक अङ्ग से परे जस् और शस् के स्थान में शि आदेश होता है।

२३९. शि की सर्वनामस्थान संज्ञा होती है।

२४०. झलन्त और अजन्त अङ्ग को नुम् का आगम होता है सर्वनाम स्थान ( शि ) परे रहते।

२४१. अचों से मध्य में जो अन्त्य अच् उससे परे और उसी का अन्तावयव मित् आगम होता है। अर्थात् मित् आगम अन्त्य अच् से परे होता है और उसी का अन्तावयव भी होता है।

**२४२. अद्ड्डतरादिभ्यः पञ्चभ्यः ७।१।२५ ॥** एभ्यः क्लीबेभ्यः स्वमोरद्ड्डादेशः स्यात् ।

**२४३. टेः ६।४।१४३ ॥** डिति भस्य टेर्लोपः । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् । एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । ( एकतरात्प्रतिषेधो वक्तव्यः ) एकतरम् ।

---

अद्ड्डतरादिभ्यः । अत्र 'स्वमोर्नपुंसकात्' इति सूत्रमनुवर्तते । नपुंसकादित्यस्य बहुवचनान्तत्वेन विपरिणामः । डतरडतमयोः प्रत्ययत्वात्तदन्तग्रहणम् ।

**टेः** । अत्र 'भस्य' इत्यधिक्रियते । 'अल्लोपोऽनः' इत्यतो लोप इति 'ति विंशतेर्डिति' इत्यतो डिति इति चानुवर्तते ।

**कतरत्** । कतरशब्दात्सौ 'स्वमोर्नपुंसकतात्' इति लुको बाधकम् 'अतोऽम्' इति प्राप्तम् तं बाधित्वा 'अद्ड्डतरादिभ्यः पञ्चभ्य' इति सोरद्ड्डादेशेऽनुबन्धलोपे 'टेः' इति टिलोपे टेर्लुप्तत्वात् 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घाभावे 'वावसाने' इति वैकल्पिकचर्त्वे कतरत्-कतरद् इति रूपद्वयं सिद्धम् ।

**हे कतरत्** । कतरशब्दात्सम्बोधने सौ 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इति सोरद्ड्डादेशेऽनुबन्धलोपे भसंज्ञायाम् 'टेः' इति टिलोपे टेर्लुप्तत्वात् 'प्रथमयोः पूर्वसवर्णः' इति दीर्घाभावे एङन्त ह्रस्वान्ताङ्गपरसंबुद्ध्यवयवहलोऽभावेन 'एङ्ह्रस्वात्सम्बुद्धेः' इति सम्बुद्धिलोपाभावे चर्त्वे च हे कतरत्-हे कतरद् इति सिद्धम् ।

कतरत्-कतरद्, कतरे, कतराणि । कतरत्-कतरद्, कतरे, कतराणि । कतरेण, कतराभ्याम्, कतरैः । कतरस्मै, कतराभ्याम्, कतरेभ्यः । कतरस्मात्कतरस्माद्, कतराभ्याम्, कतरेभ्यः । कतरस्य, कतरयोः, कतरेषाम् । कतरस्मिन्, कतरयोः, कतरेषु । हे कतरत्-हे कतरद् हे कतरे, हे कतराणि ।

**अन्यतमम्** । अन्यतमशब्दात्सौ अस्य शब्दस्य अव्युत्पन्नप्रातिपदिकत्वेन डतमप्रत्यान्तत्वाभावात् 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इति सोरद्ड्डादेशाभावे 'स्वमोर्नपुंसकात्' इति सोर्लुकं बाधित्वा 'अतोऽम्' इति सोरमादेशे 'अमि पूर्वः' इति पूर्वरूपे अन्यतममिति सिद्धम् । अस्य सर्वादौ पाठाभावेन ज्ञानशब्दवदेव रूपं बोध्यम् ।

**एकतरम्** । एकतरशब्दात्सौ सोर्लुग्बाधकममं बाधित्वा 'अद्ड्डतरादिभ्यः

---

२४२. डतरादि ( डतर डतम अन्य अन्यतर इतर ) पाँचों प्रत्ययान्तों से परे सु और अम् के स्थान में अद्ड् आदेश होता है नपुंसकलिङ्ग में ।

२४३ डकारेत्संज्ञक प्रत्यय परे रहते भसंज्ञक टि का लोप होता है । वा० किन्तु एकतर शब्द के टि को लोप का प्रतिषेध होता है ।

**२४४. ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७ ॥** अजन्तस्येत्येव । श्रीपं ज्ञानवत् ।

**२४५. स्वमोर्नपुंसकात् ७।१।२३ ॥** लुक् स्यात् । वारि ।

**२४६. इकोऽचि विभक्तौ ७।१।७३ ॥** इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी । वारीणि । न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो

---

पञ्चभ्यः, इति सोरद्डादेशे प्राप्ते 'एकतरात् प्रतिषेधो वक्तव्यः' इति तत्प्रतिषेधे 'अतोऽम्' इति सोरमादेशे 'अमि पूर्वः' इति पूर्वरूपे एकतरमिति सिद्धम् । शेषं कतरशब्दवदेवास्य रूपम् ।

**श्रीपम्** । श्रीपाशब्दस्य 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे ततः सौ अतोऽम्' इति सोरमादेशे 'अमिपूर्वः' इति पूर्वरूपे श्रीपम् इति सिद्धम् ।

**स्वमोरिति** । 'अत्र षड्भ्योलुक्' इत्यतो लुगित्यनुवर्तते ।

**वारि** । वारिशब्दात्सौ 'स्वमोर्नपुंसकात्' इति सोर्लुकि वारि इति सिद्धम् ।

**इकोऽचि** । अत्र 'इदितोनुम् धातोः' इत्यतो नुम् इति 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येति चानुवर्तते । तदन्तविधिः ।

**वारिणी** । वारिशब्दाद् औ विभक्तौ 'नपुंसकाच्च' इति श्यादेशेऽनुबन्धलोपे 'इकोऽचि विभक्तौ' इति नुमागमेऽनुबन्धलोपे णत्वे वारिणी इति सिद्धम् ।

**वारीणि** । वारिशब्दाज्जसि 'जश्शसोः शिः' इति श्यादेशे ऽनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायाम् 'इकोऽचि विभक्तौ' इति नुमागमेऽनुबन्धलोपे 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे णत्वे वारीणि इति सिद्धम् ।

**हे वारे** । वारिशब्दात्सम्बोधने सौ 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'न लुमताङ्गस्य' इत्यस्यानित्यत्वात् 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन पाक्षिके 'ह्रस्वस्य गुणः' इति गुणे हे वारे इति, गुणाभावपक्षे हे वारि इति च सिद्धम् । हलादौ सत्यपि नुमागमे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपेन, सम्बुद्धेर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावेन नुमः प्राप्त्यभावात्सम्बुद्धौ दोषाभावेन च सकलेष्टसिद्धौ 'इकोऽचि विभक्तौ' इति सूत्रस्थम् अज्ग्रहणमेव व्यर्थं सद् 'न लुमताङ्गस्य' इत्यस्यानित्यत्वे प्रमाणम् ।

---

२४४. अजन्त नपुंसक प्रातिपदिक को ह्रस्व होता है ।

२४५. नपुंसक अङ्ग से परे सु और अम् का लोप होता है ।

२४६. इगन्त नपुंसक अङ्गको नुम् होता है अजादि विभक्ति परे रहते । वा० वृद्धि औत्व तृज्वद्भाव और गुण को बाध कर पूर्वविप्रतिषेध से नुम् होता है ।

गुणः । हे वारे, हे वारि । घेर्ङितीति गुणे प्राप्ते । ( वृद्धयौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ।

**२४७. अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५ ॥** एषामनङ् स्याट्टादावाचि ।

---

**वारिणा** । वारिशब्दात् टाविभक्तावनुबन्धलोपे घिसंज्ञायां परत्वाद् 'इकोऽचि विभक्तौ' इति सूत्रप्राप्तं नुमं बाधित्वा 'आङो नाऽस्त्रियाम्' इति नाऽदेशे 'अट्कुप्वाङ् नुम्व्यवायेऽपि, इति णत्वे वारिणा इति सिद्धम् ।

**वारिणे** । वारिशब्दान्ङेविभक्तावनुबन्धलोपे घिसंज्ञायाम् 'इकोऽचि विभक्तौ' इति नुमं बाधित्वा परत्वाद् 'घेर्ङिति' इति गुणे प्राप्ते 'वृद्धयौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इतिवार्त्तिकबलान्नुमागमेऽनुबन्धलोपे णत्वे वारिणे इति सिद्धम् । अतिसखीनि इत्यत्र 'सख्युरसम्बुद्धौ' इति णिद्वद्भावेन वृद्धिः प्राप्नोति । वारिणि इत्यत्र 'अच्च घेः' इत्यौत्वम्प्राप्नोति । प्रियक्रोष्टूनि इत्यत्र 'तृज्वत्क्रोष्टुः इति तृज्वद्भावः प्राप्नोति । वारिणे इत्यादौ गुणः प्राप्नोति । अत्र सर्वत्र पूर्वविप्रतिषेधान्नुमेव भवति ।

**वारीणाम्** । वारिशब्दादामि परप्वान्नुटं पूर्वविप्रतिषेधात्तृज्वद्भावं च बाधित्वा नुमि प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति वार्त्तिकबलान्नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे णत्वे वारीणामिति सिद्धम् ।

**वारिणि** । वारिशब्दान्ङिप्रत्ययेऽनुबन्धलोपे घिसंज्ञायाम् 'अच्च घेः' इति नुमं बाधित्वा परत्वादौत्वे प्राप्ते 'वृद्धयौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इति वार्त्तिकबलान्नुमागमेऽनुबन्धलोपे णत्वे वारिणि इति साधु ।

**वारिशब्दस्य रूपाणि** । वारि, वारिणी, वारीणि । वारि, वारिणी, वारीणि । वारिणा, वारिभ्याम्, वारिभिः । वारिणे, वारिभ्याम्, वारिभ्यः । वारिणः, वारिभ्याम्, वारिभ्यः । वारिणः, वारिणोः, वारीणाम् । वारिणि, वारिणोः वारिषु । हे वारे-हे वारि, हे वारिणी, हे वारीणि ।

**अस्थिदधीति** । 'इकोऽचि विभक्तौ' इत्यतः अचीति 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इत्यतः तृतीयादिषु इति चानुवर्तते ।

---

२४७. अस्थि दधि सक्थि और अक्षि शब्द के अन्त्यावयव के स्थानों में अनङ् आदेश होता है और वह उदात्त होता है । यदि अजादि विभक्ति परे रहते ।

**२४८. अल्लोपोऽनः ६।४।१२४ ॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः । दध्नः । दध्नोः ।

**२४९. विभाषा ङिश्योः ६।४।१३६ ॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि, दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । सुधि । सुधिनी । सुधीनि । हे सुधे, हे सुधि ।

---

**'अल्लोपोऽनः** । अत् इति लुप्तषष्ठीकं पदम् । अन इत्यवयवषष्ठ्यन्तम्, अत् इत्यनेनान्वेति । भस्येत्यधिक्रियते तेनाक्षिप्तः सर्वो भसंज्ञानिमित्तकः प्रत्ययः, अवयवषष्ठ्यन्तमधिकृतमङ्गस्येति च उभयमनोविशेषणम् । अन् चाकारस्य विशेषणम् ।

**दध्ना** । दधिशब्दात् टाविभक्तावनुबन्धलोपे 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति अनङादेशेऽनुबन्धलोपे 'अल्लोपोऽनः' इति अनोऽकारस्य लोपे दध्ना इति सिद्धम् ।

**दध्नि** । दधिशब्दान्ङौ अनुबन्धलोपे 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनङादेशेऽनुबन्धलोपे 'विभाषा ङिश्योः' इति वैकल्पिकेऽकारस्य लोपे दध्नि इति, अल्लोपाभावपक्षे दधनि इति च सिद्धम् ।

**दधि शब्दस्य रूपाणि** । दधि दधिनी, दधीनि, । दधि, दधिनी, दधीनि । दध्ना, दधिभ्याम्, दधिभिः । दध्ने, दधिभ्याम्, दधिभ्यः । दध्नः दधिभ्याम् दधिभ्यः । दध्नः, दध्नोः, दध्नाम् । दध्नि-दधनि, दध्नोः, दधिषु । हे दधे-हे दधि, हे दधिनी, हे दधीनि ।

**सुधि** । सुधीशब्दात्सौ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'स्वमोर्नपुंसकात्' इति सोर्लुकि सुधि इति साधु ।

**सुधिनी** । सुधीशब्दाद् औविभक्तौ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे श्यादेशे 'अचि श्नु' इत्यादिना प्राप्तम् इयङादेशं परत्वाद्बाधित्वा 'इकोऽचि विभक्तौ' इति नुमागमेऽनुबन्धलोपे सुधिनी इति सिद्धम् ।

**सुधे** । सुधीशब्दात्सम्बोधने सौ ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'स्ववमोर्नपुंसकात्' इति सोर्लुकि 'न लुमताङ्गस्य' इत्यस्यानित्यत्वापक्षे 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन 'ह्रस्वस्य गुणः' इति गुणे हे सुधे इति, हे सुधि इति च सिद्धम् ।

---

२४८. अङ्ग का अवयव, सर्वनामस्थान से भिन्न आदि स्वादि से परे जो अन् उसके अकार का लोप होता है ।

२४९. अङ्ग का अवयव सर्वनामस्थान से भिन्न यजादि स्वादि से परे जो अन् उसके अकार का लोप होता है विकल्प से ङि और शि परे रहते ।

**२५०. तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७।१।७४ ।।** प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावाचि । सुधिया, सुधिनेत्यादि । मधु । मधुनी । मधूनि । हे मधो, हे मधु । सुलु । सुलुनी । सुलूनि । सुलुने-

---

**तृतीयादिष्विति** । अत्र भाषितः पुमान् यस्मिन्नर्थे तत् भाषित पुंस्कं प्रवृत्तिनिमित्तम्, तस्यास्तीति भाषितपुंस्कमिति विग्रहः । अर्शआदित्वादच् । एकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तद्वा पुंवदिति तदर्थः । 'इकोऽचि विभक्तौ' इत्यतः अचीत्यनुवर्तते ।

भाषितपुंस्कलक्षणं तु—

यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते ।
क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते ।। इति ।

सुधीशब्दे सुष्ठु ध्यायतीति, सुष्ठु-शोभना धीर्यस्येति वा विग्रहः । तेन सुष्ठुध्यानकर्तृत्वं शोभनबुद्धिमत्त्वं वा प्रवृत्तिनिमित्तम् । तच्च पुंसि स्त्रियां क्लीबे च समानमेव।

**सुधिया** । सुधीशब्दात् टाविभक्तावनुबन्धलोपे 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य, इति पुंवद्भावेन ह्रस्वनुमोरभावे 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङादेशेऽनुबन्धलोपे सुधिया इति, पुंवद्भावाभावपक्षे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'इकोऽचि विभक्तौ, इति नुमागमेऽनुबन्धलोपे सुधिना इति च सिद्धम् ।

**सुधी शब्दस्य रूपाणि**—सुधि, सुधिनी, सुधीनि । सुधि, सुधिनी, सुधीनि । सुधिया-सुधिना, सुधिभ्याम्, सुधिभिः । सुधिये-सुधिने, सुधिभ्याम्, सुधिभ्यः । सुधियः-सुधिनः, सुधिभ्याम्, सुधिभ्यः । सुधियः-सुधिनः, सुधियोः-सुधिनोः, सुधियाम्-सुधीनाम् । सुधियि-सुधिनि, सुधियोः-सुधिनोः, सुधिषु । हे सुधे-हे सुधि, हे सुधिनी, हे सुधीनि ।

'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च' इति कोशात् मधुशब्दस्य पुंनपुंसकयोः मद्यत्ववसन्तत्वादिरूपप्रवृत्तिनिमित्तभेदात् न पुंवत्त्वविकल्पः । मधुशब्दस्य रूपाणि सिद्धिप्रकारश्च वारिशब्दवदेवेति शम् ।

सुलूशब्दे सुष्ठु लुनातीति विग्रहात् सुष्ठुलवनकर्तृत्वरूपप्रवृत्तिनिमित्तस्य पुंनपुंसकयोरैक्यात्पुंवद्भावो भवत्येव ।

**सुल्वा** । सुलूशब्दात् टाविभक्तावनुबन्धलोपे 'तृतीयादिषु भाषितपुंस्कं पुंद्गालवस्य' इति पाक्षिकपुंवद्भावेन ह्रस्वनुमोरभावे 'अचि श्नु'इत्यादिना प्राप्तमुवङादेशं

---

२५०. प्रवृत्ति निमित्तके एक होने पर भाषितपुंस्क इगन्त नपुंसक पुंवत् होता है विकल्प से टादि अजादि प्रत्यय परे रहते ।

त्यादि। धातृ। धातृणी। धातॄणि। हे धातः, हे धातृ। धातॄणाम्। एवं ज्ञात्रादयः।

२५१. एच इग्घ्रस्वादेशे १।१।४८॥ आदिश्यमानेषु ह्रस्वेषु मध्ये एच

---

बाधित्वा 'ओः सुपि' इति यणि सुल्वा इति। पुंवद्भावाभावपक्षे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'इकोऽचि विभक्तौ' इति नुमागमेऽनुबन्धलोपे सुलुना इति च सिद्धम्।

सुलू शब्दस्य रूपाणि—सुलु, सुलुनी, सुलूनि। सुलु, सुलुनी, सुलूनि। सुल्वा, सुलुना, सुलुभ्याम्, सुलुभिः। सुल्वे-सुलुने, सुलुभ्याम्, सुलुभ्यः। सुल्वः-सुलुनः, सुलुभ्याम्, सुलुभ्यः। सुल्वः-सुलुनः, सुल्वोः-सुलुनोः, सुल्वाम्-सुलूनाम्। सुल्वि-सुलुनि, सुल्वोः-सुलुनोः, सुलुषु। हे सुलो, हे सुलु, हे सुलुनी, हे सुलूनि।

हे धातः। धातृशब्दात्सम्बोधने सो 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'न लुमताङ्गस्य' इत्यस्यानित्यत्वात्पक्षे प्रत्ययलक्षणेन 'ह्रस्वस्य गुणः' इति सम्बुद्धिनिमित्ते गुणे रपरे विसर्गे च कृते हे धातः इति, हे धातृ इति च सिद्धम्।

धात्रा। धातृशब्दात् टाविभक्तावनुबन्धलोपे धारणकर्तृत्वरूपप्रवृत्तिनिमित्तस्य पुंनपुंसकयोरैक्येन 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पाक्षिके पुंवद्भावे नुमोऽभावेन यणि धात्रा इति। पुंवद्भावाभावपक्षे 'इकोऽचि विभक्तौ' इति नुमागमेऽनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे धातृणा इति च सिद्धम्।

धातॄणाम्। धातृशब्दादामि 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पाक्षिके पुंवद्भावेन नुमोऽभावे 'ह्रस्वनद्यापो नुट्' इति नुडागमेऽनुबन्धलोपे 'नामि' इति दीर्घे 'ऋवर्णान्नस्य णत्वं वाच्यम्, इति णत्वे धातॄणाम् इति। पुंवद्भावाभाव-पक्षेऽपि 'नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेन' इति वार्तिकेन नुमागमं बाधित्वा नुडागमेऽनुबन्धलोपे दीर्घे णत्वे धातॄणामित्येव सिद्ध्यतीति दिक्।

एच इग्घ्रस्वादेशे। एच्प्रत्याहारस्थवर्णेषु अवर्णांशस्यापि सत्त्वेन 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति सूत्रेण एच इगेव ह्रस्वो यथा स्यात् कदाचित् अकारोऽपि ह्रस्वो न स्यादिति नियमार्थमिदं सूत्रम्।

---

२५१. एच के स्थान में आदिश्यमान जो ह्रस्वादेश वह इक् ही होता है अर्थात् अ इ मिलकर ए बनता है ह्रस्वादेश होने पर अ हो या इ इस शंका का यह समाधान करता है।

इगेव स्यात्। प्रद्यु। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्रराभ्याम्। प्ररीणाम्। सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि।

इत्यजन्तनपुंसकलिङ्गाः।

**प्रद्यु**। प्रद्यौशब्दात्सौ 'एच इग्घ्रस्वादेशे' इति ह्रस्वे 'स्वमोर्नपुंसकात्' इति इति सोर्लुकि प्रद्यु इति सिद्धम्। यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात् पुंवद्भावो न भवति। अस्य रूपाणि सिद्धिप्रकारश्च वारिशब्दवदेवेति बोध्यम्।

**प्रराभ्याम्**। प्ररैशब्दाद् भ्यामि 'एच इग्घ्रस्वादेशे' इति ह्रस्वे 'एकदेशविकृत-मदन्यवत्' इतिपरिभाषया रैशब्देन रि इत्यस्यापि ग्रहग्रहणात् 'रायो हलि' इत्यात्वे प्रराभ्यामिति सिद्धम्। अस्य हलादावात्वम्। अजादौ तु वारिशब्दवदेव रूपम्। यदिगन्तं प्ररि इति तस्य भाषितपुंस्कत्वाभावात्पुंवद्भावो न भवति।

**प्ररैशब्दस्य रूपाणि**—प्ररि, प्ररिणी, प्ररीणि,। प्ररि, प्ररिणी, प्ररीणि। प्ररिणा, प्रराभ्याम्, प्रराभिः। प्ररिणे, प्रराभ्याम्, प्रराभ्यः। प्ररिणः, प्रराभ्याम्, प्रराभ्यः। प्ररिणः, प्ररिणोः, प्ररीणाम्। प्ररिणि, प्ररिणोः, प्ररासु। हे प्ररे-हे प्ररि हे प्ररिणी, हे प्ररीणि।

**सुनु**। सुनौ शब्दात्सौ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इतिसूत्रेण-'एच इग्घ्र-स्वादेशे' इति नियमादुकारे ह्रस्वे 'स्वमोर्नपुंसकात्' इति सोर्लुकि सुनु इति सिद्धम्। यदिगन्तं सुनु इति तस्य भाषितपुंस्कत्वाभावात्पुंवद्भावो न भवति प्रद्यौशब्दवच्चास्य रूपं बोध्यम्।

॥ इत्यजन्तनपुंसकलिङ्गाः ॥

( वा० ) किसी शब्द के एक देश में विकार होने पर भी वह अन्य शब्द नहीं होता।

इति अजन्तनपुंसकलिङ्गप्रकरणम्।

## अथ हलन्तपुंल्लिङ्गप्रकरणम्

२५२. हो ढः ८।२।३१ ॥ हस्य ढः स्याज्झलि पदान्ते च । लिट् लिड् । लिहौ । लिहः । लिड्भ्याम् । लिट्सु, लिट्त्सु ।

२५३. दादेर्धातोर्घः ८।२।३२ ॥ झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः ।

---

होढः । ह इति षष्ठ्यन्तम् । 'झलो झलि' इत्यतो झलीत्यनुवर्तते । पदस्येत्यधिक्रियते । 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इत्यनुवर्तते ।

लिट् । लिह् शब्दात्सौ विभक्तावनुबन्धलोपे 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सुलोपे 'होढ,' इति हकारस्य ढकारे 'झलां जशोऽन्ते' इति जश्त्वेन डकारे 'वावसाने' इति वैकल्पिके चर्त्वे लिट् इति, चर्त्वाभावपक्षे लिड् इति च सिद्धम् ।

लिड्भ्याम् । लिह् शब्दाद् भ्यामि विभक्तौ 'हो ढः' इति हस्य ढत्वे 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'झलां जशोऽन्ते' इति जश्त्वे लिड्भ्याम् इति सिद्धम् ।

लिट्त्सु । लिह् शब्दात्सुपि विभक्तावनुबन्धलोपे 'हो ढः' इति हस्य ढत्वे पदत्वाज्जश्त्वेन डकारे 'खरि च' इति चर्त्वस्यासिद्धत्वात्पूर्वं 'डः सि धुट्' इति वैकल्पिके धुडागमेऽनुबन्धलोपे ततः 'खरि च' इति धकारस्य चर्त्वेन तकारे डकारस्य चर्त्वेन टकारे च कृते लिट्त्सु इति । चर्त्वनिष्पन्नतकारस्यासिद्धत्वात् 'चयो द्वितीया' इति थकारो न भवति । 'न पदान्ताट्टोरनाम्' इति निषेधात् ष्टुत्वमपि न भवति । धुडभावपक्षे डकारस्य चर्त्वेन टकारे लिट्सु इति च सिद्ध्यति । अत्रापि टस्यासिद्धत्वात् चयो द्वितीया इति ठकारो न । 'न पदान्ताट्टोरनाम्' इति निषेधात् ष्टुत्वमपि न भवतीति दिक् ।

लिट्-लिड्, लिहौ, लिहः । लिहम्, लिहौ, लिहः । लिहा, लिड्भ्याम्, लिड्भिः । लिहे, लिड्भ्याम्, लिड्भ्यः । लिहः, लिड्भ्याम्, लिड्भ्यः । लिहः लिहोः, लिहाम् । लिहि, लिहोः लिट्त्सु-लिट्सु । हे लिट्-हे लिड्, हे लिहौ, हे लिहः ।

दादेर्धातोर्घः । अत्र दादिपदमौपदेशिकदादिपरम् । 'हो ढः' इत्यतो ह इतिषष्ठ्यन्तमनुवर्तते । झलि इति पदस्य इति अन्ते इति च पूर्वसूत्रवदनुवर्तते ।

---

२५२. झल् परे अथवा पदान्त में हकार के स्थान में ढकार होता है ।

२५३. उपदेश में जो दकारादि धातु उसके अवयवभूत हकार के स्थान में धकार आदेश होता है झल् परे रहते अथवा पदान्त में ।

**२५४. एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७ ॥** धात्ववयवस्यै काचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। धुक्, धुग्, । दुहौ । दुहः । धुग्भ्याम् । धुक्षु ।

**२५५. वा द्रुहमुहष्णुहष्णिहाम् ८।२।३३ ॥** एषां हस्य वा घो झलि पदान्ते च। ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम्, ध्रुड्भ्याम् ।

---

**एकाच इति ।** अत्र 'दादेर्धातोर्घः' इत्यतो धातोरित्यवयवषष्ठ्यन्तमनुवर्तते । पदस्य इत्यधिक्रियते । 'स्कोः संयोगाद्योरन्ते च' इत्यतः अन्ते इत्यनुवर्तते ।

**धुक् ।** दुह् शब्दात्सौ अनुबन्धलोपे 'हल्ङ्याब्भ्य, इत्यादिना सुलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इतिसूत्रेण अत्र धातुर्दुह् इति तदवयवोऽपि 'व्यपदेशिवदेकस्मिन्' इति परिभाषया दुघ् इति स च एकाच् झषन्तश्च तदवयवस्य बशो दकारस्य भष्भावेन धकारे कृते 'झलां जशोऽन्ते' इति जश्त्वे धुग् इति । 'वावसाने' इति पाक्षिके चर्त्वे धुक् इति रूपद्वयं सिद्धयति ।

**धुग्भ्याम् ।** दुह् शब्दाद् भ्यामि 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावे 'स्वादिष्वसर्वमस्थाने' इति पदत्वाज्जश्त्वे धुग्भ्याम् इति सिद्धम् ।

**धुक्षु ।** दुह् शब्दात्सुप्यनुबन्धलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति दस्य भष्भावेन धकारे कृते 'झलां जशोऽन्ते' इति जश्त्वेन गकारे 'खरि च' इति चर्त्वस्यासिद्धत्वात् पूर्वम् 'आदेशप्रत्यययोः' इति षत्वे चर्त्वे धुक्षु इति सिद्धम् ।

धुक्-धुग्, दुहौ, दुहः । दुहम्, दुहौ, दुहः । दुहा, धुग्भ्याम्, धुग्भिः । दुहे, धुग्भ्याम्, धुग्भ्यः । दुहः, धुग्भ्याम्, धुग्भ्यः । दुहः, दुहोः, दुहाम् । दुहि, दुहोः, धुक्षु । हे धुक्–हे धुग्, हे दुहौ, हे दुहः ।

**वा द्रुह इति ।** अत्र 'दादेर्धातोर्घः' इत्यतो घ इति, 'हो ढः' इत्यतो ह इति, झलि इति 'स्कोः संयोगाद्यो' इत्यतः अन्ते चानुवर्तते । पदस्येत्यधिक्रियते ।

**ध्रुक् ।** द्रुह् शब्दात्सौ अनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'वा द्रुह् मुह् ष्णुह् ष्णिहाम्' इति पाक्षिके हस्य घत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावेन दस्य धकारे जश्त्वे वैकल्पिके चर्त्वे च ध्रुक्-ध्रुग् इतिरूपद्वयं सिद्धम् ।

---

२५४. धातु का अवयव जो एकाच झषन्त उस का अवयवभूत जो बश उसके स्थान में भष् होता है सकार ध्व शब्द परे रहते अथवा पदान्त में ।

२५५. द्रुहमुह ष्णुह, ष्णिह, शब्दों के हकार के स्थान में विकल्प से घकार होता है झल् परे रहते अथवा पदान्त में ।

ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु। एवं मुक्, मुग्। इत्यादि।

**२५६. धात्वादेः षः सः ६।१।६४॥** स्नुक्, स्नुग्; स्नुट्, स्नुड्। एवं स्निक्, स्निग्; स्निट्, स्निड्। विश्ववाट्, विश्ववाड्। विश्ववाहौ। विश्ववाहः। विश्ववाहम्। विश्ववाहौ।

**२५७. इग्यणः संप्रसारणम् १।१।४५॥** यणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात्।

---

घत्वाभावपक्षे तु 'हो ढः' इति हस्य ढत्वे भष्भावे जश्त्वे पाक्षिके चर्त्वे च ध्रुट्-ध्रुड् इति रूपद्वयं सिद्धयति।

**ध्रुग्भ्याम्**। द्रुह् शब्दात् भ्यामि' वा द्रुहमुहष्णुहष्णिहाम्' इति वैकल्पिके हस्य घत्वे 'एकाच' इति भष्भावे 'स्वादिष्वसर्वनामस्थाने' इति पदत्वाज्जश्त्वे ध्रुग्भ्यामिति। घत्वाभावपक्षे 'हो ढः' इति ढत्वे जश्त्वे ध्रुड्भ्यामिति च सिद्धम्।

**ध्रुक्षु**। द्रुह् शब्दात् सुपि अनुबन्धलोपे 'वा द्रुहमुहष्णुहष्णिहाम्' इति वैकल्पिके हस्य घत्वे भष्भावे जश्त्वे षत्वे चर्त्वे ध्रुक्षु इति। घत्वाभावपक्षे 'हो ढः' इति हस्य ढत्वे भष्भावे जश्त्वे 'डः सि धुट्' इति वैकल्पिके धुडागमेऽनुबन्धलोपे 'खरि च' इति चर्त्वेन धकारस्य तकारे डकारस्य टकारे ध्रुट्त्सु इति। धुडभावपक्षे डस्य चर्त्वेन टकारे ध्रुट्सु इति च सिद्धम्। 'न पदान्ताट्टोरनाम्' इति निषेधात् ष्टुत्वं न। चर्त्वस्यासिद्धत्वात् टतयोष्ठथौ नेति शम्।

ध्रुक्-ध्रुग्-ध्रुट्-ध्रुड्, द्रुहौ, द्रुहः। द्रुहम्, द्रुहौ, द्रुहः। द्रुहा, ध्रुग्भ्याम्-ध्रुड्भ्याम् ध्रुग्भिः-ध्रुड्भिः। द्रुहे, ध्रुग्भ्याम्-ध्रुड्भ्याम्। ध्रुग्भ्यः-ध्रुड्भ्यः। द्रुहः, ध्रुग्भ्याम्-ध्रुड्भ्याम्, ध्रुग्भ्यः-ध्रुड्भ्यः। द्रुहः, द्रुहोः, द्रुहाम्। द्रुहि, द्रुहोः ध्रुक्षु-धुट्त्सु ध्रुट्सु। हेध्रुक्-हेध्रुग्-हे-ध्रुट्-हे ध्रुड्-हे द्रुहौ, हे द्रुहः।

**स्नुक्**। ष्णुह शब्दत्सौ अनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'धात्वादेः षः सः' इति षस्य सकारे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन णत्वस्यापि निवृत्तौ 'वा द्रुहमुहष्णुहष्णिहाम्' इति वैकल्पिके हस्य घत्वे जश्त्वे चर्त्वे च कृते स्नुक्-स्नुग् इति रूपद्वयम्। घत्वाभावपक्षे 'हो ढः' इति हस्य ढत्वे जश्त्वे चर्त्वे च कृते स्नुट्-स्नुड् इति रूपद्वयं च सिद्धम्। स्नुह् शब्दस्य रूपाणि सिद्धिप्रकारश्च द्रुहशब्दवदेवेति बोध्यम्।

---

२५६. धातु के आदि में पठित षकार के स्थान में सकार होता है।

२५७. यण् के स्थान में प्रयुज्यमान जो इक् उसकी सम्प्रसारण संज्ञा होती है।

**२५८. वाह ऊठ् ६।४।१३२ ॥** भस्य वाहः संप्रसारणमूठ्।

**२५९. संप्रसारणाच्च ६।१।१०८ ॥** संप्रसारणादचि पूर्वरूपमेकादेशः। एत्येधत्यूठ्स्विति वृद्धिः। विश्वौहः इत्यादि।

**२६०. चतुरनडुहोरामुदात्तः ७।१।९८ ॥** अनयोराम् स्यात्सर्वनामस्थाने परे।

**२६१. सावनडुहः ७।१।८२ ॥** अस्य नुम् स्यात् सौ परे। अनड्वान्।

---

**वाह ऊठ्।** अत्र 'भस्य' इत्यधिक्रियते। 'वसोः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते।

**सम्प्रसारणाच्च।** अत्र 'एकः पूर्वपरयोः' इत्यधिक्रियते। 'इको यणचि, इत्यतः अचीति 'अमि पूर्वः' इत्यतः पूर्व इति चानुवर्तते।

**विश्वौहः।** विश्ववाह् शब्दात् शसि विभक्तावनुबन्धलोपे 'वाह ऊठ्' इति सूत्रेण यणः स्थाने प्रयुज्यमान इकः सम्प्रसारणसंज्ञया वाह इत्यत्र वकारस्य ऊठि सम्प्रसारणेऽनुबन्धलोपे विश्व ऊ आह् इति जाते 'सम्प्रसारणाच्च' इति पूर्वरूपे 'एत्येधत्यूठ्सु' इति वृद्धौ रुत्वे विसर्गे च कृते विश्वौहः इति सिद्धम्।

विश्ववाट्-विश्ववाड्, विश्ववाहौ, विश्ववाहः। विश्ववाहम्, विश्ववाहौ, विश्वौहः। विश्वौहा, विश्ववाड्भ्याम्, विश्ववाड्भिः। विश्वौहे, विश्ववाड्भ्याम्, विश्ववाड्भ्यः। विश्वौहः, विश्ववाड्भ्याम्, विश्ववाड्भ्यः। विश्वौहः, विश्वौहोः विश्वौहाम्। विश्वौहि, विश्वौहोः, विश्ववाट्त्सुः-विश्ववाट्सु। हे विश्ववाट्-हे विश्ववाड्, हे विश्ववाहौ, हे विश्ववाहः।

**चतुरनडुहोरिति।** अत्र 'इतोत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवर्तते।

**सावनडुहः।** अत्र 'आच्छीनद्योर्नुम्' इत्यतः आत् इति नुम् इति चानुवर्तते।

**अनड्वान्।** अनडुह् शब्दात्सौ अनुबन्धलोपे 'चतुरनडुहोरामुदात्तः' इति मित्त्वादन्त्यादचः परे आमागमेऽनुबन्धलोपे यणि 'सावनडुहः' इति नुमागमेऽनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे संयोगान्तलोपे अनड्वान् इति सिद्धम्।

---

२५८. भसंज्ञक वाह् शब्दावयव वकार को ऊठ् सम्प्रसारण होता है।

२५९. सम्प्रसारण से अच् परे रहते पूर्व पर के स्थान में पूर्वरूप एकादेश होता है।

२६०. चतुर और अनडुह् शब्द को आम् आगम होता है सर्वनाम स्थान परे रहते।

२६१. अनडुह् शब्द को सु विभक्ति परे रहते नुम् का आगम होता है।

**२६२. अम् संबुद्धौ ७।१।९९ ॥** हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहः । अनडुहा ।

**२६३. वसुस्रंसुध्वंस्वनडुहां दः ८।२।७२ ॥** सान्तवस्वन्तस्य स्रंसादेश्च द स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम्–विद्वान् । पदान्ते किम्–स्रस्तम् । ध्वस्तम् ।

**२६४. सहेः साडः सः ८।३।५६ ॥** साड्रूपस्य सहेः सस्य मूर्धन्यादेशः । तुराषाट्, तुरासाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि ।

---

**अम्सम्बुद्धौ** । अत्र 'चतुरनडुहोरामुदात्तः' इत्यतश्चतुरनडुहोरित्यनुवर्तते ।

**हे अनड्वन्** । अनडुह् शब्दात्सम्बोधने सौ अनुबन्धलोपे 'चतुरनडुहोरामुदात्तः' इति प्राप्तमामागमं बाधित्वा 'अम् सम्बुद्धौ' इति मित्त्वादन्त्यादचः परे अमागमेऽनुबन्धलोपे यणि 'सावनडुहः' इति नुम्यनुबन्धलोपे सुलोपे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे हे अनड्वन् इति सिद्धम् ।

**अनड्वाहौ** । अनडुह् शब्दाद् औविभक्तौ 'चतुरनडुहोरामुदात्तः' इत्यामागमेऽनुबन्धलोपे यणि अनड्वाहौ इति सिद्धम् ।

**वसुस्रंसु** । अत्र 'ससजुषो रुः' इत्यतः स इत्यनुवृत्तं वसोर्विशेषणम् । तदन्तविधिः । पदस्येत्यधिक्रियते 'झलां जशोऽन्ते' इत्यतः अन्ते इत्यनुवर्तते ।

**अनडुद्भ्याम्** । अनडुह् शब्दाद्भ्यामि विभक्तौ, 'वसुस्रंसुध्वंस्वनडुहां दः' इति हस्य दत्वे अनडुद्भ्यामिति सिद्धम् ।

अनड्वान्, अनड्वाहौ, अनड्वाहः । अनड्वाहम्, अनड्वाहौ, अनडुहः । अनडुहा, अनडुद्भ्याम्, अनडुद्भिः । अनडुहे, अनडुद्भ्याम्, अनडुद्भ्यः । अनडुहः, अनडुद्भ्याम्, अनडुद्भ्यः । अनडुहः, अनडुहोः, अनडुहाम् । अनडुहि, अनडुहोः, अनडुत्सु । हे अनड्वन् हे अनड्वाहौ, हे अनड्वाहः ।

**सहेः साडः सः** । अत्र 'अपदान्तस्य मूर्धन्यः' इत्यतो मूर्धन्य इत्यधिक्रियते ।

**तुराषाड्** । तुरासाह् शब्दात्सौ अनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'हो ढः' इति हस्य ढत्वे जश्त्वे 'सहेः साडः सः' इति षत्वे 'वावसाने' इति वैकल्पिके चर्त्वे तुराषाट् । चर्त्वाभावपक्षे तुराषाड् इति च सिद्धम् । रूपं सुगमम् ।

---

२६२. चतुर् और अनडुह् शब्द को अम् का आगम होता है सम्बुद्धि परे रहते

२६३. सान्त वसु प्रत्ययान्त और स्रंसु, ध्वंसु तथा अनडुह् शब्द के पदान्त में दकार होता है ।

२६४. साड् रूप सह के सकार के स्थान में मूर्धन्यादेश ( षकार ) होता है ।

**२६५. दिव औत् ७।१।८४ ॥** दिविति प्रातिपदिकस्यौत्स्यात्सौ । सुद्यौः । सुदिवौ ।

**२६६. दिव उत् ६।१।१३१ ॥** दिवोन्तादेश उकारः स्यात् पदान्ते । सुद्युभ्यामित्यादि । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ।

**२६७. षट्चतुर्भ्यश्च ७।१।५५ ॥** षट्संज्ञकेभ्यश्चतुरश्च परस्य आमो नुडागमः ।

**२६८. रषाभ्यां नो णः समानपदे ८।४।१ ॥** रेफषकाराभ्यां परस्य नस्य णः स्यादेकपदे ।

**२६९. अचो रहाभ्यां द्वे ८।४।४६ ॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्ण्णाम्, चतुर्णाम् ।

---

**दिव औत्** । अत्र 'सावनडुहः' इत्यतः सावित्यनुवर्तते ।

**सुद्यौः** । सुदिव्शब्दात्सौ 'दिव औत्' इति औकारेऽन्तादेशे यणि अल्विधित्वेन स्थानिवत्त्वाभावात् 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपाभावे रुत्वे विसर्गे च सुद्यौः इति सिद्धम् ।

**दिव उत्** । अत्र 'एङः पदान्तादति' इत्यतः पदान्तादित्यनुवृत्तं सप्तम्या विपरिणम्यते ।

**सुद्युभ्याम्** । सुदिव्शब्दाद् भ्यामि विभक्तौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'दिव उत्' इत्यन्तादेशे उकारे यणि सुद्युभ्याम् इति सिद्धम् ।

सुद्यौः, सुदिवौ, सुदिवः । सुदिवम्, सुदिवौ, सुदिवः । सुदिवा, सुद्युभ्याम्, सुद्युभिः । सुदिवे, सुद्युभ्याम्, सुद्युभ्यः । सुदिवः, सुद्युभ्याम्, सुद्युभ्यः । सुदिवः, सुदिवोः, सुदिवाम् । सुदिवि, सुदिवोः, सुद्युषु । हे सुद्यौः, हे सुदिवौ, हे सुदिवः ।

**चत्वारः** । चतुर्शब्दाज्जसि विभक्तावनुबन्धलोपे 'चतुरनडुहोरामुदात्तः' इति मित्त्वादन्त्यादचः परे आमागमेऽनुबन्धलोपे यणि रुत्वे विसर्गे च चत्वारः इति सिद्धम् ।

**षट्चतुर्भ्यश्च** । अत्र 'आमि सर्वनाम्नः सुट्' इत्यतः आमीत्यनुवृत्तं षष्ठ्यन्तत्वेन विपरिणम्यते । 'ह्रस्वनद्यापो नुट्' इत्यतो नुडित्यनुवर्तते ।

**चतुर्ण्णाम्** । चतुर्शब्दादामि विभक्तौ 'षट्चतुर्भ्यश्च' इति नुडागमेऽनुबन्धलोपे

---

२६५. दिव् शब्द को औकार अन्तादेश होता है सु परे रहते ।

२६६. दिव् शब्द के वकार के स्थान में उकार अन्तादेश होता है पदान्त में ।

२६७. षट् संज्ञक और चतुर् शब्द से परे आम् को नुट् का आगम होता है ।

२६८. रेफ षकार से परे नकार के स्थान में णकार होता है एक पद में ।

२६९. अच् से परे जो रेफ और हकार उनसे परे जो यर उसको द्वित्व होता है विकल्प से ।

**२७०. रोः सुपि ८।३।१६ ॥** रोरेव विसर्गः सुपि । षत्वम् । षस्य द्वित्वे प्राप्ते ।

**२७१. शरोऽचि ८।४।४९ ॥** अचि परे शरो न द्वे स्तः । चतुर्षु ।

**२७२. मो नो धातोः ८।२।६४ ॥** धातोर्मस्य न पदान्ते । प्रशान् ।

**२७३. किमः कः ७।२।१०३ ॥** किमः कः स्याद्विभक्तौ । कः । कौ । के । इत्यादि । शेषं सर्ववत् ।

---

'रषाभ्यां नो णः समानपदे' इति णत्वे 'अचोरहाभ्यां द्वे' इति वैकल्पिके णस्य द्वित्वे चतुर्ण्णाम् इति । द्वित्वाभावपक्षे चतुर्णाम् इति च सिद्धम् ।

**शरोऽचि ।** अत्र 'अचो रहाभ्यां द्वे इत्यतो द्वे इति 'नादिन्याक्रोशे पुत्रस्य' इत्यतो नेति चानुवर्तते ।

**चतुर्षु ।** चतुरशब्दात्सुप्यनुबन्धलोपे 'खरवसानयोर्विसर्जनीयः' इतिप्राप्तविसर्गस्य 'रोः सुपि' इतिनियमान्निषेधे 'आदेशप्रत्यययोः' इति षत्वे 'अचो रहाभ्यां द्वे' इति षस्य द्वित्वे प्राप्ते 'शरोऽचि' इति निषेधे चतुर्षु इति सिद्धम् ।

**मो नो धातोः ।** अत्र पदस्येत्यधिक्रियते । 'झलां जशोऽन्ते' इत्यतोऽन्ते इत्यनुवर्तते ।

**प्रशान् ।** प्रशान्शब्दात्सौ अनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'मो नो धातोः' इति मस्य नत्वे प्रशान् इति सिद्धम् ।

प्रशान्, प्रशामौ, प्रशामः । प्रशामम्, प्रशामौ, प्रशामः । प्रशामा, प्रशान्भ्याम्, प्रशान्भिः । प्रशामे, प्रशान्भ्याम्, प्रशान्भ्यः । प्रशामः; प्रशान्भ्याम्, प्रशान्भ्यः, । प्रशामः, प्रशामोः, प्रशामाम् । प्रशामि, प्रशामोः, प्रशान्त्सु-प्रशान्सु । हे प्रशान्, हे प्रशामौ, हे प्रशामः ।

**किमः कः ।** अत्र 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते ।

**कः ।** किम् शब्दात्सौ अनुबन्धलोपे 'किमः कः' इति कादेशे हलन्तात्परत्वाभावेन सुलोपाभावे रुत्वे विसर्गे कः इति सिद्धम् । सर्वशब्दवदस्य रूपम् ।

---

२७०. सप्तमी बहुवचन में रु के रेफ को ही विसर्ग होता है। ( अन्य रेफ को विसर्ग नहीं होता )।

२७१. अच् परे रहते शर् को द्वित्व नहीं होता है।

२७२. धातु के मकार के स्थान में नकार होता है पदान्त में।

२७३. किम् शब्द के स्थान में क आदेश होता है विभक्ति परे रहते।

**२७४. इदमो मः ७।२।१०८ ॥** इदमो मस्य मः स्यात् सौ परे । त्यदाद्यत्वापवादः ।

**२७५. इदोऽय् पुंसि ६।२।१११ ॥** इदम इदोऽय् सौ पुंसि । अयम् । त्यदाद्यत्वे ।

**२७६. अतो गुणे ६।१।९७ ॥** अपदान्तादतो गुणे परे पररूपमेकादेशः ।

**२७७. दश्च ७।२।१०९ ॥** इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः संबोधनं नास्तीत्युत्सर्गः ।

---

**इदमो मः** । अत्र 'तदोः सः सावनन्त्ययोः' इत्यतः सौ इत्यनुवर्तते । 'अलोऽन्त्यस्य' इति परिभाषासूत्रप्रवृत्त्या मस्य मः इत्यर्थलाभः ।

**इदोऽय् पुंसि** । अत्र 'इदमो मः' इत्यत इदमः इत्यनुवर्तते । 'यः सौ' इत्यतः सौ इत्यनुवर्तते ।

**अयम्** । इदम् शब्दात्सौ अनुबन्धलोपे 'त्यदादीनामः' इत्यकारेऽन्तादेशे प्राप्ते तम्प्रबाध्य 'इदमो मः' इति मस्य मकारे 'इदोऽय् पुंसि' इति इदोऽयादेशे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे अयम् इति सिद्धम् ।

**अतो गुणे** । अत्र 'एङि पररूपम्' इत्यतः पररूपम् इति 'उस्यपदान्तात्' इत्यतः अपदान्तात् इति चानुवर्तते । 'एकः पूर्वपरयोः' इत्यधिक्रियते ।

**दश्च** । अत्र 'इदमो मः' इति सूत्रमनुवर्तते । 'अष्टन आ विभक्तौ' इत्यतः विभक्तौ इत्यनुवर्तते ।

**इमौ** । इदम् शब्दाद् औविभक्तौ 'त्यदादीनामः' इत्यन्तादेशेऽकारे 'अतो गुणे' इति पररूपे 'दश्च' इति दकारस्य मकारे 'वृद्धिरेचि' इति वृद्धौ इमौ इति सिद्धम् ।

**इमे** । इदमशब्दाज्जसि विभक्तावनुबन्धलोपे 'त्यदादीनामः' इत्यन्तादेशे अकारे 'अतो गुणे' इति पररूपे 'दश्च' इति दस्य मत्वे 'जशः शी' इति श्यादेशेऽनुबन्धलोपे गुणे इमे इति सिद्धम् ।

---

२७४. इदम् शब्द के मकार के स्थान में मकार होता है सु परे रहते ।

२७५. इदम् शब्द के इद् भाग को अय् आदेश होता है सु परे रहते पुलिङ्ग में ।

२७६. अपदान्त ह्रस्वाकार से गुण ( अ, ए, ओ ) परे रहते पूर्वपर के स्थान में पररूप एकादेश होता है ।

२७७. इदम् के दकार के स्थान में मकार आदेश होता है विभक्ति परे रहते ।

**२७८. अनाप्यकः ७।२।११२ ॥** अककारस्येदम इदोऽनापि विभक्तौ ॥ आबिति प्रत्याहारः । अनेन ।

**२७९. हलि लोपः ७।२।११३ ॥** अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।

**२८०. आद्यन्तवदेकस्मिन् १।१।२१ ॥** एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ।

---

**अनाप्यकः** । अत्र 'इदमो मः' इत्यतः इदम् इति, 'इदोऽय् पुंसि' इत्यत इद इति, 'अष्टन आ विभक्तौ' इत्यतो विभक्ताविति चानुवर्तते ।

**अनेन** । इदम्शब्दात् टाविभक्तौ 'त्यदादीनामः' इत्यन्तादेशेऽकारे 'अतो गुणे' इति पररूपे 'अनाप्यकः' इति इदः स्थाने अनादेशे 'टाङसिङसामिनात्स्याः' इति इनादेशे गुणे अनेन इति सिद्धम् ।

**हलि लोपः** । अत्र 'अनाप्यकः' इत्यत आप्यक इति 'इदमो मः' इत्यत इदम इति 'इदोऽय् पुंसि' इत्यत इद इति चानुवर्तते ।

**आद्यन्तवदेकस्मिन्** । तदादितदन्तयोः क्रियमाणं कार्यम् एकस्मिन् असहायेऽपि तदादौ इव तदन्त इव च भवतीति तदर्थः । एकस्मिन्नपि वर्णे तदादीत्यव्यहारः तदन्तत्वव्यवहारश्च भवतीति यावत् । यथा लोके एकपुत्रसत्त्वे तस्मिन्नेव ज्येष्ठत्वकनिष्ठत्वादिव्यवहारस्तथा शास्त्रेऽपि ।

**आभ्याम्** । इदम्शब्दाद् भ्यामि विभक्तौ त्यदाद्यत्वे पररूपत्वे 'अनाप्यकः' इतिसूत्रप्राप्तमनादेशं बाधित्वा 'हलि लोपः' इति इदो लोपे 'अलोऽन्त्यस्य' इति परिभाषाप्रवृत्त्या दकारमात्रस्य लोपस्तु न, 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इति परिभाषया तन्निषेधात् । अभ्याम् इति स्थिते 'आद्यन्तवदेकस्मिन्' इति सूत्रेण अकारे अदन्तत्वमाश्रित्य 'सुपि च' इति दीर्घे आभ्यमिति सिद्धम् ।

---

२७८. ककार रहित जो इदम् शब्द उसके इद् भाग के स्थान में अन् आदेश होता है टा से लेकर सुप विभक्ति तक परे रहते ।

२७९. अककारक इदम् शब्द के इद् भाग का लोप होता है टादि हलादि विभक्ति परे रहते, (वा०) अभ्यास विकार को छोड़कर अनर्थक में अलोन्त्यविधि नहीं प्रवृत्त होती ।

२८०. एक ( असहाय ) में किया जाने वाला कार्य उसी एक को आद्यवयव तथा अन्तावयव मान कर होता है ।

**२८१. नेदमदसोरकोः ७।१।११ ॥** अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ।

---

**नेदमदसोरकोः** । 'अतो भिस ऐस्' इत्यतो भिस ऐसित्यनुवर्तते ।

**एभिः** । इदम्शब्दाद् भिसि त्यदाद्यत्वे पररूपत्वे 'नानर्थकऽलोऽन्त्यविधिरनभ्यासविकारे' इति परिभाषया 'अलोऽन्त्यस्य' इतिसूत्राप्रवृत्त्या 'अनाप्यकः' इति सूत्रप्राप्तमनादेशं बाधित्वा 'हलि लोपः' इति इदो लोपे 'आद्यन्तवदेकस्मिन्' इति अकारेऽदन्तत्वमाश्रित्य 'अतो भिस ऐस्' इति भिस ऐसादेशे प्राप्ते 'नेदमदसोरकोः' इति तन्निषेधे 'बहुवचने झल्येत्' इत्येत्वे रुत्वे विसर्गे च कृते एभिः इति सिद्धम् ।

**अस्मै** । इदम् शब्दात् ङेविभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'अनाप्यकः' इति प्राप्तमनादेशं बाधित्वा नित्यत्वात्पूर्वं 'सर्वनाम्नः स्मै' इति स्मै आदेशे ततोऽनादेशं बाधित्वा 'हलि लोपः' इति इदो लोपे अस्मै इति सिद्धम् ।

**एभ्यः** । इदम्शब्दाद् भ्यसि त्यदाद्यत्वे पररूपत्वे 'हलि लोपः' इति इदो लोपे 'आद्यन्तवदेकस्मिन्' इति अकारेऽदन्तत्वमाश्रित्य 'बहुवचने झल्येत्' इति एत्वे रुत्वे विसर्गे च कृते एभ्यः इति सिद्धम् ।

**अस्मात्** । इदम्शब्दात् ङसि विभक्तौ अनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे नित्यत्वात्पूर्वं ङसः स्मादादेशे ततः 'हलि लोपः' इतीदो लोपे जश्त्वे चर्त्वे च कृते 'अस्मात् अस्माद्' इति रूपद्वयं सिद्ध्यति ।

**अस्य** । इदम् शब्दात् ङस्यनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे नित्यत्वात्पूर्वं स्यादेशे तत इदो लोपे अस्येति सिद्धम् ।

**अनयोः** । इदम् शब्दादोसि त्यदाद्यत्वे पररूपत्वे 'अनाप्यकः इति इदोऽनादेशे ओसि च' इत्येत्वे अयादेशे रुत्वे विसर्गे च अनयोरिति सिद्ध्यति ।

**एषाम्** । इदम् शब्दादामि विभक्तौ त्यदाद्यत्वे पररूपत्वे नित्यत्वादनादेशात्पूर्वम् 'आमि सर्वनाम्नः सुट्' इति सुडागमेऽनुबन्धलोपे ततः 'हलि लोपः' इति इदो लोपे 'आद्यन्तवदेकस्मिन्' इति अदन्तत्वमाश्रित्य 'बहुवचने झल्येत्' इति एत्वे 'आदेशप्रत्यययोः' इति षत्वे एषाम् इति सिद्धम् ।

**अस्मिन्** । इदम् शब्दान्ङौ अनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे नित्यत्वादनादेशात्पूर्वं स्मिन्नादेशे ततः 'हलि लोपः' इतीदो लोपे अस्मिन्निति सिद्धम् ।

**एषु** । इदम्शब्दात्सुप्यनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'हलि लोपः' इति इदो लोपे एत्वे षत्वे एषु इति सिद्धम् ।

---

२८१. ककार रहित जो इदम् और अदस् शब्द उससे परे भिस् को ऐस् नहीं होता ।

**२८२. द्वितीया टौस्स्वेनः २।४।३४** ॥ द्वितीयायां टौसोश्च परतः इदमेतदोरेनादेशः स्यादन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा-अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । राजा ।

**२८३. न ङिसम्बुद्ध्योः ८।२।८** ॥ नस्य लोपो न ङौ संबुद्धौ च । हे राजन् । (ङावुत्तरपदे प्रतिषेधो वक्तव्यः) । ब्रह्मनिष्ठः । राजानौ । राजानः ।

---

अयम्, इमौ, इमे । इमम् इमौ, इमान् । अनेन, आभ्याम्, एभिः । अस्मै, आभ्याम्, एभ्यः । अस्मात्-अस्माद्, आभ्याम्, एभ्यः । अस्य, अनयोः, एषाम् । अस्मिन्, अनयोः, एषु ।

**द्वितीया टौस्स्वेनः** । अत्र 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' इत्यतः इदमोऽन्वादेशे इति 'एतदस्त्रतसौ चानुदात्तौ' इत्यत एतद् इति चानुवर्तते ।

**एनम्** । इदम् शब्दादमि 'द्वितीया टौस्स्वेनः' इति एनादेशे 'अमि पूर्वः' इति पूर्वरूपे एनम् इति सिद्धम् ।

**राजा** । राजन् शब्दात्सौ अनुबन्धलोपे 'सर्वनामस्थाने चासम्बुद्धौ' इति उपधादीर्घे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे राजा इति सिद्धम् ।

**न ङिसम्बुद्ध्योः** । अत्र 'नलोपः प्रातिपदिकान्तस्य' इत्यतो नलोप इत्यनुवर्तते ।

**हे राजन्** । राजन् शब्दात्सम्बोधने सौ अनुबन्धलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे प्राप्ते 'न ङिसम्बुद्ध्योः' इति तन्निषेधे हे राजन् इति सिद्धम् ।

**ब्रह्मनिष्ठः** । ब्रह्मन् ङि निष्ठा सु इत्यलौकिके विग्रहे समासे समासत्वात्प्रातिपदिकत्वेन 'सुपो धातुप्रातिपदिकयोः' इति सुपोर्लुकि ब्रह्मन् निष्ठ इति स्थिते

---

२८२. द्वितीया विभक्ति में टा और ओस् परे रहते इदम् और एतत् शब्द के स्थान में एनादेश होता है, अन्वादेश में । किसी कार्य को करने के लिए कहा गया हो और दूसरे कार्य को करने के लिए भी कहना अन्वादेश है । जैसे इसने व्याकरण पढ़ लिया अब इसे वेद पढ़ाइये । अथवा इन दोनों का पवित्र कुल है और इन दोनों के पास बहुत धन भी है ।

२८३. नकार का लोप नहीं होता ङी और सम्बुद्धि परे रहते (वा०) किन्तु जिस ङि विभक्ति से परे कोई उत्तर पद में हो तो ङी विभक्ति से पूर्व नकार के लोप के निषेध का प्रतिषेध कहना चाहिए ।

राज्ञः ।

**२८४. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२ ॥** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो, नान्यत्र राजाश्व इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न । राजभ्याम् । राजभिः । राज्ञि, राजनि । राजसु । यज्वा । यज्वानौ । यज्वानः ।

**२८५. न संयोगाद्वमन्तात् ६।४।१३७ ॥** वमन्तसंयोगादनोऽकारस्य लोपो

---

प्रत्ययलक्षणत्वेन ब्रह्मन्इत्यस्य पदत्वात्प्राप्तस्य 'नलोपः प्रातिपदिकान्तस्य' इति नलोपस्य 'न ङिसम्बुद्धयोः' इति निषेधे प्राप्ते 'ङावुत्तरपदे प्रतिषेधो वक्तव्यः' इति तन्निषेधे नलोपे तत्सिद्ध्यति ।

राज्ञः । राजन् शब्दात् शसि अनुबन्धलोपे भसंज्ञायाम् 'अल्लोपोऽनः' इत्यल्लोपे 'स्तोः श्चुना श्चुः' इति श्चुत्वे रुत्वे विसर्गे राज्ञः इति सिद्धम् ।

राजभ्याम् । राजन्शब्दाद् भ्यामि विभक्तौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इति नलोपस्यासिद्धत्वात् अदन्तत्वाभावेन 'सुपि च' इति दीर्घाभावे राजभ्याम् इति सिद्धम् ।

राजभिः । राजन्शब्दाद् भिसि नलोपे तस्यासिद्धत्वाददन्तत्वाभावेन 'अतो भिस ऐस्' इति भिस ऐसोऽभावे रुत्वे विसर्गे राजभिः इति सिद्धम् । एवं राजभ्य इत्यत्र नलोपस्यासिद्धत्वादेत्वं नेति शम् ।

राज्ञि । राजन् शब्दान्ङौ अनुबन्धलोपे भसंज्ञायाम् 'विभाषा ङिश्योः' इति वैकल्पिके अल्लोपे श्चुत्वे राज्ञि इति, अल्लोपाभावपक्षे राजनि इति च सिद्धम् ।

राजा, राजानौ, राजानः । राजानम्, राजानौ, राज्ञः । राज्ञा, राजभ्याम्, राजभिः । राज्ञे, राजभ्याम्, राजभ्यः । राज्ञः, राजभ्याम्, राजभ्यः । राज्ञः, राज्ञोः, राज्ञाम् । राज्ञि-राजनि राज्ञोः, राजसु । हे राजन्, हे राजानौ, हे राजानः ।

न संयोगादिति । 'अल्लोपोऽनः' इत्यनुवर्तते ।

---

२८४. सुप विधि स्वर विधि संज्ञाविधि कृदन्तीय तुग् विधि में भी नकार का लोप असिद्ध होता है अन्यत्र नहीं ।

२८५. वकारान्त मकारान्त संयोग से परे अन् के अकार का लोप नहीं होता ।

न । यज्वनः । यज्वना । यज्वभ्याम् । ब्रह्मणः । ब्रह्मणा ।

**२८६. इन्हन्पूषार्यम्णां शौ ६।४।१२ ॥** एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते ।

**२८७. सौ च ६।४।१३ ॥** इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ । वृत्रहा । हे वृत्रहन् ।

---

**यज्वनः** । यज्वन्शब्दात् शसि अनुबन्धलोपे भसंज्ञायाम् 'अल्लोपोऽनः' इत्यल्लोपे प्राप्ते न संयोगाद्वमन्तात्' इति तन्निषेधे रुत्वे विसर्गे यज्वनः इति साधु ।

यज्वा, यज्वानौ, यज्वानः । यज्वानम्, यज्वानौ, यज्वनः । यज्वना, यज्वभ्याम्, यज्वभिः । यज्वने, यज्वभ्याम्, यज्वभ्यः । यज्वनः, यज्वभ्याम्, यज्वभ्यः । यज्वनः, यज्वनोः, यज्वनाम् । यज्वनि यज्वनोः, यज्वसु । हे यज्वन्, हे यज्वानौ, हे यज्वानः ।

**ब्रह्मणः** । ब्रह्मन् शब्दात् शसि अनुबन्धलोपे भसंज्ञायाम् 'अल्लोपोऽनः' इत्यल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' इति तन्निषेधे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' ति णत्वे रुत्वे विसर्गे ब्रह्मणः इति सिद्धम् ।

**ब्रह्मा**, ब्रह्माणौ, ब्रह्माणः । ब्रह्माणम्, ब्रह्माणौ, ब्रह्मणः । ब्रह्मणा, ब्रह्मभ्याम्, ब्रह्मभिः । ब्रह्मणे, ब्रह्मभ्याम्, ब्रह्मभ्यः । ब्रह्मणः, ब्रह्मभ्याम्, ब्रह्मभ्यः । ब्रह्मणः, ब्रह्मणोः, ब्रह्मणाम् । ब्रह्मणि, ब्रह्मणोः, ब्रह्मसु । हे ब्रह्मन्, हे ब्रह्माणौ, हे ब्रह्माणः ।

**इन्हन्निति** । अत्र 'नोपधायाः' इत्यत उपधाया इति 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति चानुवर्तते । शेः सर्वनामस्थानत्वेन 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेनैव दीर्घे मूलोक्तनियमार्थमिदं सूत्रम् ।

**सौ च** । पूर्वसूत्राद् इन्हन्पूषार्यम्णामित्यनु वर्तते । 'नोपधायाः' इत्यत उपधाया इति 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति 'सर्वनामस्थाने चासम्बुद्धौ' इत्यतः असम्बुद्धौ इति चानुवर्तते ।

**वृत्रहा** । वृत्रहन्शब्दात्सौ 'सर्वनामस्थाने चासम्बुद्धौ' इति प्राप्तदीर्घस्य 'इन्हन्पूषार्यम्णां शौ' इति नियमान्निषेधे प्राप्ते तम्प्रबाध्य 'सौ च' इति दीर्घे

---

२८६. इन् हन् पूषन् और अर्यमन् शब्द से शी परे रहते ही उपधा को दीर्घ होता है अन्यत्र नहीं ।

२८७. इन् हन् पूषन् और अर्यमन् शब्द के उपधा को दीर्घ होता है सम्बुद्धि भिन्न सु परे रहते ।

**२८८. एकाजुत्तरपदे णः ८।४।१२ ॥** एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः। वृत्रहणौ।

**२८९. हो हन्तेर्ञ्णिन्नेषु ७।३।५४ ॥** ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम्। वृत्रघ्नः इत्यादि। एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन्।

**२९०. मघवा बहुलम् ६।४।१२८ ॥** मघवन्शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्।

---

'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे वृत्रहा इति सिद्धम्।

**एकाजुत्तरपदे णः**। अत्र 'रषाभ्यां नोणः' इति सूत्रमनुवर्तते। 'पूर्वपदात्संज्ञायामगः' इत्यतः पूर्वपदादित्यनुवृत्तं पूर्वपदस्थपरम्। 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति सूत्रमप्यनुवर्तते।

**वृत्रहणौ**। वृत्रहन्शब्दाद् औ विभक्तौ 'इन्हन्पूषार्यम्णां शौ' इति नियमाद्दीर्घाभावे 'एकाजुत्तरपदे णः' इति णत्वे वृत्रहणौ इति सिद्धम्।

**हो हन्तोरिति**। अत्र 'चजोः कु घिण्यतोः' इत्यतः कु इत्यनुवर्तते।

**वृत्रघ्नः**। वृत्रहन्शब्दात् शसि अनुबन्धलोपे भसंज्ञायाम् 'अल्लोपोऽनः' इत्यल्लोपे 'हो हन्तेर्ञ्णिन्नेषु' इति हस्य कुत्वेन घत्वे विसर्गे च कृते वृत्रघ्नः इति सिद्धम्। एवमजादौ सर्वत्र सिद्धिमकारो बोध्यः।

वृत्रहा, वृत्रहणौ, वृत्रहणः। वृत्रहणम्, वृत्रहणौ, वृत्रघ्नः। वृत्रघ्ना, वृत्रहभ्याम्, वृत्रहभिः। वृत्रघ्ने, वृत्रहभ्याम्, वृत्रहभ्यः। वृत्रघ्नः, वृत्रहभ्याम्, वृत्रहभ्यः। वृत्रघ्नः, वृत्रघ्नोः, वृत्रघ्नाम्। वृत्रघ्नि, वृत्रघ्नोः, वृत्रहसु। हे वृत्रहन्, हे वृत्रहणौ, हे वृत्रहणः।

**मघवा बहुलम्**। 'अर्वणस्त्रसावनञः' इति सूत्रात् तृ इत्यनुवर्त्तते।

---

२८८. एक अच् है उत्तर पद में जिसके उस समास के पूर्व पद में स्थित जो निमित्त ( रेफ षकार ) उससे परे प्रातिपदिकान्त नुम् विभक्तिस्थ नकार के स्थान में णकार होता है।

२८९. ञित् णित् प्रत्यय और नकार परे रहते हन् के हकार के स्थान में कुत्व ( कवर्ग ) होता है।

२९०. मघवन् शब्द के तृ अन्तादेश होता है विकल्प से।

**२९१. उगिदचां सर्वनामस्थानेऽधातोः ७।१।७० ॥** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राजवत् ।

**२९२. श्वयुवमघोनामतद्धिते ६।४।१३३ ॥** अन्नन्तानां भानामेषामतद्धिते संप्रसारणम् । मघोनः । मघवभ्याम् । एवं श्वन्, युवन् ।

---

**उगिदचाम्** । अत्र 'इदितो नुम् धातोः' इत्यतो नुम् इत्यनुवर्तते । सूत्रे अचू इति लुप्तनकारस्याञ्चतेर्निर्देशः ।

**मघवान्** । मघवन्शब्दात्सौ अनुबन्धलोपे 'मघवा बहुलम्' इति पाक्षिके तृ इत्यन्तादेशेऽनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमागमेऽनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'संयोगान्तस्य लोपः' इति तलोपे प्रत्ययलक्षणेन 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे मघवान् इति सिद्धम् । दीर्घे कर्त्तव्ये बहुलग्रहणात्संयोगान्तलोपाभावः । तृत्वाभावपक्षे दीर्घे सुलोपे नलोपे च कृते मघवा इति सिद्ध्यति ।

**मघवन्तौ** । मघवन्शब्दाद् औविभक्तौ 'मघवा बहुलम्' इति पाक्षिके तृ इत्यन्तादेशेऽनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्यनुबन्धलोपे मघवन्तौ इति । तृत्वाभावपक्षे दीर्घे मघवानौ इति च सिद्धम् ।

**श्वयुवेति** । अत्र 'भस्य' इत्यधिक्रियते । 'वसोः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते । 'अल्लोपोऽनः' इत्यत अपकृष्टम् अन् भस्य विशेषणम् । तदन्तविधिः ।

**मघोनः** । मघवन्शब्दाच्छसि विभक्तावनुबन्धलोपे भसंज्ञायां तृत्वाभावपक्षे 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'आद् गुणः' इति गुणे रुत्वे विसर्गे च कृते मघोन इति सिद्धम् ।

मघवान्, मघवन्तौ, मघवन्तः । मघवन्तम्, मघवन्तौ, मघवतः । मघवता, मघवद्भ्याम्, मघवद्भिः । मघवते, मघवद्भ्याम्, मघवद्भ्यः । मघवतः, मघवद्भ्याम्, मघवद्भ्यः । मघवतः, मघवतोः, मघवताम् । मघवति, मघवतोः, मघवत्सु । हे मघवन्, हे मघवन्तौ, हे मघवन्तः ।

---

२९१. धातु भिन्न उगित और न लोपी अञ्च धातु से नुम् का आगम होता है सर्वनाम स्थान परे रहते ।

२९२. अन्नन्त भ संज्ञक स्वन युवन् मघवन् शब्द को सम्प्रसारण होता है तद्धित को छोड़कर ।

**२९३. न संप्रसारणे संप्रसारणम् ६।१।३७॥** संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम्। अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम्। यूनः। यूना। युवभ्याम् इत्यादि। अर्वा। हे अर्वन्।

**२९४. अर्वणस्त्रसावनञः ६।४।१२७॥** नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ। अर्वन्तौ। अर्वन्तः। अर्वद्भ्यामित्यादि।

**२९५. पथिमथ्यृभुक्षामात् ७।१।८५॥** एषामाकारोन्तादेशः स्यात् सौ परे।

---

**तृत्वाभावपक्षे तु**—मघवा, मघवानौ, मघवानः। मघवानम्, मघवानौ, मघोनः। मघोना, मघवभ्याम्, मघवभिः। मघोने, मघवभ्याम्, मघवभ्यः। मघोनः मघवभ्याम्, मघवभ्यः। मघोनः, मघोनोः, मघोनाम्। मघोनि, मघोनोः, मघवसु। हे मघवन्, हे मघवानौ, हे मघवानः।

**यूनः**। युवन्शब्दात् शसि अनुबन्धलोपे भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे सवर्णदीर्घे यकारस्यापि सम्प्रसारणे प्राप्ते 'अचः परस्मिन्पूर्वविधौ' इति दीर्घस्य स्थानिवद्भावेन संप्रसारणपरत्वसत्वात् 'न सम्प्रसारणे सम्प्रसारणम्' इति यकारस्य सम्प्रसारणनिषेधे 'न सम्प्रसारणे सम्प्रसारणम्' इति सूत्रसामर्थ्यात् अन्त्यस्य यणः पूर्वं सम्प्रसारणं भवतीति कल्पनया पूर्वं यकारस्य सम्प्रसारणाभावे रुत्वे विसर्गे च कृते यूनः इति सिद्धम्।

युवा, युवानौ, युवानः। युवानम्, युवानौ, यूनः। यूना, युवभ्याम्, युवभिः। यूने, युवभ्याम्, युवभ्यः। यूनः, युवभ्याम्, युवभ्यः। यूनः, यूनोः, यूनाम्। यूनि, यूनोः, युवसु। हे युवन्, हे युवानौ, हे युवानः।

**अर्वन्तौ**। अर्वन्शब्दाद् औविभक्तौ 'अर्वणस्त्रसावनञः' इति तृ इत्यन्तादेशेऽनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति मित्त्वादन्त्यादचः परे नुमागमेऽनुबन्धलोपे अर्वन्तौ इति सिद्धम्।

अर्वा, अर्वन्तौ, अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। अर्वते, अर्वद्भ्याम्, अर्वद्भ्यः। अर्वतः, अर्वद्भ्याम्, अर्वद्भ्यः। अर्वतः, अर्वतोः अर्वताम्। अर्वति, अर्वतोः, अर्वत्सु। हे अर्वन्, हे अर्वन्तौ, हे अर्वन्तः।

**पथीति**। अत्र 'सावनडुहः,' इत्यतः सौ इत्यनुवर्तते।

---

२९३. सम्प्रसारण पर में हो तो पूर्व यण् को सम्प्रसारण नहीं होता।

२९४. नञ् रहित अर्वन् शब्द के अंग को तृ अन्तादेश होता है सु परे रहते।

२९५. पथिन् मथिन् और ऋभुक्षिन् शब्दों को आकार अन्तादेश होता है सु परे रहते।

**२९६. इतोऽत्सर्वनामस्थाने ७।१।८६ ॥** पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे ।

**२९७. थो न्थः ७।१।८७ ॥** पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । पन्थानौ । पन्थानः ।

**२९८. भस्य टेर्लोपः ७।१।८८ ॥** भस्य पथ्यादेष्टेर्लोपः । पथः । पथा । पथिभ्याम् । एवं मथिन्, ऋभुक्षिन् ।

**२९९. ष्णान्ता षट् १।१।२४ ॥** षान्ता नान्ता च संख्या षट्संज्ञा स्यात् ।

---

इतोऽत् । अत्र पथिमथ्यृभुक्षामित्यनुवर्तते ।

थोन्थः । अत्र 'पथिमथ्यृभुक्षामात्' इत्यतः पथिमथीति 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति चानुवर्तते ।

पन्थाः । पथिन्शब्दात्सौ अनुबन्धलोपे 'पथिमथ्यृभुक्षामात्' इति अकारेऽन्तादेशे 'इतोऽत्सर्वनामस्थाने' इति इकारस्य अकारे 'थोन्थः' इति थस्यान्थादेशे सवर्णदीर्घे रुत्वे विसर्गे च पन्थाः इति सिद्धम् ।

पन्थानौ । पथिन्शब्दाद् औविभक्तौ 'इतोऽत्सर्वनामस्थाने' इति इकारस्य अकारे 'थोन्थः' इति न्थादेशे 'सर्वनामस्थाते चासम्बुद्धौ' इति दीर्घे पन्थानौ इति सिद्धम् ।

भस्य टेर्लोपः । अत्र पथिमथ्यृभुक्षामित्यनुवर्तते ।

पथः । पथिन्शब्दात् शसि अनुबन्धलोपे 'यचि भम्' इति भसंज्ञायां 'भस्य टेर्लोपः' इति टेर्लोपे रुत्वे विसर्गे च पथः इति सिद्धम् ।

पन्थाः, पन्थानौ, पन्थानः । पन्थानम्, पन्थानौ, पथः । पथा, पथिभ्याम्, पथिभिः । पथे, पथिभ्याम्, पथिभ्यः । पथः, पथिभ्याम् पथिभ्यः । पथः, पथोः, पथाम् । पथि, पथोः, पथिषु । हे पन्थाः, हे पन्थानौ, हे पन्थानः । एवं मथिन् ऋभुक्षिन्शब्दयोरपि रूपाणि सिद्धिप्रकारश्च बोध्यः ।

ष्णान्ता षट् । अत्र 'बहुगणवतुडतिसंख्या' इत्यतः संख्येत्यनुवर्तते । संख्याशब्दस्य षान्तनान्तत्वासम्भवात् संज्ञापरस्यापि संख्याशब्दस्यात्र संज्ञिपरत्वम् ।

---

२९६. पथिन् मथिन् और ऋभुक्षिन् शब्द के इकार के स्थान में अकार आदेश होता सर्वनाम स्थान परे रहते ।

२९७. पथिन् और मथिन् शब्द के थकार के स्थान में न्था देश होता है सर्वनाम स्थान परे रहते ।

२९८. भसंज्ञक जो पथिन् मथिन् ऋभुक्षिन् शब्द उनके टि का लोप होता है ।

२९९. षान्त और नान्त संख्या वाचक शब्द की षट् संज्ञा होती है ।

पञ्चन्शब्दो नित्यं बहुवचनान्तः। पञ्च। पञ्च। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। नुट्।

**३००. नोपधायाः ६।४।७॥** नान्तस्योपधाया दीर्घो नामि। पञ्चानाम्। पञ्चसु।

**३०१. अष्टन आ विभक्तौ ७।२।८४॥** अष्टन आत्वं वा स्याद्धलादौ विभक्तौ।

**३०२. अष्टाभ्य औश् ७।१।२१॥** कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ। अष्टौ। अष्टाभिः। अष्टाभ्यः। अष्टाभ्यः।

---

**पञ्च**। पञ्चन्शब्दात् जसि विभक्तावनुबन्धलोपे 'ष्णान्ता षट्' इति षट्संज्ञायाम् 'षड्भ्यो लुक्' इति जसो लुकि नलोपे पञ्च इति सिद्धम्।

**पञ्चभिः**। पञ्चन्शब्दाद्भिसि 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे रुत्वे विसर्गे च पञ्चभिरिति सिद्धम्। एवं पञ्चभ्यः।

**नोपधायाः**। न इति लुप्तषष्ठीकम् तदन्तविधिः। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति 'नामि' इति सूत्रं चानुवर्तते।

**पञ्चानाम्**। पञ्चन्शब्दादामि 'ष्णान्ता षट्' इति षट्संज्ञायाम् 'षट्चतुर्भ्यश्च' इति नुडागमेऽनुबन्धलोपे नलोपस्यासिद्धत्वात्पूर्वं 'नोपधायाः' इति दीर्घे ततो नलोपे पञ्चानाम् इति सिद्धम्।

**अष्टन आ विभक्तौ**। अत्र 'रायो हलि' इत्यतो हलि इत्यनुवर्तते। तदादिविधिः 'अष्टनो दीर्घात्' इत्यत्र दीर्घग्रहणसामर्थ्याद् वा इत्यस्य लाभः।

**अष्टाभ्य औश्**। 'जश्शसोः शिः' इत्यतः जश्शसोरित्यनुवर्तते।

**अष्टौ**। अष्टन्शब्दाज्जसि अष्टभ्य इति वक्तव्ये अष्टाभ्य इति कृतात्वनिर्देशात् हलादिपरत्वाभावेऽपि जश्शसोर्विषये आत्वस्य कल्पनात् 'अष्टन आ विभक्तौ' इत्यात्वे सवर्णदीर्घे 'अष्टाभ्य औश्' इति जस औशादेशेऽनुबन्धलोपे 'वृद्धिरेचि' इति वृद्धौ अष्टौ इति। आत्वाभावपक्षे अष्टन् शब्दस्य 'ष्णान्ता षट्' इति षट्संज्ञकत्वेन 'षड्भ्यो लुक्' इति जसो लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे अष्ट इति च सिद्धम्।

**अष्टाभिः**। अष्टन्शब्दाद्भिसि 'अष्टन आ विभक्तौ' इत्यात्वे सवर्णदीर्घे रुत्वे

---

३००. नान्त पद की उपधा को दीर्घ होता है नाम परे रहते।

३०१ अष्टन् शब्द के आकार अन्तादेश होता है हलादि विभक्ति परे रहते।

३०२. जिस अष्टन् शब्द को आकारादेश हो गया है उससे परे जस् शस् के स्थान में औस् आदेश होता है।

अष्टानाम् । अष्टासु । आत्वाभावे अष्ट, पञ्चवत् ।

३०३. **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९ ॥** एभ्यः क्विन्, अञ्चेः सुप्युपपदे, युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाभावश्च निपात्यते। कनावितौ ।

३०४. **कृदतिङ् ३।१।९३ ॥** अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

३०५. **वेरपृक्तस्य ६।१।६७ ॥** अपृक्तस्य वस्य लोपः ।

३०६. **क्विन्प्रत्ययस्य कुः ८।२।६२ ॥** क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽ-

---

विसर्गे च 'अष्टाभिरिति' । आत्वाभावपक्षे नस्य लोपे रुत्वे विसर्गे अष्टभिरिति च सिद्धम् ।

**अष्टनाम्** । अष्टन्शब्दादामि षट्संज्ञायाम् 'षट्चतुर्भ्यश्च' इति नुडागमेऽनुबन्धलोपे 'अष्टन आ विभक्तौ इति पाक्षिके आत्वे सवर्णदीर्घे अष्टानामिति सिद्धम् । आत्वाभावपक्षेऽपि नुटि 'नोपधायाः' इति दीर्घे नलोपे अष्टानामित्येवेति शम् ।

**ऋत्विग्दधृग्** । अत्र 'स्पृशोऽनुदके क्विन्' इत्यतः क्विन् इत्यनुवर्तते । पञ्चम्यर्थे षष्ठी । ऋत्विग् दधृग् इत्यादिसिद्धरूपनिर्देशात् सूत्रानुपदिष्टमपि किञ्चित् कार्यं निपातनाल्लभ्यते । तथाहि ऋतावुपपदे यज्धातोः क्विन् । तस्य कित्वात् 'विचिस्वपियजादीनां किति' इति सम्प्रसारणं, 'व्रश्च' इति षत्वापवादः कुत्वं च, धृष्धातोः क्विनि द्वित्वमन्तोदात्तत्वं च, सृज्धातोः कर्मणि क्विन् अमागमश्च, दिश्धातोः कर्मणि क्विन्, उत्पूर्वात् स्निह्धतोः क्विन् उदो दलोपः षत्वं च, अञ्चुधातोः सुप्युपपदे क्विन्, युज्धातोः केवलात् क्विन्, क्रुञ्चधातोः केवलात् क्विन् नलोपाभावश्च निपात्यते ।

**कृतिङ्** । धातोरित्यधिक्रियते प्रत्यय इति च । धातोरिति विहितविशेषणम् । तेन धातोरित्यधिकृत्य विहितः प्रत्यय इति लभ्यते । ततो मूलोक्तार्थलाभः ।

**वेरपृक्तस्य** । 'लोपो व्योर्वलि' इत्यतो लोप इत्यनुवर्तते ।

**क्विन्प्रत्ययस्य कुः** । अत्र 'पदस्य' इत्यधिक्रियते । 'झलां जशोऽन्ते'इत्यतः

---

३०३. ऋत्विक् दधृक् स्रक् दिक् उष्णिक् अञ्चु युज् और क्रुञ्च से क्विन् प्रत्यय होता है अञ्च धातु से सुप उपपद रहे और युज और क्रुञ्च धातु केवल रहे तब ।

३०४. धातु के अधिकार में तिङ्भिन्न प्रत्यय की कृत् संज्ञा होती है ।

३०५. अपृक्त ( एकाल् प्रत्यय ) वकार का लोप होता है ।

३०६. जिस धातु से क्विन् प्रत्यय होता हो उसको कवर्ग अन्तादेश होता है पदान्त में । यह चोः कुः की दृष्टि में असिद्ध है ।

न्तादेशः पदान्ते । अस्यासिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक्, ऋत्विग् । ऋत्विजौ । ऋत्विग्भ्याम् ।

**३०७. युजेरसमासे ७।१।७१ ॥** युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ । युञ्जः । युग्भ्याम् ।

---

अन्ते इत्यनुवर्तते । 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया तदन्तविधिनैव सिद्धे प्रत्ययग्रहणं क्विन्प्रत्ययो यस्माद् दृष्ट इति दृष्टपदार्थान्तर्भावेण बहुव्रीहिलाभार्थम् । तत्श्च यस्माद्यस्मात्क्विन् दृष्टस्तस्य कवर्गोऽन्तादेश इति लभ्यते । तेन स्पृग् इत्यादौ क्विनोऽभावेऽपि कुत्वम्भवत्येति शम् ।

**ऋत्विक्** । ऋतूपपदात् यज्धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति क्विन्प्रत्ययेऽनुबन्धलोपे 'वचिस्वपियजादीनां किति' इति इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे यणि 'कृदतिङ्' इति क्विनः कृत्संज्ञायां 'वेरपृक्तस्य' इति वलोपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात्सौ 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वात् 'चोः कुः' इति कुत्वे पाक्षिके चर्त्वे ऋत्विक् इति, चर्त्वाभावपक्षे ऋत्विग् इति च सिद्धम् ।

**ऋत्विग्भ्याम्** । ऋतावुपपदे यजेः क्विनि अनुबन्धलोपे सम्प्रसारणे पूर्वरूपे यणि 'कृदतिङ्' इति क्विनः कृत्संज्ञायां 'वेरपृक्तस्य' इति वलोपे कृदन्तत्वात्प्रातिपदिकत्वेन भ्यामि 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वात् 'चोः कुः' इति कुत्वे ऋत्विग्भ्यामिति सिद्धम् ।

ऋत्विक्-ऋत्विग्, ऋत्विजौ, ऋत्विजः । ऋत्विजम्, ऋत्विजौ, ऋत्विजः । ऋत्विजा, ऋत्विग्भ्याम्, ऋत्विग्भिः । ऋत्विजे, ऋत्विग्भ्याम्, ऋत्विग्भ्यः । ऋत्विजः, ऋत्विग्भ्याम्, ऋत्विग्भ्यः । ऋत्विजः, ऋत्विजोः, ऋत्विजाम् । ऋत्विजि, ऋत्विजोः, ऋत्विक्षु । हे ऋत्विक् हे ऋत्विग्, हे ऋत्विजौ हे ऋत्विजः ।

**युजेरसमासे** । अत्र 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यतः सर्वनामस्थाने इति 'इदितो नुम् धातोः इत्यतो नुम् इति चानुवर्तते ।

**युङ्** । युज्धातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्ययेऽनुबन्धलोपे 'कृदतिङ्' इति कृत्संज्ञायां 'वेरपृक्तस्य' इति वलोपे कृदन्तत्वात्प्रातिपदिकत्वेन सौ परत्वापूर्व 'युजेरसमासे' इति नुमागमेऽनुबन्धलोपे ततः सुलोपे जकारस्य संयोगान्तलोपे 'क्विप्रत्ययस्य कुः' इति कुत्वेन नस्य ङकारे युङ् इति सिद्धम् ।

**युञ्जौ** । युज्धातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्ययेऽनुबन्धलोपे कृत्संज्ञायां

---

३०७. युज् धातु से सर्वनामस्थान में नुम् होता है समास को छोड़कर ।

३०८. चोः कुः ८।२।३० ॥ चवर्गस्य कवर्गः स्याज्झलि पदान्ते च। सुयुक्, सुयुग्। सुयुजौ। सुयुग्भ्याम्। खन्। खञ्जौ। खन्भ्याम्।

३०९. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८।२।३६ ॥ व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। जश्त्वचर्त्वे। राट्, राड्। राजौ। राजः। राड्भ्याम्। एवं विभ्राट्। देवेट्। विश्वसृट्। (परौ व्रजेः षः पदान्ते)। परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते

---

वलोपे कृदन्तत्वात्प्रातिपदिकत्वेन औविभक्तौ 'युजेरसमासे' इति नुमागमेऽनुबन्धलोपे 'नश्चापदान्तस्य झलि' इति नस्यानुस्वारे 'अनुस्वारस्य ययि परसवर्णः' इति अनुस्वारस्य परसवर्णेन ञकारे तस्यासिद्धत्वात् 'चोः कुः' इति कुत्वाभावे युञ्जौ इति सिद्धम्।

चोः कुः। अत्र 'पदस्य' इत्यधिक्रियते। 'झलो झलि' इत्यतो झलि इति 'स्कोः संयोगाद्योरन्ते च' इत्यतः अन्ते इति चानुवर्तते।

सुयुक्। सुपूर्वाद् युज्धातोः 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति क्विप्प्रत्यये तस्य लोपे निष्पन्नसुयुज् शब्दात्प्रातिपदिकत्वेन सावनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे क्विन्प्रत्ययो यस्माद् दृष्ट इत्यर्थसत्त्वात्प्राप्तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धात् 'चोः कुः' कुत्वे पाक्षिके चर्त्वे सुयुक्-सुयुग् इति सिद्धम्।

खन्। इदितः खज्धातोः क्विपि तल्लोपे इदित्वान्नुम्यनुबन्धलोपेऽनुस्वारे परसवर्णे च कृते निष्पन्नखञ्जशब्दात्सौ तल्लोपे 'संयोगान्तस्य लोपः' इति जलोपे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन ञकारनिवृत्तौ खन् इति सिद्धम्।

व्रश्चभ्रस्ज—व्रश्चादयः सप्तधातवः छशौ वर्णौ ताभ्यां शब्दस्वरूपविशेष्यमादाय तदन्तविधिः। 'झलो झलि' इत्यतो झलीत्यनुवर्तते। 'पदस्य' इत्यधिक्रियते। 'स्कोः संयोगाद्योरन्ते च' इत्यतः अन्ते इत्यनुवर्तते।

राट्। राज्शब्दात्सावनुबन्धलोपे 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति जस्य षत्वे तस्य 'झलां जशोऽन्ते' इति जश्त्वेन डकारे 'वावसाने' इति पाक्षिके चर्त्वे राट्-राड् इति रूपद्वयं सिद्धम्।

---

३०८. चवर्ग के स्थान में कवर्ग आदेश होता है झल् अथवा पदान्त परे रहते।

३०९. व्रश्च भ्रंज सृज मृज यज राज भ्राज इन सात शब्दों से और छान्त शान्त शब्दों के अन्त में षकार आदेश होता है, झल अथवा पदान्त परे रहते (वा० परि उपपद व्रज धातु से पदान्त में षकार होता है और क्विप् प्रत्यय तथा दीर्घ होता है)।

षत्वमपि । परिवाट् । परिव्राजौ ।

**३१०. विश्वस्य वसुराटोः ६।३।१२८ ॥** विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ।

**३११. स्कोः संयोगाद्योरन्ते च ८।२।२९ ॥** पदान्ते झलि च यः संयोगस्तदाद्योः सकारककारयोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलाञ्जश् झशि इति शस्य जः भृज्जौ । भृड्भ्याम् । त्यदाद्यत्वं पररूपत्वं च ।

---

**परिव्राट्** । परिपूर्वकाद् व्रज्धातोः 'परौ व्रजेः षः पदान्ते' इति क्विप्प्रत्यये दीर्घे षत्वे च कृते क्विपो लोपे प्रातिपदिकत्वात्सौ हल्ङ्याब्भ्यः' इत्यादिना तल्लोपे जश्त्वे चर्त्वे परिव्राट् इति सिद्धम् ।

**विश्वस्य** । अत्र 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इत्यनुवर्तते । अत्र चर्त्वमविवक्षितम् ।

**विश्वाराट्** । विश्वोपपदात् राज्धातोः 'सत्सूद्विष' इत्यादिना क्विपि तल्लोपे निष्पन्नविश्वराजशब्दात्सौ तल्लोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राच्छशां षः' इति जस्य षत्वे 'झलां जशोऽन्ते' इति जश्त्वेन षस्य डकारे तस्य 'वावसाने' इति पाक्षिकचर्त्वेन टकारे कृते 'विश्वस्य वसुराटोः' इति दीर्घे विश्वाराट् इति, सूत्रे राडित्यस्य पदान्तत्वोपलक्षणार्थत्वाच्चर्त्वाभावपक्षेऽपि दीर्घे विश्वाराड् इति च सिद्धम् ।

**विश्वाराड्भ्याम्** । विश्वराज्शब्दाद् भ्यामि विभक्तौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'व्रश्च' इत्यादिना षत्वे तस्य जश्त्वे 'विश्वस्य वसुराटोः' इति दीर्घे विश्वाराड्भ्यामिति सिद्धम् ।

**स्कोः** । अत्र संयोगेति लुप्तषष्ठीकम् 'पदस्य' इत्यधिक्रियते । 'झलो झलि' इत्यतो झलीति 'संयोगान्तस्य लोप' इति चानुवर्तते । स् च क् च स्कौ तयोरिति विग्रहः ।

**भृट्** । भृस्ज्शब्दात्सौ 'हल्ङ्याब्भ्य;' इत्यादिना सुलोपे 'स्कोः संयोगाद्योरन्ते च' इति सुलोपे 'व्रश्च' इत्यादिना जस्य षत्वे तस्य जश्त्वेन डकारे पाक्षिके चर्त्वे भृट्-भृड् इति रूपद्वयं सिद्धम् ।

**भृज्जौ** । भृस्जशब्दादौविभक्तौ पदान्तझल्परसंयोगादित्वाभावात्संयोगादिलोपाभावे 'झलां जश् झशि' इति जश्त्वस्यासिद्धत्वात्पूर्वं 'स्तोः श्चुना श्चुः' इति

---

३१०. विश्व शब्द को दीर्घ अन्तादेश होता है वसु शब्द अथवा राज शब्द परे रहते ।

३११. पदान्त और झल परे रहते जो संयोग तदादि जो सकार और ककार उसका लोप होता ।

**३१२. तदोः सः सावनन्त्ययोः ७।२।१०६ ॥** त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः । त्यौ । त्ये । सः । तौ । ते । यः यौ । ये । एषः । एतौ । एते ।

**३१३. ङे प्रथमयोरम् ७।१।२८ ॥** युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः ।

**३१४. त्वाहौ सौ ७।२।९४ ॥** अनयोर्मपर्यन्तस्य त्वाऽहौ आदेशौ स्तः ।

**३१५. शेषे लोपः ७।२।९२ ॥** एतयोष्टिलोपः । त्वम् । अहम् ।

---

सकारस्य श्चुत्वेन शकारे कृते तस्य 'झलां जश् झशि' इति जश्त्वेन जकारे कृते भृज्जौ इति सिद्धम् ।

**तदोः सः ।** अत्र 'त्यदादीनामः' इत्यतस्त्यदादीनामित्यनुवर्तते ।

**स्यः ।** त्यद्शब्दात्सौ 'त्यदादीनामः' इति अन्तादेशेऽकारे 'अतो गुणे' इति पररूपे 'तदोः सः सावनन्त्ययोः' इति तकारस्य सकारे सस्य 'ससजुषो रुः' इति रुत्वे विसर्गे च स्यः इति सिद्धम् ।

**त्यौ ।** त्यद्शब्दादौ विभक्तौ 'त्यदादीनामः' इति अकारेऽन्तादेशे 'अतो गुणे' इति पररूपे पूर्वसवर्णदीर्घस्य 'नादिचि' इति निषेधे वृद्धौ त्यौ इति सिद्धम् । रूपं तु सर्वशब्दवदेव ।

**ङेप्रथमयोरम् ।** ङे इति लुप्तषष्ठीकम् । प्रथमा च प्रथमा च प्रथमे तयोः प्रथमयोरिति विग्रहः । एकः प्रथमाशब्दः प्रथमाबोधकः द्वितीयस्तु द्वितीयाबोधकः । 'युस्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते ।

**त्वाहौ सौ ।** 'मपर्यन्तस्य' इत्यधिक्रियते 'युष्मदस्मदोरनादेशे' इत्यतः युष्मदस्मदोरित्यनुवर्तते ।

**शेषे लोपः ।** अष्टन आ विभक्तौ, इत्यतो विभक्तावित्यनुवर्तते । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । 'मपर्यन्तस्य' इत्यपकृष्य पञ्चम्यन्ततया

---

३१२. अन्त्य में न होने वाले त्यदादियों के तकार और दकार के स्थान में स आदेश होता है सु परे रहते ।

३१३. युष्मद अस्मद शब्द से परे ङे प्रत्यय और प्रथमा तथा द्वितीया विभक्ति के स्थान में अम् आदेश होता है ।

३१४. युष्मद् और अस्मद् शब्द के मपर्यन्त भाग के स्थान में अर्थात् युष्म और अस्म के स्थान में क्रम से त्व और अह आदेश होते हैं ।

३१५. युष्मद् और अस्मद् शब्द के मपर्यन्त से शेष अद् भाग का (टि का) लोप होता हैं ।

**३१६. युवावौ द्विवचने ७।२।९०॥** द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ।

**३१७. प्रथमायाश्च द्विवचने भाषायाम् ७।२।८८॥** औङ्येतयोरात्वं लोके । युवाम् अवाम् ।

**३१८. यूयवयौ जसि ७।२।९३॥** अनयोर्मपर्यन्तस्य यूयवयौ स्तो जसि ।

---

विपरिणम्यते । शेषे इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया । तेन मपर्यन्ताच्छेषस्य युष्मदस्मदोर्लोपः स्याद्विभक्ताविति सूत्रार्थः ।

**त्वम्** । युष्मद्शब्दात्सौ 'ङे प्रथमयोरम्' इति सोरमादेशे 'न विभक्तौ तुस्माः' इति मकारेत्संज्ञानिषेधे 'त्वाहौ सौ' इति मपर्यन्तस्य त्वइत्यादेशे अन्तरङ्गत्वात्पूर्वम् 'अतो गुणे' इति पररूपे 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते' इति न्यायेन पूर्वकालिकमपर्यन्तशेषत्वमादाय 'शेषे लोपः' इति अदो लोपे त्वम् इति सिद्धम् ।

**अहम्** । असमच्छब्दात्सौ 'ङेप्रथमयोरम्' इति सोरमादेशे 'त्वाहौ सौ' इति मपर्यन्तस्य अह इत्यादेशे अन्तरङ्गत्वात्पूर्वम् 'अतो गुणे' इति पररूपे पूर्वकालिकमपर्यन्तशेषत्वमादाय 'शेषे लोपः' इति अदो लोपे अहम् इति सिद्धम् ।

**युवावौ** । अत्र 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यधिक्रियते । 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते । वचनमुक्तिः । द्वयोर्वचनं द्विवचनं तस्मिन्द्विवचने इति विग्रहः ।

**प्रथमायाश्च** । 'अष्टन आ विभक्तौ, इत्यत आ विभक्ताविति 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरिति चानुवर्तते ।

**युवाम्-आवाम्** । युष्मद्शब्दाद् अस्मद्शब्दाच्च औविभक्तौ 'ङे प्रथमयोरम्' इति अमादेशे 'युवावौ द्विवचने' इति मपर्यन्तस्य युष्मदो युवादेशे अस्मद आवादेशे 'अतो गुणे' इति पररूपे युवद् अम्-आवद् अम् इति स्थिते 'शेषे लोपः' इति टिलोपे प्राप्ते तम्प्रबाध्य 'प्रथमायाश्च द्विवचने भाषायाम्' इति दकारस्य आकारे कृते सवर्णदीर्घे युवाम् इति आवाम् इति च सिद्धम् ।

**यूयवयौ** । अत्र 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यधिक्रियते ।

---

३१६. युष्मद् और अस्मद् शब्द के मपर्यन्त भाग के स्थान में युव और आव आदेश होता है द्विवचन विभक्ति में ।

३१७. युष्मद् और अस्मद् शब्द के औङ् ( औ ) विभक्ति परे रहते आत्व होता है लौकिक व्याकरण में ।

३१८. युष्मद् और अस्मद् शब्द के मपर्यन्त भाग के स्थान में यूय वय आदेश होता है जश विभक्ति परे रहते ।

यूयम् । वयम् ।

३१९. **त्वमावेकवचने** ७।२।९७ ॥ एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ।

३२०. **द्वितीयायाञ्च** ७।२।२८ ॥ अनयोरात्स्यात् । त्वाम् । माम् ।

३२१. **शसो न** ७।१।२८ ॥ आभ्यां शसो नः स्यात् । अमोऽपवादः । आदेः परस्य । संयोगान्तलोपः । युष्मान् । अस्मान् ।

---

**यूयम्-वयम्** । युष्मच्छब्दाद् अस्मच्छब्दाच्च जसि 'ङे प्रथमयोरम्' इति जसोऽमादेशे 'यूयवयौ जसि' इति मपर्यन्तस्य युष्मदोयूयादेशे अस्मदो वयादेशे 'अतो गुणे' इति पररूपे 'शेषे लोपः' इति अदो लोपे यूयम् इति वयम् इति च सिद्धम् ।

**त्वमावेकवचने** । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरिति, 'अष्टन आ विभक्तौ' इत्यतो विभक्ताविति चानुवर्तते । मपर्यन्तस्येत्यधिक्रियते ।

**द्वितीयायां च** । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरिति 'अष्टन आ विभक्तौ' इत्यत आ विभक्ताविति चानुवर्तते ।

**त्वाम्-माम्** । युष्मच्छब्दाद् अस्मच्छब्दाच्च अमि विभक्तौ 'ङे प्रथमयोरम्' इति अमादेशे 'त्वमावेकवचने' इति मपर्यन्तस्य युष्मदस्त्वादेशे अस्मदो मादेशे 'अतो गुणे' इति पररूपे 'शेषे लोपः' इतिप्राप्तं टिलोपम्प्रबाध्य 'द्वितीयायां च' इति दकारस्य आकारे सवर्णदीर्घे 'अमि पूर्वः' इति पूर्वरूपे त्वाम् इति माम् इति च सिद्धम् ।

**शसो न** । नेत्यविभक्तिकम्पदम् । युष्मदस्मदभ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते ।

**युष्मान्-अस्मान्** । युष्मच्छब्दाद् अस्मच्छब्दाच्च शसि विभक्तावनुबन्धलोपे 'द्वितीयायां च' इत्यात्वे दीर्घे 'ङेप्रथमयोरम्' इति प्राप्तमम् बाधित्वा 'आदेः परस्य' इतिसूत्रबलात् 'शसो न' इति अकारस्य नकारे 'संयोगान्तस्य लोपः' इति सलोपे युष्मानिति अस्मान् इति च सिद्धम् ।

---

३१९. युष्मद् और अस्मद् शब्द के मपर्यन्त भाग के स्थान में त्व और म आदेश होता है एक वचन में विभक्ति परे रहते ।

३२०. युष्मद् और अस्मद् शब्द के द्वितीया विभक्ति में आत् आगम होता है ।

३२१. युष्मद् और अस्मद् शब्द से शस् विभक्ति के सकार के स्थान में न आदेश होता है ।

**३२२. योऽचि ७।२।८९ ॥** अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ।

**३२३. युष्मदस्मदोरनादेशे ७।२।८६ ॥** अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ।

**३२४. तुभ्यमह्यौ ङयि ७।२।९५ ॥** अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो-ङयि । टिलोपः तुभ्यम् । मह्यम् ।

---

**योऽचीति** । 'युष्मदस्मदारेनादेशे' इत्यतः युष्मदस्सदोविति 'अष्टन आ विभक्तौ' विभक्ताविति इत्यतो चानुवर्तते । अचीति विभक्तिविशेषणम् । तदादिविधिः ।

**त्वया-मया** । युष्मच्छब्दाद् अस्मच्छब्दाच्च टाविभक्तावनुबन्धलोपे 'त्वमावेक-वचने' इति मपर्यन्तस्य युष्मदस्त्वादेशेऽस्मदो मादेशे च 'अतो गुणे, इति पररूपे 'योऽचि' इति दकारस्य यकारे कृते त्वया इति मया इति च सिद्धम् ।

**युष्मदस्मदोरनादेशे** । अत्र 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते । 'रायो हलि' इत्यतो हलीत्यनुवर्तते । तच्च विभक्तिविशेषणम् । तदादिर्विधिः ।

**युवाभ्याम्-आवाभ्याम्** । युष्मच्छब्दाद् अस्मच्छब्दाच्च भ्यामि विभक्तौ 'युवावौ द्विवचने' इति मपर्यन्तस्य युष्मदो युवादेशेऽस्मद आवादेशे पररूपे युष्मद-स्मदोरनादेशे' इति दकारस्य आत्वे सवर्णदीर्घे च कृते युवाभ्यामिति आवाभ्यामिति च सिद्धम् ।

**तुभ्यमह्यौ ङयि** । अत्र 'युष्मदस्मदोरनोदेशे' इत्यतो युष्मदस्मदोरित्यनु-वर्तते । मपर्यन्तस्येत्यधिक्रियते ।

**तुभ्यम्-मह्यम्** । युष्मच्छब्दादस्मच्छब्दाच्च ङेविभक्तौ 'त्वमावेकवचने' इति-सूत्रम्प्रबाध्य 'तुभ्यमह्यौ ङयि' इति मपर्यन्तस्य युष्मदस्तुभ्यादेशे अस्मदश्च मह्यादेशे पररूपे ङेरमादेशे टिलोपे तुभ्यमिति मह्यमिति च सिद्धम् ।

---

३२२. युष्मद् और अस्मद् शब्द के परे डी को यकार आदेश होता हैं अजादि विभक्ति परे रहते, यदि उसके स्थान में कोई आदेश न हुआ हो ।

३२३. युष्मद् और अस्मद् शब्द के टि को आत् आदेश होता है । यदि उसके स्थान में आदेश न हुआ हो हलादि विभक्ति परे रहते ।

३२४. युष्मद् और अस्मद् के मपर्यन्त भाग को तुभ्य और मह्य आदेश होता है ङि विभक्ति परे रहते ।

३२५. **भ्यसोऽभ्यम् ७।१।३०** ॥ आभ्यां परस्य भ्यसोऽभ्यमादेशः स्यात् । युष्मभ्यम् अस्मभ्यम् ।

३२६. **एकवचनस्य च ७।१।३२** ॥ आभ्यां ङसेरत् । त्वत् । मत् ।

३२७. **पञ्चम्या अत् ७।१।३१** ॥ आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ।

३२८. **तवममौ ङसि ७।२।९६** ॥ अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ।

---

**भ्यसोऽभ्यम्** । अत्र 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते ।

**युष्मभ्यम्-अस्मभ्यम्** । युष्मच्छब्दादस्मच्छब्दाच्च चतुर्थीबहुवचने भ्यसि विभक्तौ 'भ्यसोऽभ्यम्' इति भ्यसोऽभ्यमादेशे 'शेषे लोपः' इति टिलोपे युष्मभ्यमिति अस्मभ्यमिति च सिद्धम् ।

**एकवचनस्य च** । अत्र 'युष्मदस्मद्भ्यां ङसोऽश् इत्यतो युष्मदस्मद्भ्यामिति 'पञ्चम्या अत्' इतिसूत्रञ्चानुवर्तते ।

**त्वत् मत्** । युष्मच्छब्दादस्मच्छब्दाच्च ङसि विभक्तावनुबन्धलोपे 'त्वमावेकवचने' इति मपर्यन्तस्य युष्मदस्त्वादेशे अस्मदश्च मादेशे 'एकवचनस्य च' इति ङसेरदादेशे 'अतो गुणे' इति पररूपे 'शेषे लोपः' इति टिलोपे त्वत् इति मत् इति च सिद्धम् ।

**पञ्चम्या अत्** । अत्र 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामिति 'भ्यसोऽभ्यम्' इत्यतोभ्यस इति चानुवर्तते ।

**युष्मत्-अस्मत्** । युष्मच्छब्दादस्मच्छब्दाच्च पञ्चमीबहुवचने भ्यसि 'भ्यसोऽभ्यम्' इतिसूत्रम्बाधित्वा 'पञ्चम्या अत्' इत्यतो भ्यसः अत् आदेशे 'शेषे लोपः' इति टिलोपे युष्मत् इति अस्मत् च सिद्धम् ।

**तवममौ** । अत्र 'युस्मदस्मदोरनादेशे' इत्यतो युष्मदोरित्यनुवर्तते । मपर्यन्तस्येत्यधिक्रियते ।

---

३२५. युष्मद् ओर अस्मद् शब्द से परे भ्यस् के स्थान में अभ्यम् आदेश होता है ।

३२६. युष्मद् और अस्मद् शब्द के एक वचन में ङसि विभक्ति के स्थान में अत् आदेश होता है ।

३२७. युष्मद् और अस्मद् शब्द से पञ्चमी विभक्ति के भ्यस् प्रत्यय के स्थान में अत् आदेश होता है ।

३२८. युष्मद् और अस्मद् शब्द के मपर्यन्त भाग के स्थान में तव मम आदेश होता है क्रम से ङस् विभक्ति परे रहते ।

**३२९. युष्मदस्मद्भ्यां ङसोऽश् ७।१।२७ ॥** तव । मम । युवयोः । आवयोः ।

**३३०. साम आकम् ७।१।३३ ॥** आभ्यां परस्य साम आकम् स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ।

---

**तव मम** । युष्मच्छब्दादस्मच्छब्दाच्च ङस्यनुबन्धलोपे 'त्वमावेकवचने' इति सूत्रम्बाधित्वा 'तवममौ ङसि' इति मपर्यन्तस्य युष्मदस्तवादेशे अस्मदश्च ममादेशे 'युष्मदस्मद्भ्यां ङसोऽश्' इति ङसः' अशादेशेऽनुबन्धलोपे 'अतो गुणे' इति पररूपे 'शेषे लोपः' इति टिलोपे तव इति, मम इति च सिद्धम् ।

**साम आकम्** । अत्र 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मदोरित्यनुवर्तते । भाविनः सुटो निवृत्त्यर्थं सूत्रे ससुट्कनिर्देशः ।

**युष्माकम् अस्माकम्** । युष्मच्छब्दादस्मच्छब्दाच्च आमि विभक्तौ आमि सान्त्वारोपात् 'साम आकम्' इति आम आकमादेशे 'शेषे लोपः इति टिलोपे युष्माकम् इति अस्माकम् इति च सिद्धम् ।

**त्वयि मयि** । युष्मच्छाब्दादस्मच्छब्दाच्च ङिविभक्तावनुबन्धलोपे 'त्वमावेकवचने' इति मपर्यन्तस्य युष्मदस्त्वादेशे अस्मदो मादेशे 'अतो गुणे' इति पररूपे 'योऽचि' इति दकारस्य यकारे त्वयि इति मयि इति च सिद्धम् ।

**युष्मासु अस्मासु** । युष्मच्छब्दादस्मच्छब्दाच्च सुप्यनुबन्धलोपे 'युष्मदस्मदोरनादेशे' इति दस्यात्वे सवर्णदीर्घे युष्मासु इति अस्मासु इति च सिद्धम् ।

त्वम्, युवाम्, यूयम् । त्वाम्, युवाम्, युष्मान् । त्वया; युवाभ्याम्, युष्माभिः । तुभ्यम्, युवाभ्याम्, युष्मभ्यम् । त्वत्, युवाभ्याम्, युष्मत् । तव, युवयोः, युष्माकम् । त्वयि, युवयोः, युष्मासु ।

अहम्, आवाम्, वयम्, । माम्, आवाम्, अस्मान् । मया, आवाभ्याम्, अस्माभिः, । मह्यम्, आवाभ्याम्, अस्मभ्यम् । मत्, आवाभ्याम्, अस्मत् । मम, आवयोः, अस्माकम् । मयि, आवयोः अस्मासु ।

---

३२९. युष्मद् और अस्मद् शब्द से परे ङस् विभक्ति के स्थान में अस् आदेश होता है ।

३३०. युष्मद् और अस्मद् शब्द से परे साम के स्थान में आकम् आदेश होता है ।

**३३१. युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ८।१।२० ॥** पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः।

**३३२. बहुवचनस्य वस्नसौ ८।२।२१ ॥** उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः।

**३३३. तेमयावेकवचनस्य ८।१।२२ ॥** उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः।

**३३४. त्वामौ द्वितीयायाः ८।१।२३ ॥** द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः।

श्रीशस्त्वाऽवतु मापीह, दत्तात्ते मेऽपि शर्म सः।

---

**युष्मदस्मदोः**। अत्र 'पदस्य' 'पदात्' अनुदात्तं सर्वमपादादौ' इति सूत्रत्रयमधिक्रियते।

**बहुवचनस्य**। अत्रापि 'पदस्य' 'पदात्' 'अनुदात्तं सर्वमपादादौ' इतिसूत्रत्रयमधिक्रियते। पूर्वसूत्रात् युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोरित्यनुवर्तते।

**तेमयावेकवचनस्य**। अत्रापि पूर्वसूत्रवत् पूर्वोक्तसूत्रत्रयमधिक्रियते। युष्मदस्मदोः षष्ठीचतुर्थीत्यनुवर्तते।

**त्वामौ द्वितीयायाः**। पूर्वोक्तसूत्रत्रयमधिक्रियते। युष्मदस्मदोरिति एकवचनस्येति चानुवर्तते।

द्वितीयादिक्रमेणोदाहरति **श्रीशस्त्वावतु** इत्यादिना : श्रियाः ईशः श्रीशः विष्णुः इह = संसारे त्वा = त्वाम् मा = मामपि अवतु = रक्षतु। अत्र श्रीशपदात्परयोः त्वाम् माम् इति द्वितीयैकवचनान्तयोर्युष्मदस्मदोस्त्वा मा इत्यादेशौ। सः श्रीशः ते=

---

३३१. पद से परे अपादादि में स्थित युष्मद् और अस्मद् शब्द के षष्ठीः चतुर्थी तथा द्वितीया विभक्ति में क्रम से वाम नौ आदेश होते हैं।

३३२. पद से परे अपादादि में स्थिति युष्मद् और अष्मद् शब्द के षष्ठी चतुर्थी विभक्ति के बहुद्वितीया वचनान्त के स्थान में वस् नश् आदेश होते हैं।

३३३. पद से परे अपादादि में स्थित युष्मद् अस्मद् शब्द के षष्ठी चतुर्थी के एक वचनान्त के स्थान में ते में आदेश होते हैं।

३३४. पद से परे अपादादि में स्थित युस्मद् अस्मद् शब्द के द्वितीया के एक वचनान्त के स्थान में त्वा म आदेश होते हैं। (बा०) एक वाक्य में युष्मद अस्मद के स्थान में आदेश होते हैं। (वा०) एक तिङन्त पद समूह को वाक्य कहते हैं। (बा०) ये वाम नौ आदि आदेश अनन्वादेश में विकल्प से होते हैं अर्थात् अन्वादेश में ये आदेश नित्य होते हैं।

स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः।
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद्वो नः शिवं वो नो, दद्यात्, सेव्योऽत्र वः स नः।

( एकवाक्ये युष्मदस्मदादेशा वक्तव्याः )। ( एकतिङ् वाक्यम् ) तेनेह न। ओदनं पच तव भविष्यति। इह तु स्यादेव। शालीनां ते ओदनं दास्यामि। ( एते वान्नावादयोऽनन्वादेशे वा वक्तव्याः ) अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति वा। तस्मै ते नम इत्येव। सुपात्, सुपाद्। सुपादौ।

**३३५. पादः पत् ६।४।१३०॥** पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पदा-

---

तुभ्यम्, मे = मह्यम् अपि शर्म = सुखं दत्तात्। अत्र तुभ्यम् मह्यम् इति चतुर्थ्येकवचनान्तयोर्दत्तात्पदपरयोः ते मे इत्यादेशौ। स हरिः ते = तव मे = मम अपि स्वामी। अत्र स्वामिपदात्परयोः तव मम इतिषष्ठ्येकवचान्तयोः ते मे इत्यादेशौ। विभुः = सर्वव्यापकः वाम्-युवाम्, नौ-आवाम् अपि पातु-रक्षतु। अत्र पातुपदात्परयोः युवाम् आवाम् इति द्वितीयाद्विवचनान्तयोः वाम् नौ इत्यादेशौ। ईशः वां युवाभ्याम् नौ-आवाभ्याम् सुखं ददातु। अत्र सुखपदात्परयोः युवाभ्याम् आवाभ्याम् इति चतुर्थीद्विवचनान्तयोः वाम् नौ इत्यादेशौ। हरिः वाम्युवयोः नौ-आवयोरपि पतिः। अत्र पतिपदात्परयोः युवयोः आवयोः इति षष्ठीद्विवचनान्तयोः वाम् नौ इत्यादेशौ। स हरिः वः = युष्मान् नः = अस्मान् अपि अव्याद्रक्षतु। अत्र अव्यात्पदपरयोः युष्मान् अस्मान् इति द्वितीयाबहुवचनान्तयोः वस्नसौ। स हरिः व. = युष्मभ्यम् नः= अस्मभ्यम् शिवं दद्यात्। अत्र शिवशब्दातपरयोः युष्मभ्यम् अस्मभ्यम् इति चतुर्थीबहुवचनान्तयोः वस्नसौ। स हरिः वः युष्माकं नः = अस्माकम् अपि सेव्यः भजनीयः। अत्र सेव्यपदात्परयोः युष्माकम् अस्माकम् इति षष्ठीबहुचनान्तयोः वस्नसौ!

**एकतिङ् वाक्यम्**। अत्र तिङ्पदेन तिङन्तग्रहणम्। एकः तिङ् यस्य तदेकतिङ्। तथा च एकतिङन्तघटितं वाक्यमिति तदर्थः।

**धाता ते भक्तोऽस्ति**। अत्र अन्वादेशाभावेन 'एते वान्नावादय अनन्वादेशे वा वक्तव्याः' इतिवार्त्तिकबलात् विकल्पेन तव इत्यस्य ते इत्यादेशः। तस्मै ते नम इत्यत्र तु अन्वादेशसत्त्वान्न विकल्प आदेशः।

**पादः पत्**। अत्र 'अङ्गस्य' इति 'भस्य' इति चाधिक्रियते। तत्र पाद इति विशेषणम्। तेन 'येन विधिस्तदन्तस्य' इति तदन्तविधिः।

---

३३५. पाद शब्द है अन्त में जिसके ऐसा जो भसंज्ञक अंग तदवयव पात् शब्द के स्थान में पत् आदेश होता है।

देशः। सुपदः। सुपदा। सुपाद्भ्याम्। अग्निमत्, अग्निमद्। अग्निमथौ। अग्निमथः।

**३३६. अनिदितां हल उपधायाः क्ङिति ६।४।२४॥** हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति। नुम्। संयोगान्तस्य लोपः। नस्य कुत्वेन ङः। प्राङ्। प्राञ्चौ। प्राञ्चः।

**३३७. अचः ६।४।१३८॥** लुप्तनकारस्याऽञ्चतेर्भस्याकारस्य लोपः।

**३३८. चौ ६।३।१३८॥** लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः।

---

**सुपदः**। सुपाद्शब्दाच्छसि विभक्तावनुबन्धलोपे भसंज्ञायामङ्गसंज्ञायां च 'पादः पत्' इत्यनेन 'निर्दिश्यमानस्यादेशाः भवन्ति' इति परिभाषया पादित्यस्यैव पदादेशे रुत्वे विसर्गे च सुपदः इति सिद्धम्।

**अनिदितां हलः**। अत्र 'अङ्गस्य' इत्याधिक्रियते। तस्य षष्ठ्यन्तत्वेन विपरिणामः। तत्र हल इति विशेषणम्। तदन्तविधिः। 'श्नान्नलोपः' इत्यतो लुप्तषष्ठीकं नेति लोप इति चानुवर्तते। क् च ङ् च क्ङौ तौ इतौ यस्येति विग्रहः।

**प्राङ्**। प्रपूर्वादञ्चधातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्यये तस्य लोपे सवर्णदीर्घे कृदन्तत्वात्प्रातिपदिकत्वेन सौ अनुबन्धलोपे 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्यनुबन्धलोपे 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे 'संयोगान्तस्य लोपः' इति चलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे प्राङ् इति सिद्धम्।

**प्राञ्चौ**। प्रपूर्वादञ्चधातोः 'ऋत्विग्' इत्यादिना क्विनि तस्य लोपे कृदन्तत्वात्प्रातिपदिकत्वेन औ विभक्तौ सवर्णदीर्घे 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्यनुबन्धलोपे नकारस्य अनुस्वारे परसवर्णे च कृते प्राञ्चौ इति सिद्धम्।

**अचः**। अच इति लुप्तनकारस्याञ्चधातोः षष्ठ्यन्तम् रूपम्। 'भस्य' इत्यधिक्रियते। 'अल्लोपोऽनः' इत्यत अल्लोप इत्यनुवर्तते।

**चौ**। लुप्तनकाराकारस्य उकारान्तस्य अञ्चधातोः सप्तम्यन्तं चाविति। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः', इत्यतः पूर्वस्याणो दीर्घ इत्यनुवर्तते।

---

३३६. जो हलन्त अंग अनिदित हैं अर्थात् ह्रस्व इकार की इत् संज्ञा नहीं हुई है उसके उपधा में स्थित नकार का लोप होता है, कित् ङित् प्रत्यय परे रहते।

३३७. लुप्त नकार वाले अञ्च धातु से बने भसंज्ञक अंग के अकार का लोप होता है।

३३८. लुप्त अकार और नकार वाले अञ्च धातु से परे पूर्व अण् को दीर्घ होता है।

प्राचः। प्राचा। प्राग्भ्याम्। प्रत्यङ्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्। उदङ्। उदञ्चौ।

**३३९. उद ईत् ६।४।१३९॥** उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्। उदीचः उदीचा। उदग्भ्याम्।

---

**प्राचः।** प्रपूर्वादञ्चधातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्यये तस्य लोपे कृदन्तत्वात्प्रातिपादिकत्वेन शसि विभक्तावनुबन्धलोपे 'अनिदितां हल उपधायाः क्ङिति' इति नस्य लोपे, अचः इति अकारलोपे 'चौ' इति दीर्घे रुत्वे विसर्गे च प्राचः इति सिद्धम्।

**प्राग्भ्याम्।** प्रपूर्वादञ्चधातोः क्विनि तस्य लोपे कृदन्तत्वात्प्रातिपदिकत्वेन भ्यामि 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे सवर्णदीर्घे 'क्विन्प्रत्ययस्य कुः' इति कुत्वस्यासिद्धत्वात् 'चोः कुः' इति कुत्वे जश्त्वे प्राग्भ्यामिति सिद्धम्।

प्राङ्, प्राञ्चौ प्राञ्चः। प्राञ्चम्, प्राञ्चौ, प्राचः। प्राचा, प्राग्भ्याम्, प्रग्भिः। प्राचे, प्राग्भ्याम्, प्राग्भ्यः। प्राचः, प्राग्भ्याम्, प्राग्भ्यः। प्राचः, प्राचोः, प्राचाम्। प्राचि, प्राचोः, प्राक्षु। हे प्राङ्, हे प्राञ्चौ, हे प्राञ्चः।

**प्रत्यङ्।** प्रतिपूर्वादञ्चधातोः क्विनि तस्यलोपे यणि प्रातिपदिकत्वात्सौ 'अनिदितां हल उपधायाः क्ङिति' इति नस्य लोपे 'उगिदचाम्' इति नुम्यनुबन्धलोपे सुलोपे संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे प्रत्यङ् इति सिद्धम्।

**प्रतीचः।** प्रतिपूर्वादञ्चतेः क्विनि तल्लोपे शस्यनुबन्धलोपे 'अनिदिताम्' इति नस्य लोपे 'अकृतव्यूहाः पाणिनीयाः' इतिपरिभाषया यणोऽप्रवृत्त्या 'अचः' इति अलोपे 'चौ' इति दीर्घे रुत्वे विसर्गे च प्रतीचः इति सिद्धम्।

प्रत्यङ् प्रत्यञ्चौ, प्रत्यञ्चः। प्रत्यञ्चम्, प्रत्यञ्चौ, प्रतीचः। प्रतीचा, प्रत्यग्भ्याम्, प्रत्यग्भिः। प्रतीचे, प्रत्यग्भ्याम्, प्रत्यग्भ्यः। प्रतीचः प्रत्यग्भ्याम्, प्रत्यग्भ्यः। प्रतीचः, प्रतीचोः, प्रतीचाम्। प्रतीचि, प्रतीचोः, प्रत्यक्षु। हे प्रत्यङ्, हे प्रत्यञ्चौ, हे प्रत्यञ्चः।

**उद ईत्।** अत्र 'भस्य' इत्यधिक्रियते। 'अचः' इतिसूत्रम् 'अल्लापोऽनः' इत्यतः अत् इति चानुवर्तते।

**उदीचः।** उत्पूर्वादञ्चधातोः क्विनि तल्लोपे शस्यनुबन्धलोपे 'अनिदिताम्' इति नलोपे 'अचः' इत्यकारलोपम्बाधित्वा 'उद ईत्' इति ईत्वे रुत्वे विसर्गे च उदीचः इति सिद्धम्।

---

३३९. उत् शब्द से परे लुप्त नकार वाले अञ्च धातु वाले भसंज्ञक अङ्ग के अकार के स्थान में ईकार होता है।

**३४०. समः समि ६।३।९३ ।।** वप्रत्ययान्तेऽञ्चतौ परे समः सम्यादेशः स्यात् । सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ।

**३४१. सहस्य सध्रिः ६।३।९५ ।।** वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्र्यादेशः स्यात् सध्र्यङ् ।

**३४२. तिरसस्तिर्यलोपे ६।३।९४ ।।** अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिर्यग्भ्याम् ।

---

**समः समि** । अत्र समि इति लुप्तप्रथमान्तम् । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इत्यतः अञ्चतावप्रत्यये इत्यनुवर्तते ।

सम्यङ् । सम्पूर्वादञ्चतेः क्विनि तल्लोपे 'समः समि' इति समः सम्यादेशे यणि सौ 'अनिदिताम्' इति नलोपे 'उगिदचाम्' इति नुम्यनुबन्धलोपे सुलोपे संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन नस्य ङकारे सम्यङ् इति सिद्धम् ।

**समीचः** । सम्पूर्वादञ्चधातोः 'ऋत्विग्' इत्यादिना क्विनि तल्लोपे 'समः समि' इति समः सम्यादेशे अकृतव्यूहपरिभाषया यणोऽभावे कृदन्तत्वेन प्रातिपदिकत्वाच्छस्यनुबन्धलोपे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घे रुत्वे विसर्गे च समीचः इति सिद्धम् ।

**सहस्य सध्रिः** । 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इत्यतः अञ्चतावप्रत्यये इत्यनुवर्तते ।

सध्र्यङ् । सहपूर्वादञ्चतेः क्विनि तल्लोपे 'सहस्य सध्रिः' इति सहस्य सध्र्यादेशे यणि सौ 'अनिदिताम्' इत्यादिना नलोपे 'उगिदचाम्' इति नुम्यनुबन्धलोपे चस्य संयोगान्तलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे सध्र्यङ् इति सिद्धम् ।

**तिरसस्तिर्यलोपे** । तिरि इति लुप्तप्रथमान्तम् । अञ्चतावप्रत्यये इत्यनुवर्तते ।

**तिर्यङ्** । तिरस्पूर्वादञ्चधातोः क्विनि तस्य लोपे 'तिरसस्तिर्यलोपे' इति तिरसस्तिर्यादेशे यणि सौ 'अनिदिताम्' इति नलोपे 'उगिदचाम्' इति नुम्यनुबन्धलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे तिर्यङ् इति सिद्धम् ।

**तिरश्चः** । तिरस्पूर्वादञ्चतेः क्विनि तल्लोपे प्रातिपदिकत्वाच्छस्यनुबन्धलोपे 'अनिदिताम्' इति नलोपे 'अचः' इत्यकारलोपे सस्य श्चुत्वेन शकारे रुत्वे विसर्गे तिरश्चः इति साधु ।

तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः । तिर्यञ्चम्, तिर्यञ्चौ, तिरश्चः । तिरश्चा, तिर्यग्भ्याम्,

---

३४०. व प्रत्ययान्त अञ्च धातु से परे सम को समि आदेश होता है ।

३४१. व प्रत्ययान्त अञ्च धातु से परे सह के स्थान में सध्रि आदेश होता है ।

३४२. अकार का लोप न हुआ हो उस अञ्च धातु से वप्रत्ययान्त शब्द के तिरस् को तिरि आदेश होता है ।

**३४३. नाञ्चेः पूजायाम् ६।४।३०॥** पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न। प्राङ्। प्राञ्चौ। नलोपाभावादलोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु। एवं पूजार्थे प्रत्यङ्ङादयः। क्रुङ्। क्रुञ्चौ। क्रुङ्भ्याम्। पयोमुक्, पयोमुग्। पयोमुचौ। पयोमुग्भ्याम्। उगित्त्वान्नुम्।

**३४४. सान्त महतः संयोगस्य ६।४।१०॥** सान्तसंयोगस्य महतश्च यो

---

तिर्यग्भिः। तिरश्चे, तिर्यग्भ्याम्, तिर्यग्भ्यः। तिरश्चः, तिर्यग्भ्याम्, तिर्यग्भ्यः। तिरश्चः, तिरश्चोः, तिरश्चाम्। तिरश्चि, तिरश्चोः, तिर्यक्षु। हे तिर्यङ्। हे तिर्यञ्चौ, हे तिर्यञ्चः।

**नाञ्चेः पूजायाम्।** अत्र 'अनिदितां हल उपधायाः क्ङिति' इत्यतः उपधायाः क्ङिति इत्यनुवर्तते। 'श्नान्नलोपः' इत्यतो नलोप इत्यनुवर्तते।

**प्राङ्।** प्रपूर्वात्पूजार्थकाञ्चतेः क्विनि तल्लोपे सवर्णदीर्घे 'अनिदिताम्' इति नलोपे प्राप्ते 'नाञ्चेः पूजायाम्' इति तन्निषेधे सौ 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे चकारस्य संयोगान्तलोपे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इतिन्यायेनानुस्वारपर-सवर्णयोर्निवृत्तौ 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे प्राङ् इति सिद्धम्।

**प्राञ्चः।** प्रपूर्वात्पूजार्थकाञ्चतेः क्विनि तल्लोपे सवर्णदीर्घे 'अनिदिताम्' इति नलोपे प्राप्ते 'नाञ्चेः पूजायाम्' इति तन्निषेधे शस्यनुबन्धलोपे नलोपाभावादकारलोपा-भावे रुत्वे विसर्गे च प्राञ्चः इति सिद्धम्।

**प्राङ्भ्याम्।** प्रपूर्वात्पूजार्थकाञ्चतेः क्विनि तल्लोपे सवर्णदीर्घे 'अनिदिताम्' इति नलोपे प्राप्ते 'नाञ्चेः पूजायाम्' इति तन्निषेधे भ्यामि 'स्वादिष्वसर्वनामस्थाने' इति-पदत्वात्संयोगान्तस्य चकारस्य लोपे अनुस्वारपरसवर्णयोर्निवृत्तौ 'क्विन्प्रत्ययस्य कुः' इति नकारस्य कुत्वेन ङकारे प्राङ्भ्यामिति सिद्धम्।

प्राङ्, प्राञ्चौ, प्राञ्चः। प्राञ्चम्, प्राञ्चौ, प्राञ्चः। प्राञ्चा, प्राङ्भ्याम्, प्राङ्भिः। प्राञ्चे, प्राङ्भ्याम्, प्राङ्भ्यः। प्राञ्चः, प्राङ्भ्याम्, प्राङ्भ्यः। प्राञ्चः, प्राञ्चोः, प्राञ्चाम्। प्राञ्चि, प्राञ्चोः, प्राङ्खषु-प्राङ्क्षु, प्राङ्षु। हे प्राङ्, हे प्राञ्चौ, हे प्राञ्चः। एवमेव पूजायां प्रत्यञ्चादीनामपि रूपं बोध्यम्।

**सान्तमहतः संयोगस्य।** अत्र 'सर्वनामस्थाने चासम्बुद्धौ' इति 'नोपधायाः' इति च सूत्रद्वयमनुवर्तते। नेति लुप्तषष्ठीकम्। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इत्यनुवर्तते।

---

३४३. पूजार्थक अञ्च धातु की उपधा के नकार का लोप नहीं होता।

३४४. सान्त संयोग और महत् का जो नकार उसकी उपधा को दीर्घ होता है, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते।

नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ।

**३४५. अत्वसन्तस्य चाधातोः ६।४।१४ ॥** अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे । उगित्वान्नुम् । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् । भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य भवन् ।

---

**महान्** । महत्शब्दात्सावनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे महान् इति सिद्धम् ।

महान्, महान्तौ, महान्तः । महान्तम्, महान्तौ, महतः । महता, महद्भ्याम्, महद्भिः । महते, महद्भ्याम्, महद्भ्यः । महतः, महद्भ्याम्, महद्भ्यः । महतः, महतोः, महताम् । महति, महतोः, महत्सु । हे महन्, हे महान्तौ, हे महान्तः ।

**अत्वसन्तस्य चाधातोः** । अतु इति लुप्तषष्ठीकम् । अङ्गविशेषणत्वात्तदन्तविधिः । अधातोरित्यसन्तविशेषणम् । 'नोपधायाः' इत्यत उपधाया इति, 'सर्वनामस्थाने चासम्बुद्धौ' इत्यतः असम्बुद्धाविति, 'सौ च' इत्यतः साविति, 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति चानुवर्तते । ततो मूलोक्तार्थलाभः ।

**धीमान्** । धीमत्शब्दात्सावनुबन्धलोपे आरम्भसामर्थ्याद् 'उगिदचाम्, इतिप्राप्तं नुमं बाधित्वा पूर्वम् 'अत्वसन्तस्य चाधातोः' इति दीर्घे ततो नुमागमेऽनुबन्धलोपे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे संयोगान्तलोपे धीमान् इति सिद्धम् ।

धीमान्, धीमन्तौ, धीमन्तः । धीमन्तम्, धीमन्तौ, धीमतः । धीमता, धीमद्भ्याम्, धीमद्भिः । धीमते, धीमद्भ्याम्, धीमद्भ्यः । धीमतः, धीमद्भ्याम्, धीमद्भ्यः । धीमतः, धीमतोः, धीमताम् । धीमति, धीमतोः धीमत्सु । हे धीमन्, हे धीमन्तौ हे धीमन्तः ।

**भवान्** । भाधातोः 'भातेर्डवतुः' इति डवतुप्रत्ययेऽनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे निष्पन्नभवत्शब्दात्सावनुबन्धलोपे 'अत्वसन्तस्य चाधातोः' इति दीर्घे ततः 'उगिदचाम्' इतिनुम्यनुबन्धलोपे हल्ङ्यादिलोपे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे भवान् इति सिद्धम् ।

**भवन्** । भूधातोः 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति शतृप्रत्यये

---

३४५. धातु भिन्न असन्त और अत्वन्त अङ्ग की उपधा को दीर्घ होता है, सम्बुद्धि भिन्न सु परे रहते ।

**३४६. उभे अभ्यस्तम् ६।१।५ ॥** षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे अभ्यस्तसंज्ञे स्तः।

**३४७. नाभ्यस्ताच्छतुः ७।१।७८ ॥** अभ्यस्तात्परस्य शतुर्नुम् न। ददत्, ददद्। ददतौ। ददतः।

**३४८. जक्षित्यादयः षट् ६।१।६ ॥** षड्धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्, जक्षद्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। गुप्, गुब्। गुपौ। गुपः। गुब्भ्याम्।

---

शपि अनुबन्धलोपे गुणे अवादेशे पररूपे निष्पन्नभवच्छब्दात्सौ अत्वन्तत्वाभावेन 'अत्व सन्तस्य चाधातोः' इति दीर्घाभावे नुमि सुलोपे संयोगान्तलोपे भवन् इति सिद्धम्।

**उभे अभ्यस्तम्।** अत्र 'एकाचो द्वे प्रथमस्य' इत्यतोऽनुवृत्तं द्वे इति 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन षष्ठाध्यायविहितद्वित्वपरम्। उभेग्रहणं समुदायप्रतिपत्त्यर्थम्।

**नाभ्यस्ताच्छतुः।** 'इदितो नुम् धातोः' इत्यतो नुम् इत्यनुवर्तते।

**ददत्।** दाधातो शतरि श्लुः, श्लौ इति द्वित्वे ह्रस्वे ददत्शब्दात्सावनुबन्धलोपे 'उभे अभ्यस्तम्' इत्यभ्यस्तसंज्ञायाम् 'उगिदचां सर्वनामस्थानेऽधातोः' इति प्राप्तनुमः 'नाभ्यस्ताच्छतुः' इति निषेधे अत्वन्तत्वाभावाद्दीर्घाभावे सुलोपे ददत् इति सिद्धम्।

ददत्, ददतौ, ददतः। ददतम्, ददतौ, ददतः। ददता, ददद्भ्याम्, ददद्भिः। ददते, ददद्भ्याम्, ददद्भ्यः। ददतः, ददद्भ्याम्, ददद्भ्यः। ददतः, ददतोः, ददताम्। ददति, ददतोः, ददत्सु। हे ददत, हे ददतौ, हे ददतः।

**जक्षित्यादयः षट्।** 'उभेऽभ्यस्तम्' इत्यतोऽनुवृत्तमभ्यस्तमिति बहुवचनान्ततया विपरिणम्यते। जक्ष भक्षणहसनयोः' जागृनिद्राक्षये' दरिद्रादुर्गतौ, चकासृ दीप्तौ, शासु अनुशिष्टौ, दीधीङ् दीप्तिदेवनयोः, वेवीङ् वेतिना तुल्ये, एभ्यः शतृप्रत्यये सुबुत्पत्तौ 'नाभ्यस्ताच्छतुः, इति नुमः प्रतिषेध इष्यते। अभ्यस्तसंज्ञायाश्च द्वित्वनिबन्धनत्वादिहाप्राप्त्या तदर्थमिदमारभ्यते।

**जक्षत्।** जक्षधातोः शतृप्रत्यये निष्पन्नजक्षत्शब्दात्सौ हल्ङ्या दिलोपे 'नाभ्यस्ताच्छतुः' इति निषेधाद् 'उगिदचाम्' इति नुमोऽभावे जक्षत् इति सिद्धम्।

---

३४६. छठवें अध्याय के द्वित्व प्रकरण में जो द्वित्व विहित हैं वे दोनों समुदित अभ्यास संज्ञक होते हैं।

३४७. अभ्यस्त से परे शतृ को नुम नहीं होता है।

३४८. जक्ष आदि छ धातु और सातवीं यक्ष धातु को अभ्यास संज्ञा होती है।

**३४९. त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६० ॥** त्यदाद्युपपदेष्वज्ञानार्थदृशेः कञ्, चात् क्विन् ।

**३५०. आ सर्वनाम्नः ६।३।९१ ॥** सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्दृशवतुषु । तादृक्, तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । विड्भ्याम् ।

**३५१. नशेर्वा ८।२।६३ ॥** नशेः कवर्गोऽन्तादेशो वा पदान्ते ।

---

त्यदादिषु दृशोऽनालोचने कञ्च । अनालोचनपदेन ज्ञानसामान्यं विवक्षितम् । चकारात्क्विन्ननुकृष्यते ।

आसर्वनाम्नः । आ इत्यविभक्तिको निर्देशः । 'दृग्दृशवतुषु' इति सूत्रमनुवर्तते ।

तादृक् । तद्शब्दोपपदाद् दृश्धातोः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति क्विन्प्रत्यये तस्य लोपे 'आ सर्वनाम्नः' इति दकारस्याकारे सवर्णदीर्घे ततः कृदन्तत्वात्प्रातिपदिकत्वेन सावनुबन्धलोपे हल्ङ्यादिलोपे 'क्विन्प्रत्ययस्य कुः' इतिकुत्वस्यासिद्धत्वात् 'व्रश्च' इत्यादिना शकारस्य षत्वे तस्य जश्त्वेन डकारे तस्य कुत्वेन गकारे 'वावसाने' इति वैकल्पिके चर्त्वे तादृक्-तादृग् इति रूपद्वयं सिद्धम् ।

तादृग्भ्याम् । तदुपपदाद् दृश्धातोः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति क्विनि तल्लोपे आ सर्वनाम्नः' इति दकारस्यात्वे सवर्णदीर्घे कृदन्तत्वात्प्रातिपदिकत्वेन भ्यामि विभक्तौ कुत्वस्यासिद्धत्वात् 'व्रश्च' इत्यादिना षत्वे तस्य जश्त्वेन डकारे तस्य च 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन गकारे तादृग्भ्यामिति सिद्धम् ।

तादृक् तादृग्, तादृशौ, तादृशः । तादृशम्, तादृशौ, तादृशः । तादृशा, तादृग्भ्याम्, तादृग्भिः । तादृशे, तादृग्भ्याम्, तादृग्भ्यः । तादृशः, तादृग्भ्याम्, तादृग्भ्यः । तादृशः, तादृशोः, तादृशाम् । तादृशि, तादृशोः, तादृक्षु । हे तादृक्-हे तादृग्, हे तादृशौ, हे तादृशः ।

विट् । विश्शब्दात्सावनुबन्धलोपे 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे जश्त्वे चर्त्वे विट्—विड् इति रूपद्वयं सिद्धम् ।

नशेर्वा । अत्र 'क्विन्प्रत्ययस्य कुः' इत्यतः कुरिति 'झलां जशोऽन्ते' इत्यतः अन्ते इति चानुवर्तते । पदस्येत्यधिक्रियते ।

---

३४९. त्यदादि उपपद परे रहते अज्ञानार्थक दृश धातु से कन् प्रत्यय और पक्ष में क्विन् प्रत्यय होते हैं ।

३५०. सर्वनाम को अकार अन्तादेश होता है दृग दृश और वतु परे रहते ।

३५१. नश् धातु को पदान्त में क वर्ग अन्तादेश होता है विकल्प से ।

नक्, नग् । नट्, नड् । नशौ । नशः । नग्भ्याम्, नड्भ्याम् ।

**३५२. स्पृशोऽनुदके क्विन् ३।२।५८ ॥** अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्, घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । दधृक्, दधृग् । दधृषौ । दधृग्भ्याम् । रत्नमुट्, रत्नमुड् । रत्नमुषौ । रत्नमुड्भ्याम् । षट्, षड् । षड्भिः । षड्भ्यः । षण्णाम् ।

---

**नक्** । नश्शब्दात्सावनुबन्धलोपे हल्ङ्याबादिलोपे कुत्वस्यासिद्धत्वात्पूर्वं 'व्रश्च' इति षत्वे तस्य जश्त्वेन डकारे तस्य 'नशेर्वा' इति वैकल्पिककुत्वेन गकारे तस्य 'वाऽवसाने' इति पाक्षिके चर्त्वे नक्-नग् इति, कुत्वाभावपक्षे पाक्षिकचर्त्वेन नट् नड् इति च सिद्धम् ।

नक्-नग्-नट्-नड्, नशौ, नशः । नशम्, नशौ, नशः । नशा, नग्भ्याम्-नड्भ्याम्, नग्भिः-नड्भिः । नशे, नग्भ्याम्-नड्ग्भ्याम्, नग्भ्यः-नड्भ्यः । नशः, नग्भ्याम्-नडभ्याम्, नग्भ्यः-नड्भ्यः । नशः, नशोः, नशाम् । नशि, नशोः:, नक्षु-नट्त्सु । हे नक्-हे नग्-हे नट्-हे नड्-हे नशौ, हे नशः ।

**स्पृशोऽनुदके क्विन्** । अत्र 'सुपिस्थः' इत्यतः सुपीत्यनुवर्तते ।

**घृतस्पृक्** । घृतोपपदात्स्पृश्धातोः 'स्पृशोऽनुदके क्विन्' इति क्विन् प्रत्यये तस्य लोपे कृदन्तत्वात्प्रातिपदिकत्वेन सौ हल्ङ्यादिलोपे 'व्रश्च' इति षत्वे तस्य जश्त्वेन डकारे तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वने गकारे पाक्षिके चर्त्वे घृतस्पृक् घृतस्पृग् इतिरूपद्वयं साधु ।

**दधृक्** । धृष्धातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्यये निपातनाद् द्वित्वे च कृते अभ्यासकार्ये क्विनो लोपे निष्पन्नदधृष्शब्दात्सौ हल्ङ्यादिलोपे जश्त्वेन कुत्वस्यासिद्धत्वात्पूर्वं षस्य डकारे तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन गकारे तस्य पाक्षिकचर्त्वे दधृक्-दधृग् इति रूपद्वयं सिद्धम् ।

**रत्नमुट्** । रत्नमुष्शब्दात्सौ हल्ङ्यादिलोपे जश्त्वे पाक्षिके चर्त्वे रत्नमुट्-रत्नमुड् इति साधुः ।

**षट्** । षष्शब्दाज्जसि विभक्तौ 'ष्णान्ता षट्' इतिषट्संज्ञायां 'षड्भ्यो लुक्' इति जसो लुकि जश्त्वे पाक्षिके चर्त्वे च षट्-षड् इति रूपद्वयं सिद्धम् ।

**षण्णाम्** । षष्शब्दादामि 'ष्णान्ता षट्' इतिषट्संज्ञायां 'षट्चतुर्भ्यश्च' इति नुडागमेऽनुबन्धलोपे 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'झलां जशोऽन्ते' इति षस्य जश्त्वेन डकारे 'अनामिति पर्युदासात् ष्टुत्वनिषेधाभावेन ष्टुत्वे 'यरोऽनुना-

---

३५२. उदक शब्द को छोड़कर सुबन्त उपपद स्पृश धातु से क्विन् प्रत्यय होता है ।

षट्सु । रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषो रुरिति रुत्वम् ।

**३५३. र्वोरुपधाया दीर्घ इकः ८।२.७६ ॥** रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते । पिपठीः पिपठिषौ । पिपठीर्भ्याम् ।

**३५४. नुम्विसर्जनीयशर्व्यवायेऽपि ८।३।५८ ॥** एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु ।

---

सिकोऽनुनासिको वा' इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' इति नित्येऽनुनासिकणकारे षण्णाम् इति सिद्धम् ।

**षट्त्सु** । षष्शब्दात्सुप्यनुबन्धलोपे 'स्वादिषु' इति पदत्वात् षस्य जश्त्वेन डकारे 'डः सि धुट्' इति पाक्षिके धुडागमेऽनुबन्धलोपे 'खरि च' इति चर्त्वेन धकारस्य तकारे डकारस्य टकारे च कृते चर्त्वस्यासिद्धत्वात् टतयोः ठकारथकाराभावे षट्त्सु षट्सु इति रूपद्वयं सिद्धम् ।

**र्वोरुपधाया** । अत्र 'सिपि धातो रुर्वा' इत्ये धातोरित्यनुवर्तते । र्वोरिति तद्विशेषणम्, तदन्तविधिः । पदस्येत्यधिक्रियते । 'झलां जशोऽन्ते' इत्यतः अन्ते इत्यनुवर्तते ।

**पिपठीः** । पिपठिष्शब्दात्सौ हल्ङ्याब्भ्यो दिलोपे रुत्वम्प्रति षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वे 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे विसर्गे पिपठीः इति सिद्धम् ।

**पिपठीर्भ्याम्** । पिपठिष्शब्दाद्भ्यामि विभक्तौ रुत्वम्प्रति षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वे 'स्वादिषु' इति पदत्वात् 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे पिपठीर्भ्यामिति साधु ।

**नुम्विसर्जनीयशर्व्यवायेऽपि** । अत्र 'इण्कोः' इत्यधिक्रियते । अपदान्तस्य मूर्धन्यः, इत्यतो मूर्धन्य इत्यनुवर्तते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते ।

**पिपठीष्षु** । पिपठिष्शब्दात्सुप्यनुबन्धलोपे रुत्वम्प्रति षत्वस्यासिद्धत्त्वात् 'ससजुषो रुः' इति रुत्वे 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे विसर्गे 'वा शरि' इति पाक्षिके विसर्गस्य विसर्गे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सस्य षत्वे पिपठीःषु

---

३५३. रेफान्त और वान्त धातु की उपधा के इक् को दीर्घ होता है पदान्त में ।

३५४. नुम विसर्जनीय और शर के व्यवधान में भी इण् कवर्ग से परे सकार को मूर्धन्यादेश होता है ।

चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु । विद्वान् । विद्वांसौ । हे विद्वन् ।

३५५. वसोः सम्प्रसारणम् ६।४।१३१ ॥ वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दः । विद्वद्भ्याम् ।

इति, विसर्गस्य विसर्गाभावपक्षे 'विसर्जनीयस्य सः' इति विसर्गस्य सकारे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति विभक्तिसकारस्य षत्वे पूर्वसकारस्य ष्टुत्वे पिपठीष्षु इति च सिद्धम् ।

पिपठीः, पिपठिषौ, पिपठिषः । पिपठिषम्, पिपठिषौ, पिपठिषः । पिपठिषा, पिपठीर्भ्याम्, पिपठीर्भिः । पिपठिषे पिपठीर्भ्याम्, पिपठीर्भ्यः । पिपठिषः, पिपठीर्भ्याम्, पिपठीर्भ्यः । पिपठिषः, पिपठिषोः, पिपठिषाम् । पिपठिषि, पिपठिषोः, पिपठीःषु-पिपठीष्षु । हे पिपठीः, हे पिपठिषौ, हे पिपठिषः ।

चिकीः । चिकीर्ष्शब्दात्सौ 'हल्ङ्याब्भ्यः' इत्यादिना सुलोपे षत्वस्यासिद्धत्वात् 'रात्सस्य' इति सलोपे रेफस्य विसर्गे चिकीः इति सिद्धम् ।

चिकीर्भ्याम् । चिकीर्ष्शब्दाद् भ्यामि षत्वस्यासिद्धत्वात् 'स्वादिष्वसर्वनामस्थाने' पदत्वेन सकारस्य 'रात्सस्य' इति लोपे चिकीर्भ्याम् इति सिद्धम् ।

चिकीर्षु । चिकीर्ष्शब्दात्सुप्यनुबन्धलोपे 'स्वादिषु' इति पदत्वेन षत्वस्यासिद्धत्वात्सकारस्य 'रात्सस्य' इतिलोपे 'रोःसुपि' इतिं नियमाद् रेफस्य विसर्गाभावे 'आदेशप्रत्यययोः' इति षत्वे 'शरोऽचि' इति द्वित्वनिषेधे चिकीर्षु इति सिद्धम् ।

विद्वान् । विद्वस्शब्दात्सावनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्यनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे हल्ङ्यादिलोपे सस्य संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावे विद्वान् इति सिद्धम् ।

विद्वांसौ । विद्वस्शब्दाद् औविभक्तौ 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्यनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे विद्वांसौ इति सिद्धम् ।

वसोः प्रसारणम् । भस्येत्यधिक्रियते । प्रत्ययग्रहपरिभाषया वसोरिति तदन्तग्रहणाम् ।

विदुषः । विद्वस्शब्दाच्छस्यनुबन्धलोपे भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'आदेशप्रत्यययोः' इति सस्य षत्वे रुत्वे विसर्गे च कृते विदुषः इति सिद्धम् ।

विद्वद्भ्याम् । विद्वस्शब्दाद् भ्यामि 'वसुस्रंसुध्वंस्वनडुहां दः' इति सकारस्य दकारे विद्वद्भ्यामिति सिद्धम् ।

३५५. वस्वन्त भ संज्ञक अङ्ग को सम्प्रसारण होता है ।

**३५६. पुंसोऽसुङ् ७।१।८९ ॥** सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुम्भ्याम् । पुंसु । ऋदुशनेत्यनङ् । उशना । उशनसौ । ( अस्य संबुद्धौ वानङ्, नलोपश्च वा वाच्यः ) ।

---

विद्वान्, विद्वांसौ, विद्वांसः । विद्वांसम्, विद्वांसौ, विदुषः । विदुषा, विद्वद्भ्याम्, विद्वद्भिः । विदुषे, विद्वद्भ्याम्, विद्वद्भ्यः । विदुषः, विद्वद्भ्याम्, विद्वद्भ्यः । विदुषः, विदुषोः, विदुषाम् । विदुषि, विदुषोः, विद्वत्सु । हे विद्वन्, हे विद्वांसौ, हे विद्वांसः ।

**पुंसोऽसुङ्** । अत्र 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । विवक्षित इत्यध्याह्रियते ।

**पुमान्** । पुंस्शब्दात्सौ विवक्षिते 'पुंसोऽसुङ्' इति ङित्वात्सकारस्य असुङादेशेऽनुबन्धलोपे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेनानुस्वारनिवृत्तौ ततः सौ 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम्यनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे सुलोपे संयोगान्तलोपे तस्यासिद्धात्वान्नलोपाभावे पुमान् इति सिद्धम् ।

**हे पुमन्** । पुंस्शब्दात्सम्बोधने सौ विवक्षिते 'पुंसोऽसुङ्' इति सस्यासुङादेशेऽनुबन्धलोपे अनुस्वारनिवृत्तौ सौ 'उगिदचाम्' इति नुम्यनुबन्धलोपे सान्तमहत इति सूत्रेऽसम्बुद्धावित्युक्तेर्दीर्घाभावे सुलोपे संयोगान्तलोपे हे पुमन् इति सिद्धम् ।

**पुमांसौ** । पुंस्शब्दाद् औविभक्तौ विवक्षितायां 'पुंसोऽसुङ्' इति सकारस्यासुङादेशेऽनुबन्धलोपेऽनुस्वारनिवृत्तौ औविभक्तौ 'उगिदचाम्' इति नुम्यनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे पुमांसौ इति सिद्धम् ।

**पुम्भ्याम्** । पुंस्शब्दाद् भ्यामि विभक्तौ सस्य संयोगान्तलोपे निमित्तापायादनुस्वारनिवृत्तौ भकारमादाय पुनरनुस्वारे परसवर्णे पुम्भ्याम् ।

पुमान्, पुमांसौ, पुमांसः । पुमांसम्, पुमांसौ, पुंसः, । पुंसा, पुम्भ्याम्, पुम्भिः । पुंसे, पुम्भ्याम्, पुम्भ्यः । पुंसः, पुम्भ्याम् पुम्भ्यः । पुंसः, पुंसोः, पुंसाम् । पुंसि, पुंसोः, पुंसु । हे पुमन्, हे पुमांसौ, हे पुमांसः ।

**उशना** । उशनस् शब्दात्सावनुबन्धलोपे 'ऋदुशनस्पुरुदंसोऽनेहसां च' इति ङित्वात्सकारस्यानङादेशेऽनुबन्धलोपे 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे 'हल्ङ्याब्भ्य' इत्यादिना सुलोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे उशना इति सिद्धम् ।

---

३५६. सर्वनामस्थान की विवक्षा में पुंस शब्द के स्थान में असुङ् आदेश होता है ।

हे उशन, हे उशनन्, हे उशनः। हे उशनसौ। उशनोभ्याम्। उशनस्सु। अनेहा। अनेहसौ। हे अनेहः। वेधाः। वेधसौ। हे वेधः। वेधोभ्याम्।

**३५७. अदस औ सुलोपश्च ७।२।१०७॥** अदस औत्स्यात्सौ परे सुलोपश्च। तदोरिति सः। असौ। त्यदाद्यत्वम्। पररूपत्वम्। वृद्धिः।

**३५८. अदसोऽसेर्दादु दो मः ८।२।८०॥** अदसोऽसान्तस्य दात्परस्य

---

**हे उशन**। उशनस्शब्दात्सम्बोधने सावनुबन्धलोपे 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः' इति पाक्षिकेऽनङादेशेऽनुबन्धलोपे पाक्षिके नलोपे च कृते सुलोपे हे उशन इति, नलोपाभावपक्षे हे उशनन् इति, अनङभावपक्षे सुलोपे रुत्वे विसर्गे हे उशनः इति च सिद्धम्।

**उशनोभ्याम्**। उशनस्शब्दाद्भ्यामि पदत्वात्सस्य रुत्वे 'हशि च' इत्युत्वे गुणे उशनोभ्यामिति सिद्धम्।

उशना, उशनसौ, उशनसः। उशनसम्, उशनसौ, उशनसः। उशनसा, उशनोभ्याम्, उशनोभिः। उशनसे, उशनोभ्याम्, उशनोभ्यः। उशनसः, उशनोभ्याम् उशनोभ्यः। उशनसः, उशनसोः, उशनसाम्। उशनसि, उशनसोः, उशनःसु-उशनस्सु। हे उशन-हे उशनन्-हे उशनः, हे उशनसौ, हे उशनसः।

**अनेहाः**। अनेहस्शब्दात्सावनुबन्धलोपे 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङादेशेऽनुबन्धलोपे उपधादीर्घे सुलोपे नलोपे अनेहा इति सिद्धम्।

**हे अनेहः**। अनेहस्शब्दात्सम्बोधने सावनुबन्धलोपे 'अत्वसन्तस्य चाधातोः' इत्यत्र असम्बुद्धावित्यस्यानुवृत्त्या दीर्घाभावे सुलोपे रुत्वे विसर्गे हे अनेहः इति सिद्धम्। शेषरूपाणि उशनश्शब्दवज्ज्ञेयानि।

**वेधाः**। वेधस्शब्दात्सावनुबन्धलोपे 'अत्वसन्तस्य चाधातोः' इति दीर्घे सुलोपे रुत्वे विसर्गे वेधाः इति सिद्धम्। शेषमनेहस् शब्दवदेव।

**अदस औ**। अत्र 'तदोः सः सावनन्त्ययोः' इत्यतः सावित्यनवर्तते।

**असौ**। अदस्शब्दात्सावनुबन्धलोपे 'अदस औ सुलोपश्च' इति सस्यौत्वे सुलोपे च कृते वृद्धौ 'तदोः सः सावनन्त्ययोः' इति दकारस्य सकारे असौ इति सिद्धम्।

**अदसोऽसेः**। अत्र अदसः असेः दात् उ दः मः इति च्छेदः। उश्च ऊश्च अनयोः समाहारः उ इति विग्रहः।

---

३५७. अदस् शब्द को औत् होता है सु परे रहते और सु का लोप भी होता है।

३५८. असान्त अदस शब्द से दकार परे रहते उत और ऊत आदेश होते हैं तथा दकार को मकार होता है।

उदूतौस्तो दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः, दीर्घस्य ऊः । अमू । जसः शी । गुणः ।

**३५९. एत ईद्बहुवचने ८।२।८१ ॥** अदसो दात्परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ । अमी । पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ।

**३६०. न मुने ८।२।३ ॥** नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना ।

---

**अमू ।** अदस्शब्दाद् औविभक्तौ 'त्यदादीनामः' इति अकारेऽन्तादेशे 'अतो गुणे' इति पररूपे 'पूर्वत्रासिद्धम्' इति मुत्वस्यासिद्धत्वात्पूर्वं वृद्धौ ततः 'अदसोऽसेर्दादुदो मः' इति आन्तरतम्यादौकारस्य ऊकारे दकारस्य मकारे च कृते अमू इति सिद्धम् ।

**एत ईद् बहुवचने ।** अत्र 'अदसोऽसेर्दादु दो मः' इत्यस्मात् अदसोदादिति दो म इति चानुवर्तते ।

**अमी ।** अदस्शब्दाज्जसि त्यदाद्यत्वे पररूपत्वे 'जसः शी' इति जसः श्यादेशेऽनुबन्धलोपे गुणे 'एतई बहुवचने' इति एकारस्य ईकारे दस्य मकारे च कृते अमी इति सिद्धम् ।

**अमुम् ।** अदस्शब्दादम्विभक्तौ त्यदाद्यत्वे पररूपत्वे 'अमि पूर्वः' इति पूर्वरूपे ततः 'अदसोऽसेर्दादु दो मः' इति मुत्वे अमुमिति सिद्धम् ।

**अमून् ।** अदस्शब्दाच्छस्यनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे पूर्वसवर्णदीर्घे सस्य नत्वे 'अदसोऽसेर्दादु दो मः' इति आन्तरतम्याद्दीर्घाकारस्य ऊकारे दस्य मत्वे अमून् इति सिद्धम् ।

**न मुने ।** अत्र 'पूर्वत्रासिद्धम्' इत्यतः असिद्धमित्यनुवर्तते । ने इति विषयसप्तम्यन्तमत आह—नाभावे कर्तव्य इति । ने इत्यत्र सतसप्तमी चेत्यत आह—कृते चेति ।

**अमुना ।** अदस्शब्दात् टाविभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'अदसोऽसेर्दादु दो मः' इति मुत्वे अमु आ इति स्थिते 'पूर्वत्रासिद्धम्' इति मुत्वस्यासिद्धत्वे प्राप्ते 'न मु ने' इति तन्निषेधे 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति

---

३५९. बहुवचन में अदस शब्द के दकार से परे एकार को ईत आदेश तथा दकार को मकार आदेश होता है ।

३६०. ना भाव करना हो या कर लिया गया हो फिर भी मुत्व असिद्ध नहीं होता ।

॥ इति हलन्तपुलिङ्गाः ॥

अमूभ्याम् ३। अमीभिः। अमुष्मै। अमीभ्यः २। अमुष्मात्। अमुष्य। अमुयोः २। अमीषाम्। अमुष्मिन्। अमीषु।

इति हलन्तपुँल्लिङ्गाः॥

---

नाभावे अमुना इति सिद्धम्। नाभावे कृते मुत्वस्यासिद्धत्वात् 'सुपि च' इति दीर्घस्तु न भवति। नाभावे कृतेऽपि 'न मु ने' इति सूत्रेण मुत्वस्यासिद्धत्वप्रतिषेधादिति शम्।

**अमूभ्याम्**। अदस्शब्दाद् भ्यामि विभक्तौ त्यदाद्यत्वे पररूपत्वे 'सुपि च' इति दीर्घे 'अदसोऽसेर्दादु दो मः' इति अकारस्य ऊकारे दस्य मत्वे च अमूभ्यामिति सिद्धम्।

**अमीभिः**। अदस्शब्दाद् भिसि त्यदाद्यत्वे पररूपत्वे 'अतो भिस ऐस्' इति भिस ऐसादेशे प्राप्ते 'नेदमदसोरकोः' इति तन्निषेधे 'बहुवचने झल्येत्' इत्येत्वे 'एत ईद् बहुवचने' इति एकारस्य ईकारे दस्य मत्वे च कृते रुत्वे विसर्गे अमीभिरिति सिद्धम्।

**अमुष्मै**। अदस्शब्दान्ङेविभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'सर्वनाम्नः स्मै' इति स्मै आदेशे 'अदसोऽसेर्दादु दो मः' इति मुत्वे षत्वे अमुष्मै इति सिद्धम्।

**अमुष्मात्**। अदस्शब्दान्ङसि विभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'ङसि-ङ्योः स्मात्स्मिनौ' इति स्मादादेशे मुत्वे षत्वे च अमुष्मादिति साधु।

**अमुष्य**। अदस्शब्दान्ङस्विभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे 'टाङसिङ-सामिनात्स्याः' इति ङसः स्यादेशे मुत्वे षत्वे अमुष्येति सिद्धम्।

**अमुयोः**। अदस्शब्दादोसि त्यदाद्यत्वे पररूपत्वे 'ओसि च' इत्येत्वे अयादेशे 'अदसोऽसेर्दादु दो मः' इति मुत्वे रुत्वे विसर्गे अमुयोः सिद्धम्।

**अमीषाम्**। अदस्शब्दादामि त्यदाद्यत्वे पररूपत्वे 'आमि सर्वनाम्नः सुट्' इति सुडागमऽनुबन्धलोपे 'बहुवचने झल्येत्' इति एत्वे षत्वे 'एत ईद्बहुवचने' इति एकारस्य ईकारे दस्य मत्वे अमीषाम् इति सिद्धम्।

असौ, अमू, अमी। अमुम्, अमू, अमून्। अमुना, अमूभ्याम्, अमीभिः। अमुष्मै, अमूभ्याम्, अमीभ्यः। अमुष्मात्-अमुष्माद्, अमूभ्याम्, अमीभ्यः। अमुष्य, अमुयोः, अमीषाम्। अमुष्मिन्, अमुयोः, अमीषु।

॥ इति हलन्तपुंल्लिङ्गाः॥

## अथ हलन्तस्त्रीलिङ्गाः

**३६१. नहो धः ८।२।३४ ।।** नहो हस्य धः स्यात् झलि पदान्ते च ।

**३६२. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६ ।।** एषु क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानत्, उपानद् । उपानहौ । उपानत्सु । क्विन्नन्तत्वात् कुत्वेन घः । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् । द्यौः । दिवौ । दिवः । द्युभ्याम् । गीः । गिरौ । गिरः । एवं पूः । चतस्रः ।

---

**नहो धः** । अत्र 'हो ढः' इत्यतो ह इति 'झलो झलि' इत्यतो झलीति 'स्कोः संयोगाद्योरन्ते च' अन्ते इति चानुवर्तते । पदस्येत्यधिक्रियते ।

**नहिवृति** अत्र 'ढ्रलोपे पूर्वस्य दीर्घोणः' इत्यतः पूर्वस्य दीर्घोऽणः इत्यनुवर्तते ।

**उपानत्** ।उपपूर्वाद् नहधातोः सम्पदादित्वात् क्विपि 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति पूर्वपदस्य दीर्घे क्विपो लोपे निष्पन्नाद् उपानहेशब्दात्प्रातिपदिकत्वेनासौ तल्लोपे 'हो ढः' इति प्राप्तं ढत्वम्प्रबाध्य 'नहो धः' इति हस्य धत्वे जश्त्वे 'वावसाने' इति पाक्षिके चर्त्वे उपानत् उपानद् इति सिद्धम् ।

**उपानद्भ्याम्** । उपानह् शब्दाद् भ्यामि 'नहो धः' इति हस्य धकारे जश्त्वे उपानद्भ्यामिति सिद्धम् । रूपं त्वस्य सुगमत्वादुपेक्ष्यते ।

**उष्णिक्** । उत्पूर्वात् स्निह् धातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्यये निपातनाद् उदो दकारस्य लोपे क्विनो लोपे षत्वे णत्वे कृदन्तत्वात्प्रातिपदिकत्वेन सौ तल्लोपे 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन हकारस्य घकारे जश्त्वे चर्त्वे उष्णिक्-उष्णिग् इति रूपद्वयं सिद्धम् ।

**द्यौः** । दिव्शब्दात्सौ 'दिव औत्' इति वकारस्य औकारे यणि हलन्तात्परत्वाभावेन सुलोपाभावे रुत्वे विसर्गे द्यौः इति सिद्धम् ।

**द्युभ्याम्** । दिव्शब्दाद् भ्यामि विभक्तौ 'दिव उत्' इति उकारेऽन्तादेशे यणि द्युभ्यामिति सिद्धम् । सुदिव्शब्दवद्देवास्य रूपम् ।

**गीः** । गिर्शब्दात्सौ तस्य लोपे 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे गीः इति साधुः ।

**चतस्रः** । चतुर् शब्दाज्जसि विभक्तावनुबन्धलोपे 'त्रिचतुरोः स्त्रियां तिसृचतसृ'

---

३६१. नह के हकार के स्थान में धकार होता है झल अथवा पदान्त परे रहते ।

३६२. नहि वृति वृषि व्यधि रुचि सहि तनि इन क्विबन्त शब्दों के पूर्व पद को दीर्घ अन्तादेश होता है ।

चतसृणाम् । का । के । काः । सर्वावत् ।

**३६३. यः सौ ७।२।११०॥** इदमो दस्य यः स्यात् सौ । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् । अस्याम् । आसु । त्यदाद्यत्वम् । टाप् । स्या । त्ये ।

---

इति चतस्रादेशे 'जसि च' इति प्राप्तं गुणम्प्रबाध्य 'अचि र ऋतः' इति ऋकारस्य रेफादेशे रुत्वे विसर्गे चतस्रः इति सिद्धम् ।

**चतसृणाम्** । चतुर्शब्दादामि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति चतस्रादेशे नुडागमेऽनुबन्धलोपे 'न तिसृचतसृ' इति दीर्घनिषेधे णत्वे चतसृणामिति सिद्धम् ।

**का** । किम् शब्दात्सौ 'किमः कः' इति कादेशे टाप्यनुबन्धलोपे दीर्घे सुलोपे का इति सिद्धम् । सर्वाशब्दवदस्य रूपम् ।

**यः सौ** । अत्र 'इदमो मः' इत्यत इदम इति 'दश्च' इत्यतो द इति चानुवर्तते ।

**इयम्** । इदम् शब्दात्सौ त्यदाद्यत्वम्प्रबाध्य 'इदमो मः' इति मकारस्य मकारे कृते 'यः सौ' इति दस्य यकारे सुलोपे इयम् इति सिद्धम् ।

**आभ्याम्** । इदम् शब्दाद् भ्यामि त्यदाद्यत्वे पररूपत्वे टाप्यनुबन्धलोपे दीर्घे 'हलि लोपः' इति इदो लोपे आभ्यामिति सिद्धम् ।

**अस्यै** । इदम् शब्दाङ्ङेविभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे टाप्प्रत्ययेऽनुबन्धलोपे दीर्घे 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आपो ह्रस्वे वृद्धौ 'हलि लोपः' इति इदो लोपे अस्यै इति सिद्धम् ।

**अनयोः** । इदम् शब्दादोसि विभक्तावनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'आङि चापः' इत्येत्वे आयादेशे 'अनाप्यकः' इति इदः अनादेशे रुत्वविसर्गे अनयोरिति सिद्धम् ।

**आसाम्** । इदम्शब्दादामि अत्वे पररूपे टापि दीर्घे 'आमि सर्वनाम्नः सुट्' इति सुटचनुबन्धलोपे 'हलि लोपः' इति इदो लोपे आसाम् इति ।

**अस्याम्** । इदमो ङौ अत्वे पररूपे टापि दीर्घे 'ङेराम्नद्याम्नीभ्यः' ङेरामि 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि ह्रस्वे इदो लोपे दीर्घे अस्यामिति ।

**आसु** । इदमः सुपि अत्वे पररूपे टापि इदो लोपे आसु इति ।

इयम्, इमे, इमाः । इमाम्, इमे, इमाः । अनया, आभ्याम्, आभिः । अस्यै, आभ्याम्, आभ्यः । अस्याः, आभ्याम्, आभ्यः । अस्याः, अनयोः, आसाम् । अस्याम्, अनयोः, आसु ।

---

**३६३.** इदम शब्द के दकार के स्थान में यकार होता हैं सु परे रहते ।

त्याः । एवं तद् । एतद् । वाक्, वाग् । वाचौ । वाग्भ्याम् । वाक्षु । अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः । अपः ।

**३६४. अपो भि: ७।४।४८ ॥** अपस्तकारो भादौ प्रत्यये । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु । दिक्, दिग् । दिशौ । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग् । दृशौ । दृग्भ्याम् । त्विट्, त्विड् । त्विषौ । त्विड्भ्याम् । ससजुषो रुरिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् । आशीः । आशिषौ । आशीर्भ्याम् ।

---

**स्या** । त्यद्शब्दात्सौ त्यदाद्यत्वे पररूपत्वे टाप्यनुबन्धलोपे दीर्घे 'तदोः सः सावनन्त्ययोः' इति तकारस्य सकारे सुलोपे स्या इति सिद्धम् । सर्वावद्रूपं ज्ञेयम् ।

**आपः** । अप्शब्दाज्जस्यनुबन्धलोपे 'अप्तृन्' इति दीर्घे रुत्वे विसर्गे आपः इति ।

**अपो भिः** । 'अच उपसर्गात्तः' इत्यतः त इत्यनुवर्तते । अस्य अङ्गाधिकारस्थत्वेन प्रत्ययस्याक्षेपः । तदादिविधिः ।

**अद्भिः** । अप् शब्दाद्भिसि, 'अपो भिः' इति पस्य तकारे जश्त्वे रुत्वे विसर्गे अद्भिरिति ।

**दिक्** । दिश् धातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्यये तस्य लोपे प्रातिपदिकत्वात् सौ 'हल्ङ्याब्भ्य' इत्यादिना तस्य लोपे 'व्रश्च' इत्यादिना षत्वे तस्य जश्त्वेन डकारे तस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन गकारे चर्त्वे दिक्-दिग् इति रूपद्वयं निष्पन्नम् ।

**दृक्** । दृश्शब्दात्सौ तस्य लोपे 'व्रश्च' इत्यादिना शस्य षत्वे तस्य जश्त्वेन डकारे 'त्यदादिषु दृशोऽनालोचने कञ्च' इति दृशेः क्विनो विधानाद् अत्र क्विनोऽभावेऽपि डकारस्य 'क्विन्प्रत्ययस्य कुः' इत्यनेन क्विन्प्रत्ययो यस्माद् दृष्टस्तस्य कवर्गोऽन्तादेशः स्यादित्यर्थकेन कुत्वेन गकारे चर्त्वे दृक्—दृग् इति रूपद्वयं सिद्धम् ।

**सजूः** । सजुष्शब्दात्सौ तस्य लोपे 'ससजुषो रुः' इति रुत्वे 'र्वोरुपधाया दीर्घ इकः' इत्युपधादीर्घे विसर्गे सजूः इति ।

**आशीः** । आशिष् शब्दात्सौ तस्य लोपे षत्वस्यासिद्धत्वात् । 'ससजुषो रुः' इति रुत्वे 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे विसर्गे आशीः इति ।

---

३६४. अप् शब्द के पकार के स्थान में तकार होता है भकारादि प्रत्यय परे रहते ।

असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्यै । अमूभ्यः २ । अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमूषु ।

॥ इति हलन्तस्त्रीलिङ्गाः ॥

---

**असौ** । अदस्शब्दात् प्रातिपदिकत्वेन सौ अनुबन्धलोपे 'अदस औ सुलोपश्च' इति सस्य औकारादेशे सुलोपे च कृते वृद्धौ अदौ इति स्थिते 'तदोः सः सावनन्त्ययोः' इति दस्य सत्वे असौ इति सिद्धम् ।

**अमू** । अदस्शब्दाद् औविभक्तौ त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'औङ आपः' इत्याङःश्यादेशेऽनुबन्धलोपे गुणे 'अदसोऽसेर्दादु दो मः' इति मुत्वे अमू इति सिद्धम् ।

**अमूः** । अदस्शब्दाज्जस्यनुबन्धलोपे त्यदाद्यत्वे पररूपत्वे टापि दीर्घे मुत्वे रुत्वे विसर्गे अमूः इति ।

**अमुया** । अदस्शब्दात् टाविभक्तौ त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'आङि चापः' इति एत्वे अयादेशे मुत्वे अमुया इति ।

**अमूभ्याम्** । अदसो भ्यामि त्यदाद्यत्वे पररूपत्वे टापि दीर्घे मुत्वे अमूभ्यामिति ।

**अमुष्यै** । अदस्शब्दान्ङेविभक्तौ त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आपो ह्रस्वे वृद्धौ मुत्वे षत्वे तत्सिद्धम् ।

**अमूषाम्** । अदस्शब्दाद् आमि त्यदाद्यत्वे पररूपत्वे टापि दीर्घे 'आमि सर्वनाम्नः सुट्' इति सुट्यनुबन्धलोपे 'अदसोऽसेर्दादु दो मः' इति मुत्वे षत्वे अमूषाम् इति ।

असौ, अमू, अमूः । अमुम्, अमू, अमूः । अमुया, अमूभ्याम्, अमूभिः । अमुष्यै, अमूभ्याम्, अमूभ्यः । अमुष्याः, अमूभ्याम्, अमूभ्यः । अमुष्याः, अमुयोः, अमूषाम् । अमुष्याम्, अमुयोः, अमूषु ।

॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

## अथ हलन्तनपुंसकलिङ्गाः

स्वमोर्लुक्। दत्वम्। स्वनडुत्, स्वनडुद्। स्वनडुही। चतुरनडुहो-रित्याम्। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्। वाः। वारी। वारि। वार्भ्याम्। चत्वारि। किम्। के। कानि। इदम्। इमे। इमानि। (अन्वा-

---

**स्वनडुत्**। स्वनडुह् शब्दात्सौ 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'वसुस्रंसुध्वंस्वनडुहां दः' इति हकारस्य दकारे 'वावसाने' इति पाक्षिके चर्त्वे स्वनडुत्-स्वनडुद् इति रूपद्वयं सिद्धम्।

**स्वनड्वांहि**। स्वनडुहशब्दाज्जसि 'जश्शसोः शिः' इति जसः श्यादेशेऽनुबन्ध-लोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'चतुरनडुहोरामुदात्तः' इति आमागमेऽनुबन्धलोपे यणि 'नपुंसकस्य झलचः' इति नुम्यनुबन्धलोपे 'नश्चापदान्तस्य झलि' इति नस्यानुस्वारे स्वनड्वांहि इति सिद्धम्।

**वाः**। वार्शब्दात्सौ हल्ङ्यादिलोपात्परत्वात् 'स्वमोर्नपुंसकात्' इति सोर्लुकि विसर्गे वाः इति सिद्धम्।

**वारी**। वार्शब्दादौ विभक्तौ 'नपुंसकाच्च' इति श्यादेशेऽनुबन्धलोपे वारी इति साधुः। अस्य रूपं सुगमत्वादुपेक्ष्यते।

**चत्वारि**। चतुर्शब्दाज्जसि 'जश्शसोः शिः' इति जसः श्यादेशे 'शि सर्वनाम-स्थानम्' इति सर्वनामस्थानसंज्ञायां 'चतुरनडुहोरामुदात्तः' इति आम्यनुबन्धलोपे यणि झलन्तत्वाभावान्नुमोऽभावे चत्वारि इति सिद्धम्।

**किम्**। किम्शब्दात्सौ परत्वात् 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'न लुमताङ्गस्य' इति निषेधात्प्रत्ययलक्षणाभावेन 'किमः कः' इति कादेशाभावे किम् इति सिद्धम्।

**के**। किम्शब्दाद् औविभक्तौ 'किमः कः' इति कादेशे 'नपुंसकाच्च' इति औङः श्यादेशेऽनुबन्धलोपे गुणे के इति सिद्धम्।

**कानि**। किम्शब्दाज्जसि जसः श्यादेशेऽनुबन्धलोपे सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुम्यनुबन्धलोपे उपधादीर्घे कानि इति।

**इदम्**। इदम्शब्दात्सौ परत्वात् 'स्वमोर्नपुंसकात्' इति सोर्लुकि 'न लुमता-ङ्गस्य' इति निषेधात्प्रत्ययलक्षणाभावेन 'इदमो मः' इत्यादेरप्रवृत्तौ इदमिति।

**इमे**। इदम् शब्दाद् औ विभक्तौ श्यादेशे त्यदाद्यत्वे पररूपत्वे 'दश्च' इति मत्वे 'आद् गुणः' इति गुणे इमे इति।

**इमानि**। इदमो जसि श्यादेशे अत्वे पररूपे 'दश्च' इति मत्वे 'नपुंसकस्य

---

(वा०) इदम् और एतत् शब्द के स्थान में नपुंसकलिङ्ग में अन्वादेश में एनत् आदेश होता है।

देशे नपुंसके एनद्वक्तव्यः )। एनत् । एने । एनानि । एनेन । एनयोः । अहः । विभाषा ङिश्योः । अह्नी, अहनी । अहानि ।

**३६५. अहन् ८।२।६८ ॥** अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् । दण्डि । (सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः) दण्डिनी । दण्डीनि । दण्डिना ।

---

झलचः' इति नुमि 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे इमानि इति । शेषं पुंवदेव ।

**एनत्** । इदमः अमि तस्य लुकि 'अन्वादेशे नपुंसके एनद्वक्तव्यः' इति इदम एनदादेशे चर्त्वे एनत्-एनद् इति रूपद्वयं निष्पन्नम् ।

**अहः** । अहन्शब्दात्सौ तस्य 'स्वमोर्नपुंसकात्' इति लुकि 'रोऽसुपि' इति नस्य रेफादेशे रेफस्य विसर्गे अहः इति सिद्धम् ।

**अह्नी** । अहन्शब्दाद् औविभक्तौ श्यादेशे 'यचि भम्' इति भसंज्ञायां 'विभाषा ङिश्योः' इति पाक्षिके अल्लोपे अह्नी इति अल्लोपाभावपक्षे अहनी इति च सिद्धम् ।

**अहानि** । अहन्शब्दाज्जसि तस्य श्यादेशे सर्वनामस्थानसंज्ञायां 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घे अहानि इति ।

**अहोभ्याम्** । अहन्शब्दाद् भ्यामि विभक्तौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'अहन्' इति नस्य रुत्वे 'हशि च' इत्युत्वे गुणे अहोभ्यामिति ।

अहः, अह्नी, अहनी, अहानि । अहः, अह्नी-अहनी, अहानि । अह्ना, अहोभ्याम्, अहोभिः । अह्ने अहोभ्याम्, अहोभ्यः । अह्नः, अहोभ्याम्, अहोभ्यः । अह्नः, अहोभ्याम्, अहोभ्यः । अह्नः, अह्नोः, अह्नाम् । अह्नि-अहनि, अह्नोः, अहःसु । हे अहः, हे अह्नी-हे अहनी, हे अहानि ।

**दण्डि** । दण्डिन् शब्दात्सौ तस्य लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे दण्डि इति ।

**दण्डीनि** । दण्डिन्शब्दाज्जसि जसः श्यादेशऽनुबन्धलोपे 'इन्हन्पूषार्यम्णां शौ' इति दीर्घे दण्डीनि इति ।

**हे दण्डि** । दण्डिन्शब्दात्सम्बोधने सौ 'सम्बुद्धौ नपुंसकानां नलोपे वा वाच्यः' इति पाक्षिके नलोपे हे दण्डि इति । तदभावपक्षे हे दण्डिन् इति च सिद्धयति । शेषं वारिवत् । आमि दण्डिनाम् इति विशेषः ।

---

३६५. अहन् के नकार के स्थान में रु होता है पदान्त में । (वा० नपुंसकलिङ्ग शब्दों के नकार का लोपविकल्प से होता है, सम्बुद्धि परे रहते ।

दण्डिभ्याम् । सुपथि । टेर्लोपः । सुपथी । सुपन्थानि । ऊर्क्, ऊर्ग् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः । तत् । ते । तानि । यत् । ये । यानि । एतत् । एते । एतानि । गवाक्, गवाग् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् । शकृत् । शकृती । शकृन्ति । ददत् ।

---

**सुपथि** । सुपथिन्शब्दात्सौ तस्य लुकि नलोपे सुपथि इति ।

**सुपथी** । सुपथिन्शब्दाद् औ विभक्तौ औङः श्यादेशेऽनुबन्धलोपे सर्वनामस्थानत्वाभावेन 'यचि भम्' इति भसंज्ञायां 'भस्य टेर्लोपः' इति टेर्लोपे सुपथी इति ।

**सुपन्थानि** । सुपथिन्शब्दाज्जसि जसः श्यादेशे सर्वनामस्थानसंज्ञायां 'इतोऽत्सर्वनामस्थाने' इति इकारस्य अकारे 'थो न्थः' इति थस्य न्थादेशे सर्वनामस्थाने चासम्बुद्धौ' इत्युपधादीर्घे सुपन्थानि इति सिद्धम् । शेषं पुंवत् ।

**ऊर्क्** । ऊर्ज्शब्दात्सौ तस्य 'स्वमोर्नपुंसकात्' इति लुकि 'चोः कुः' इति जस्य कुत्वेन गकारे तस्य पाक्षिके 'वावसाने' इति चर्त्वे ऊर्क्-ऊर्ग् इति रूपद्वयम् ।

**ऊर्न्जि** । ऊर्ज्शब्दाज्जसि जसः श्यादेशेऽनुबन्धलोपे सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः, इति मित्त्वादन्त्यादचः ऊकारात्परे नुम्यनुबन्धलोपे नरजानां संयोगेन श्चुत्वाभावे ऊर्न्जि इति सिद्धम् ।

**गवाक्** । गोपूर्वादञ्चधातोः 'ऋत्विग्' इत्यादिना क्विन्प्रत्यये तस्य लोपे प्रातिपदिकत्वात्सौ तस्य लुकि 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे 'अवङ् स्फोटायनस्य' इति पाक्षिकेऽवङादेशे दीर्घे कुत्वे जश्त्वे पाक्षिके चर्त्वे गवाक्-गवाक् इति रूपद्वयम् । अवङभावे 'सर्वत्र विभाषा गोः' इति पाक्षिके प्रकृतिभावे गो अक्-गो अग् इति रूपद्वयम् । प्रकृतिभावाभावपक्षे 'एङः पदान्तादति' इति पूर्वरूपे गोऽक्-गोऽग् इति रूपद्वयं च सिध्यति । पूजायां तु 'नाञ्चेः पूजायाम्' इति निषेधात् नलोपाभावेन चस्य संयोगान्तलोपे नस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकारे अवङि गवाङ् । प्रकृतिभावे गोअङ् । पूर्वरूपे-गोऽङ् इति रूपत्रयं सिद्धयति ।

**गोची** । गोपूर्वादञ्चुधातो 'ऋत्विग्' इत्यादिना क्विनि तस्य लोपे औविभक्तौ श्यादेशे गतौ' अनिदिताम्' इति नलोपे 'अचः' इति अकारलोपे गोची इति । पूजायां तु 'नाञ्चेः पूजायाम्' इति निषेधात् नलोपाभावे अवङ्प्रकृतिभावयोः पाक्षिकत्वेन गवांची गोंची इति रूपत्रयं सिद्धयति ।

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥
स्वमसुप्सु नव, षड्भादौ, षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥

**३६६. वा नपुंसकस्य ७।१।७९ ॥** अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने । ददन्ति, ददति । तुदत् ।

**३६७. आच्छीनद्योर्नुम् ७।१।८० ॥** अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती, तुदती । तुदन्ति ।

---

तथाहि-गवाक्-गवाग्-गोअक्-गोअग्-गोऽक्, गोऽग्-गवाङ्-गोअङ-गोऽङ्, गोची-गवांची-गोअंची-गोंची, गवाञ्चि-गोअंचि-गोंचि । पुनरपि गवाक्-गवाग् गोअक्-गोऽग् गवाङ-गोअङ्-गोङ्' गोची-गवांची-गोअंची-गोंची, गवांचि-गोअञ्चि-गोंचि । गोचा गवञ्चा-गोअञ्चा-गोंचा, गवाग्भ्याम्-गोअग्भ्यम्-गोग्भ्याम्-गवाङ्भ्याम्-गोङ्भ्याम्-गवाग्भिः-गोअग्भिः-गोग्भिः-गवाङ्भि-गोअङ्भिः गोङ्भिः । गोचे-गवांचे-गोअञ्चे-गोञ्चे। गवाग्भ्याम्-गोअग्भ्याम्-गोग्भ्याम्-गवाङ्भ्या-गोअङ्भ्याम्-गोङ्भ्याम्, गवाग्भ्यः गोअग्भ्यः गोग्भ्यः-गवाङ्भ्यःगोअङ्भ्यः-गोङ्भ्यः । गोचः गवाञ्चः-गोअञ्चः गोञ्चः, गवाग्भ्याम्-गोअग्भ्याम्- गोग्भ्याम्-गवाङ्भ्याम्- गोअङ्भ्याम्-गोङ्भ्याम्, गवाग्भ्यः-गोअग्भ्यः-गोग्भ्यः गवाङ्भ्यः-गोअङ्भ्यः गोङ्भ्यः । गोचः गवाञ्चः-गोअञ्च-गोञ्चः, गोचोः-गवाञ्चोः-गोअञ्चोः-गोञ्चोः, गोचाम्-गवाञ्चाम् गोञ्चाम् । गोचि गवाञ्चि-गोअञ्चि-गोञ्चि, गोचोः गवाञ्चोः-गोअञ्चोः-गोञ्चोः, गवाक्षु-गोअक्षु-गोक्षु-गवाङ्क्षु-गोअङ्क्षु-गोङ्क्षु-गवाङ्षु-गोअङ्षु-गोङ्षु ।

**वा नपुंसकस्य** । अत्र 'नाभ्यस्ताच्छतुः' इतिसूत्रं न-रहितम् 'इदितो नुम् धातोः' इत्यतो नुमिति 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यतः सर्वनामस्थाने इति चानुवर्तते ।

**ददन्ति** । ददत्शब्दाज्जसि जसः श्यादेशेऽनुबन्धलोपे 'वा नपुंसकस्य' इति पाक्षिके नुम्यनुस्वारे परसवर्णे ददन्ति इति तदभावे ददति इति च सिद्धम् ।

**आच्छीनद्योर्नुम्** । 'नाभ्यस्ताच्छतुः' इत्यतः शतुरिति 'वा नपुंसकस्य' इत्यतो वेति चानुवर्तते । अङ्गस्येत्यधिकृतं पंचम्या विपरिणम्यते । तच्च आदित्यस्य विशेषणम् । तदन्तविधिः । परस्य इत्यध्याह्रियते । शतुरित्यनन्तरमवयवस्येत्यध्याह्रियते । तेन च अङ्गस्येति षष्ठ्यन्तं विशेष्यते । तदन्तविधिः । अङ्गस्येति तु आवर्तते ।

**तुदन्ती** । तुदत्शब्दाद् औविभक्तौ औङः श्यादेशे 'आच्छीनद्योर्नुम्' इति पाक्षिके नुम्यनुबन्धलोपे तुदन्ती-तुदती इति रूपद्वयं सिद्धम् ।

---

३६६. अभ्यस्त से परे जो शतृ प्रत्ययान्त नपुंसकलिङ्ग शब्द उसको नुम् होता है सर्वनाम स्थान परे रहते ।

३६७. अवर्णान्त अङ्ग से परे जो शतृप्रत्यय का अवयव तदन्त जो शब्द उसको नुम् होता है शी और नदी परे रहते ।

**३६८. शप्श्यनोर्नित्यम् ७।१।८१ ॥** शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः। पचन्ती। पचन्ति। दीव्यत्। दीव्यन्ती। दीव्यन्ति। धनुः। धनुषी। सान्तेति दीर्घः। नुम्विसर्जनीयेति षः। धनूंषि। धनुषा। धनुर्भ्याम्। एवं चक्षुर्हविरादयः। पयः। पयसी। पयांसि। पयसा। पयोभ्याम्। सुपुम्। सुपुंसी। सुपुमांसि। अदः। विभक्तिकार्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्।

॥ इति हलन्तनपुंसकलिङ्गाः ॥

---

शप्श्यनोर्नित्यम्। आच्छीनद्योर्नुम्, इति 'नाभ्यस्ताच्छतुः' इत्यतः शतुरिति चानुवर्तते।

पचन्ती। पचत्शब्दाद् औविभक्तौ श्यादेशे 'शप्श्यनोर्नित्यम्' इति नुम्यनुस्वारे परसवर्णे पचन्ती इति सिद्धम्।

धनुः। धनुष्शब्दात्सौ तस्य लुकि षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वे विसर्गे धनुः इति सिद्धम्।

धनूंषि। धनुष्शब्दाज्जसि जसः श्यादेशे 'नपुंसकस्य झलचः' इति नुम्यनुबन्धलोपे षत्वस्यासिद्धत्वात्सान्तत्वेन 'सान्तमहतः संयोगस्य' इति दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति षत्वे धनूंषि इति सिद्धम्।

पयांसि। पयस्शब्दाज्जसि तस्य श्यादेशे नुमि सान्तेति दीर्घेऽनुस्वारे तत्सिद्धम्।

अमू। अदस औविभक्तौ श्यादेशे त्यदाद्यत्वे पररूपत्वे गुणे मूत्वे तत्साधु।

अमूनि। अदसो जसि श्यादेशे अत्वे पररूपे नुमि दीर्घे मूत्वे अमूनि इति सिद्ध्यति।

॥ इति हलन्तनपुंसकलिङ्गप्रकरणम् ॥

---

३६८. शप् और श्यन् के अकार से परे जो शतृ प्रत्यय तदन्त जो शब्द उसको नित्य नुम् होता है शी नदी परे रहते।

॥ इति षड्लिङ्गाः समाप्ताः ॥

## अथाव्ययप्रकरणम्

**३६९. स्वरादिनिपातमव्ययम् १।१।३७ ॥** स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः। स्वर्। अन्तर्। प्रातर्। पुनर्। सनुतर्। उच्चैस्। नीचैस्। शनैस्। ऋधक्। ऋते। युगपत्। आरात्। पृथक्। ह्यस्। श्वस्। दिवा। रात्रौ। सायम्। चिरम्। मनाक्। ईषत्। जोषम्। तूष्णीम्। बहिस्। अवस्। अधस्। समया। निकषा। स्वयम्। वृथा। नक्तम्। न। नञ्। हेतौ। इद्धा। अद्धा। सामि। वत्—ब्राह्मणवत्, क्षत्रियवत्। सना। सनत्। सनात्। उपधा। तिरस्। अन्तरा। अन्तरेण। ज्योक्। कम्। शम्। सहसा। विना। नाना। स्वस्ति। स्वधा। अलम्। वषट्। श्रौषट्। वौषट्। अन्यत्। अस्ति।

---

**स्वर्** स्वर्गे परलोके च। **अन्तर्** मध्ये। **प्रातर्** प्रत्यूषे। **पुनर्** अप्रथमे, विशेषे च **सनुतर्** अन्तर्धाने। **उच्चैस्** महति। **नीचैस्** अल्पे। **शनैस्** क्रियामान्द्ये। **ऋधक्** सत्ये। **ऋते** वर्जने। **युगपत्** एककाले। **आरात्** दूरसमीपयोः। **पृथक्** भिन्ने। **ह्यस्** अतीतेऽह्नि। **श्वस्** अनागतेऽह्नि। **दिवा** दिवसे। **रात्रौ** निशि। **सायम्** निशामुखे। **चिरम्** बहुकाले। **मनाक्-ईषत्** इदं द्वयमल्पे। **जोषम्** सुखे मौने च। **तूष्णीम्** मौने। **बहिस्-अवस्** इदं द्वयं बाह्ये। **समया** समीपे मध्ये च। **निकषा** अन्तिके। **स्वयम्** आत्मनेत्यर्थे। **वृथा** व्यर्थे। **नक्तम्** रात्रौ। **नञ्** निषेधे। 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः। इत्यन्ये। **हेतौ** निमित्ते। **इद्धा** प्राकाश्ये। **अद्धा** स्फुटावधारणयोः। तत्त्वातिसययोरिति केचित्। **सामि** अर्ध जुगुप्सिते च। **वत्** सादृश्ये। उदाहरणमाह—ब्राह्मणवदिति। **सना-सनत्, सनात्** एतत्त्रयं नित्ये। **उपधा** भेदे। **तिरस्** अन्तर्धौ, तिर्यगर्थ्ये, पराभवे च। **अन्तरा** मध्ये विनार्थे च। **अन्तरेण** वर्जने। **ज्योक्** कालभूयस्त्वे, प्रश्ने, शीघ्रार्थे, सम्प्रति इत्यर्थे च। **कम्** वारिमूर्धनिन्दासुखेषु। **शम्** सुखे। **सहसा** आकस्मिकाविमर्शयोः। **विना** वर्जने। **नाना** अनेकविनार्थयोः। **स्वस्ति** मङ्गले। **स्वधा** पितृहविर्दाने। **अलम्** भूषणपर्याप्तिशक्तिवारणनिषेधेषु। **वषट्, वौषट्, श्रौषट्** एतत्त्रयं देवहविर्दाने। **अन्यत्** अन्यार्थे। **अस्ति** सत्तायाम्।

---

३६९. स्वरादिगणपठित शब्द और निपात संज्ञक शब्दों की अव्यय संज्ञा होती है।

उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् । साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ।

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् ।

---

**उपांशु** अप्रकाशोच्चारणे रहस्ये च । **क्षमा** क्षान्तौ । **विहायसा** आकाशे । **दोषा** रात्रौ । **मृषा, मिथ्या** इदं द्वयं वितथे । **मुधा** व्यर्थे । **पुरा** अविरते, चिरातीते, भविष्यदासन्ने च । **मिथो, मिथस** इदं द्वयं रहसि सहार्थे च । **प्रायस्** बाहुल्ये । **मुहुस्** पुनरर्थे । **प्रवाहुकम्** समकाले ऊर्ध्वार्थे च । **प्रवाहिका** इति पाठान्तरम् । **आर्यहलम्** बलात्कारे । **अभीक्ष्णम्** पौनःपुन्ये । **साकम् सार्धम्** इदं द्वयं सहार्थे । **नमस्** नतौ । **हिरुक्** वर्जने । **धिक्** निन्दाभर्त्सनयोः । **अम्** शैघ्र्ये अल्पे च । **आम्** अङ्गीकारे । **प्रताम्** ग्लानौ । **प्रशान्** समानार्थे प्रशान् इति नान्तपाठोऽसाम्प्रदायिकः इति शेखरकृतः । कैयटोपाध्यायास्तु—नत्वस्यासिद्धत्वादव्ययत्वं स्यादिति वदन्तो नान्तपाठमभिप्रयन्ति । **प्रतान्** विस्तारे । **मा, माङ्** एतौ निषेधे ।

**आकृतिगणोयमिति ।** तेन अन्येऽप्येवं जातीयकाः स्वरादिगणे ज्ञेयाः । तथाहि **कामम्** स्वाच्छन्द्ये । **प्रकामम्** अतिशये । **भूयस्** पुनरर्थे । **साम्प्रतम्** न्याय्ये । **परम्** किन्त्वर्थे । **साक्षात्** प्रत्यक्षे । **साचि** तिर्यगर्थे । **सत्यम्** अर्धाङ्गीकारे । **मङ्क्षु, आशु** इदं द्वयं शैघ्र्ये । **संवत्** वर्षे । **अवश्यम्** निश्चये । **सपदि** शैघ्रे । **बलवत्** अतिशये **प्रादुस् आविस्** इदं द्वयं प्रकाशे । **अनिशम्, नित्यम्, सदा, अजस्रम्, सन्तत्** एतत्पञ्चकं सातत्ये । **उषा** रात्रौ । **रोदसी** द्यावापृथिव्यर्थे । **ओम्** अङ्गीकारे ब्रह्मणि च । **भूः** पृथिव्याम् । **भुवर्** अन्तरिक्षे । **झगित झटिति द्राक् तरसा** इति शैघ्र्ये । **सुष्ठु** प्रशंसायाम् । **दुष्ठु** निकृष्टे । **सु** पूजायाम् । **अह** आश्चर्ये । **कु** कुत्सिते ईषदर्थे च । **अञ्जसा** तत्त्वे शीघ्रार्थे च । **मिथु** द्वावित्यर्थे । **अस्तम्** विनाशे । **स्थाने** युक्तार्थे । **ताजक्** शैघ्र्ये । **चिराय, चिररात्राय, चिरस्य, चिरम् चिरेण, चिरात्** इति षट्कं चिरार्थकम् । **वरम्** ईषदुत्कर्षे । **आनुषक्** आनुपूर्व्ये । **अनुषक्** अनुमाने **अम्नस्** शीघ्रसाम्प्रतिकयोः । **सुदि** शुक्लपक्षे । **वदि** कृष्णपक्षे । इत्यादि । इति स्वरादयः ।

**च** समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । **वा** विकल्पादिषु । **ह** प्रसिद्धे । **अह** अद्भुते खेदे च । **एव** अवधारणे अनवक्लृप्तौ च । **एवम्** उक्तपरामर्शे । **नूनम्** निश्चये तर्के च । **शश्वत्** पौनः पुन्ये सहार्थे नित्ये च । **युगपत्** एककाले ।

भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । यत्र । कच्चित् । नह । हन्त । माकिः । माकिम् । नकिः । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । न्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह । [ उपसर्गविभक्तिस्वरप्रतिरूपकाश्च ] । अवदत्तम् । अहंयुः । अतिक्षीरा । अ । आ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः । चादिरप्याकृतिगणः ।

---

**भूयस्** पुनरर्थे आधिक्ये च । **कूपत्** प्रश्ने प्रशंसायां च । **कुवित्** भूर्यर्थे प्रशंसायां च । **नेत्** शङ्कायाम् प्रतिषेधविचारसमुच्चयेषु च । **चेत्** यद्यर्थे । **चण्** अयं चेदर्थे णित् । **कच्चित्** प्रश्ने । **यत्र** अनवक्लृप्त्यमर्षगर्हाश्चर्येषु । **नह** प्रत्यारम्भे । **हन्त** हर्षे विषादे अनुकम्पायां वाक्यारम्भे च । **माकिः माकिम्, नकिः** इदं त्रयं वर्जने **माङ्नञौ** स्वरादिषूक्तौ । **यावत्-तावत्** इदं द्वयं साकल्यावधिमानावधारणेषु । **त्वै** विशेषवितर्कयोः । **द्वै** वितर्के । **न्वै** इति पाठान्तरम् । **रै** दाने अनादरे च । **वषट् वौषट् स्वाहा** इदं त्रयं देवहविर्दाने । **स्वधा** पितृदाने । **तुम्** तुङ्कारे । **तथाहि** निदर्शने **खलु** निषेधवाक्यालङ्कारनिश्चयेषु । **किल** इवार्थे, वार्त्तासाम्, **अथो** अथेतिमङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । **सुष्ठु** स्वरभेदार्थः पुनः पाठः । **स्म** प्रतीते पादपूरणे च । **आदह** उपक्रमहिंसाकुत्सनेषु । **उपसर्गविभक्तिस्वरप्रतिरूपकश्च** । उपसर्गप्रति प्रतिरूपकाः विभक्त्यन्तप्रतिरूपकाः स्वरप्रतिरूपकाश्च चादिगणे पठितव्या इत्यर्थः । तत्रोपसर्गप्रतिरूपकमुदाहरति-**अवदत्तम्** इति । अत्र अवत्युपसर्गप्रतिरूपकम् न तूपसर्गः । ततश्च 'अच उपसर्गात्तः' इति तो न भवति । तादेशे तु अवत्तमिति स्यात् । विभक्तिप्रतिरूपकमुदाहरति **अहंयुरिति** । अहमिति सुबन्तप्रतिरूपकम् अहङ्कारे । **अस्तिक्षीरा** अत्र अस्तीति तिङन्तप्रतिरूपकमव्ययं ननु तिङन्तम् । स्वरप्रतिरूपकमुदाहरति - **अ** इत्यादिना । **अ** सम्बोधने । **आ** वाक्यस्मरणयोः । **इ** सम्बोधन जुगुप्साविस्मयेषु । **ई उ ऊ ए ऐ ओ औ** इति सप्तकं सम्बोधने । **पशु** सम्यगर्थे । **शुकम्** शैघ्रये । **यथकथाच** संघातीयमनादरे । **पाट्, प्याट्, अङ्ग, है, हे, भोः, अये,** एते सप्तसम्बोधने । **द्य** हिंसाप्रातिलोम्यपादपूरणेषु । **विषु** नानार्थे । **एकपदे** अकस्मादित्यर्थे । **युत्** कुत्सायाम् । **आतः** इतोऽर्थे ।

**चादिरप्याकृतिगणः** । तेन **यत् तत्** द्वयं हेतौ । **आहोस्वित्** विकल्पे । **सम्** सर्वतोभावे । **कम्** पादपूरणे । **सुकम्** अतिशये । **अनु** वितर्के । **शश्वत्** अन्तःकरणे आ-

---

(ग० सू०) उपसर्ग विभक्ति और स्वरप्रतिरूपकों को अव्यय संज्ञा होती है ।

३७०. तद्धितश्चासर्वविभक्तिः । १।१।३८ ॥ यस्मात् सर्वा विभक्तिर्नोत्पद्यते, स तद्धितान्तोऽव्ययं स्यात् । परिगणनं कर्तव्यम् । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसिवती । नानाञौ । एतदन्तमव्ययम् ।

३७१. कृन्मेजन्तः १।१।३९ ॥ कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारं स्मारम् । जीवसे । पिबध्यै ।

---

भिमुख्ये च । च पादपूरणे इवार्थे च । चटु चाटु द्वयं प्रियवाक्ये । हुम् भर्त्सने । इव सादृश्ये । अद्यत्वे इदानीमित्यर्थः । इत्यादयोऽपि संगृह्यन्ते ।

अम् आम् । 'अमु च च्छन्दसि' इत्यम्, 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम् च गृह्यते । कृत्वोर्थाः । 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' द्वित्रिचतुर्भ्यस्सुच्' विभाषा बहोर्धाऽविप्रकृष्टकाले' इति त्रय इत्यर्थः । तसिवती । 'तेनैकदिक्' तसिश्च' इति तसिः, 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिश्च गृह्यते । नानाञौ । 'विनञ्भ्यां नानाञौ न सह' इति विहितौ नानाञौ ।

कृन्मेजन्तः । अत्र 'स्वरादिनिपातमव्ययम्' इत्यतोऽव्ययमित्यनुवर्तते । कृत् मेजन्त इति च्छेदः । म् च एच्च मेचौ तौ अन्ते यस्येति बहुव्रीहिः । तदाह-कृत् यो मान्त इति । केवलस्य कृतः प्रयोगानर्हत्वात्संज्ञाविधावपि तदन्तविधिः ।

स्मारंस्मारम् । स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुल्यनुबन्धलोपे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे 'नित्यवीप्सयोः' इति द्वित्वे कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ मान्तकृदन्तत्वात् 'कृन्मेजन्तः' इत्यव्ययत्वे 'अव्ययादाप्सुपः' इति सुपो लुकि तत्सिद्धम् ।

जीवसे । जीव प्राणधारणे इत्यस्मात् 'तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः' इति असेप्रत्यये 'कृन्मेजन्तः' इत्यव्ययत्वम् ।

पिबध्यै । पाधातोः 'तुमर्थे से' इत्यादिना शध्यैप्रत्ययेऽनुबन्धलोपे शित्त्वात् 'तिङ्शित्सार्वधातुकम्', इति सार्वधातुकसंज्ञायां 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति पा इत्यस्य पिबादेशे कृदन्तत्वात्प्रातिपदिकत्वेन सुपि 'कृन्मेजन्तः' इत्यव्ययत्वात्सुपो लुकि पिबध्यै इति सिद्धम् ।

---

३७०. जिससे समस्तविभक्तियां उत्पन्न नहीं होतीं वह, तद्धितप्रत्ययान्त शब्द अव्यय संज्ञक होता है ।

३७१. कृत् जो मान्त एजन्त तदन्त शब्द को अव्यय संज्ञा होती है ।

**३७२. क्त्वातोसुन्कसुनः १।१।४०॥** एतदन्तमव्ययम् । कृत्वा । उदेतोः । विसृपः ।

**३७३ अव्ययीभावश्च १।१।४१ ॥** अधिहरि ॥

**३७४. अव्ययादाप्सुपः २।४।८१ ॥** अव्ययाद्विहितस्याापः सुपश्च लुक् । तत्र शालायाम् ।

---

**क्त्वातोसुन्कसुनः ।** 'स्वरादिनिपातमव्ययम्' इत्यतोऽव्ययमित्यनुवर्त्तते । तदन्तविधिः ।

**कृत्वा ।** कृधातोः 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्यये कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वात्सुपो लुकि तत्सिद्धिः ।

**उदेतोः ।** उत्पूर्वाद् इण्धातोः 'भावलक्षणे स्थेणकृञ् वदिचरिहुतमिजनिभ्यस्तोसुन्' इति तोसुन्प्रत्ययेऽनुबन्धलोपे गुणे कृदन्तत्त्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वात्सुपो लुकि रुत्वे विसर्गे च तत्सिद्धिः ।

**विसृपः ।** विपूर्वात्सृप्धातोः 'सृपितृदोः कसुन्' इति कसुन्प्रत्ययेऽनुबन्धलोपे कृदन्तत्वात्प्रातिपदिकत्वेन सुपि 'अव्ययादाप्सुपः' इत्यव्ययत्वात्सुपो लुकि रुत्वे विसर्गे तत्सिद्धिः ।

**अव्ययीभावश्च ।** 'स्वरादिनिपातमव्ययम्' इत्यतोऽव्ययमित्यनुवर्तते ।

**अधिहरि ।** हरि ङि अधि इति विग्रहे 'अव्ययं विभक्ति' इत्यादिना समासे समासत्वात्प्रातिपदिकसंज्ञायां 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति अधेः उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति अधेः पूर्वप्रयोगे 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि 'एकदेशविकृतमनन्यवत्' इति परिभाषया सुबुत्पत्तौ 'अव्ययीभावश्च इत्यव्ययत्वात्सुपो लुकि तत्सिद्धिः ।

**अव्ययादाप्सुपः ।** अत्र 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यतो लुगित्यनुवर्तते । विहितविशेषणञ्चाश्रीयते । तेन अत्युच्चैसौ इत्यत्र विभक्तेर्लुक् न ।

॥ इत्यव्ययप्रकरणम् ॥

---

३७२. क्त्वा तोसुन् कसुन् प्रत्ययान्त को अव्यय संज्ञा होती है ।

३७३. अव्ययीभाव समास को भी अव्यय संज्ञा होती है ।

३७४. अव्यय से विहित आप और सुप् का लोप होता है ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥

वगाहः, अवगाहः । पिधानम्, अपिधानम् ।

इत्यव्ययानि ॥

---

अव्यय का लक्षण-तीनों लिङ्गों समस्त विभक्तियों और समस्त वचनों में जिसमें विकार नहीं होता उसे अव्यय कहते हैं । १ । भागुरी आचार्य अव और अपि उपसर्ग के अकार का लोप मानते हैं और हलन्त शब्दों के स्त्रीबोधक आप प्रत्यय का विधान करते कार हैं । जैसे बाचा निशा और दिशा । २ । आप् प्रत्यय के अभाव पक्ष में वाक्, निश्, दिश् होता है ।

॥ इत्यब्ययप्रकरणम् ॥

## अथ तिङन्तप्रकरणम् अथ भ्वादिप्रकरणम्

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ्। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः।

**३७५. लः कर्मणि च भावे चाकर्मकेभ्यः ३।४।६९॥** लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च।

**३७६. वर्तमाने लट् ३।२।१२३॥** वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्त्वम्। भू सत्तायाम्॥ १॥ कर्तृविवक्षायां भू ल् इति स्थिते—

---

अथेति। धातोः द्वये प्रत्ययाः तिङः कृतश्च। तत्रादौ तिङन्तं व्याख्यायते। तत्र दश लकाराः अनुबन्धनिवृत्तौ लकारा, उच्यन्ते। तस्मात् तिङः प्रत्ययाः भवन्ति।

**लः कर्मणि**। अत्र चकारात् 'कर्त्तरि कृत्' इत्यतः कर्त्तरीत्यनुकृष्यते। धातोरित्यधिक्रियते। कर्मणीति सकर्मकधातुविषयकम्। अकर्मकेभ्यः कर्मणीत्यस्य बाधितत्वात्। अत्र लः कमणि चेति एकं वाक्यम्। भावे चाकर्मकेभ्य इति द्वितीयं वाक्यम्। द्वितीयवाक्ये चकारात् कर्त्तरीत्येवानुकृष्यते न तु कर्मणीति, असम्भवात्। 'लज्जासत्तास्थितिजागरणवृद्धिक्षयजीवितमरण। शयनक्रीडारुचिदीप्त्यर्थं धातुगणन्तमकर्मकमाहुः' इति कारिकोक्ता अकर्मका धातवः। तद्भिन्नाः सकर्मकाः।

वस्तुतस्तु धातूनां फलव्यापारयोः शक्तिः। द्वयोरेकत्र विद्यमानत्वेऽकर्मकः। द्वयोराश्रयभेदे सकर्मकः। यथा भूधातोः आत्मधारणानुकूलव्यापारोऽर्थः। आत्मधारणरूपफलस्य तदनुकूलव्णापारस्य च एकत्रैव विद्यमानत्वेन भूधातुरकर्मकः। विक्लित्त्यनुकूलव्यापारः पच्धात्वर्थः। तत्र विक्लित्तिरूपफलस्य तण्डुलादौ तदनुकूलव्यापारस्य च कर्त्तरिविद्यमानत्वेन पच्धातुः सकर्मकः। अविवक्षितकर्मकोऽप्यकर्मकपदेन गृह्यते।

**वर्तमाने लट्**। धातोरित्यधिक्रियते। वर्तमान इति तत्रान्वेति। वर्त्तमानकालिकक्रियावाचकत्वेनविवक्षितधातोर्लडिति लभ्यते। फलितमाह वर्तमानक्रियावृत्ते-

---

३७५. सकर्मकधातु से कर्म और कर्त्ता में लकार हो तथा अकर्मकधातु से भाव और कर्त्ता में लकार हों।

३७६. वर्तमान कालिक जो क्रिया तद्वाचकत्वेन विवक्षित जो धातु उससे लट् लकार हो।

**३७७. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथान्ध्वमिड्वहिमहिङ्** ३।४।७८॥ एतेऽष्टादश लादेशाः स्युः।

**३७८. लः परस्मैपदम्** १।४।९९॥ लादेशाः परस्मैपदसंज्ञाः स्युः।

**३७९. तङानावात्मनेपदम्** १।४।१००॥ तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्वसंज्ञाऽपवादः।

**३८०. अनुदात्तङित आत्मनेपदम्** १।३।१२॥ अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात्।

**३८१. स्वरितञितः कर्त्रभिप्राये क्रियाफले** १।३।७२॥ स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले।

---

रिति। क्रियायाः प्रारम्भतः समाप्तिपर्यन्तं प्रारम्भसमाप्ती अभिव्याप्य वृत्तिमान् कालो वर्तमानकालः।

**तिप्तस्**। अत्र 'लस्य' इत्यधिक्रियते। तत्र च स्थानषष्ठी। तेन आदेश इति लभ्यते।

**तङ् प्रत्याहार इति**। त आताम् इत्यत्र त इत्यारभ्य महिङोङकारेण तङिति, तदर्थः।

**अनुदात्तङित**। अनुदात्तश्च ङ्‌च अनुदात्तङौ। तौ इतौ यस्य सः अनुदात्तङित्। तस्मात् अनुदात्तङितः। द्वन्द्वान्ते श्रूयमाणस्य इच्छन्दस्य प्रत्येकमन्वयः। 'भूवादयो धातवः' इत्यतो धातवः इत्यनुवर्तते तस्य पञ्चम्यन्तत्वेन विपरिणामः।

**स्वरितञितः**। स्वरितश्च ञ् च स्वरितञौ तावितौ यस्य तस्मादिति विग्रहः। इतः प्रत्येकं सम्बन्धः।

---

३७७. तिप् तस् झि सिप् थस् थ मिप् वस् मस् त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् ये अठारह आदेश ल के स्थान में हों।

३७८. ल के स्थान में आदेश परस्मैपद संज्ञक हों।

३७९. तङ् प्रत्याहार ( त से लेकर महिङ् पर्यन्त प्रत्यय ) और शानच् कानच् प्रत्यय आत्मनेपदसंज्ञक हों।

३८०. अनुदात्तेत् और ङित् धातु से आत्मनेपदसंज्ञक प्रत्यय हों।

३८१. स्वरितेत् और ञकारेत्संज्ञक धातु से आत्मनेपदसंज्ञक प्रत्यय हों, कर्तृगामी क्रियाफल रहते।

**३८२. शेषात्कर्तरि परस्मैपदम् १।३।७८ ॥** आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ।

**३८३. तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः १।४।१०१ ॥** तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ।

**३८४. तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२ ॥** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ।

**३८५. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५ ॥** तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः ।

---

**शेषात्** । उक्तादन्यः शेषस्तस्मात् । अनुदात्तङित इति स्वरितञित इति चोक्तादात्मनेपदविषयादन्य इत्यर्थः ।

**तिङस्त्रीणि** । तिङः षट् त्रिकाः संज्ञाश्च तिस्र इति यथासङ्ख्यामम्भवादाह तिङ उभयोरिति । 'लः परस्मैपदम्' इत्यतः परस्मैपदमिति तङानावात्मनेपदम् इत्यत आत्मनेपदमिति चानुवृत्तं षष्ठ्यन्ततया विपरिणम्यते । ततश्च परस्मैपदात्मनेपदयोरुभयोरपि प्रत्येकं त्रयस्त्रिकाः प्रथमादिसंज्ञाः क्रमेणेति फलितम् ।

**युष्मद्युपपदे** । उपोच्चारितम्पदम् उपपदं तस्मिन्निति विग्रहः । युष्मच्छब्दे समीपोच्चारिते सतीत्यर्थः । समानम् = एकम् अधिकरणं = वाच्यं यस्मिन्निति विग्रहः । सामानाधिकरण्यं युष्मदः तिङः स्थानिभूतलकारेण विवक्षितम् । 'लः परस्मैपदम्' इत्यतो ल इत्यनुवृत्तेः । तत्फलितमाह तिङ्वाच्येत्यादि । **स्थानं = प्रसङ्गः सोऽस्यास्तीति स्थानी** तस्मिन्निति विग्रहः । **स्थानिपदस्य अप्रयुज्यमाने वैयाकरणनिकाये**

---

३८२. आत्मनेपद के निमित्त से रहित अर्थात् अनुदात्तेत् ङित् स्वरितेत् ञित् धातु से भिन्नधातु से कर्ता अर्थ में परस्मैपदसंज्ञक प्रत्यय हों ।

३८३. तिङ्सम्बन्धी आत्मनेपद और परस्मैपद के तीन तीन त्रिक क्रम से प्रथम मध्यम उत्तम संज्ञक हों । अर्थात् आत्मनेपद और परस्मैपद दोनों में प्रथम तीन प्रत्यय को प्रथमसंज्ञा हो । तदनन्तर तीन प्रत्यय को मध्यम संज्ञा हो । तदनन्तर तीन प्रत्यय को उत्तम संज्ञा हो ।

३८४. प्रथम मध्यम उत्तम संज्ञक जो तिङ्सम्बन्धी तीन तीन प्रत्यय उनमें प्रत्येक को क्रम से एकवचन द्विवचन बहुवचन संज्ञा हो । अर्थात् प्रथमसंज्ञक तीन प्रत्ययों में पहले को एकवचन संज्ञा, दूसरे को द्विवचन संज्ञा, तीसरे को बहुवचन संज्ञा होती है । इसी प्रकार से मध्यम उत्तम में भी समझना चाहिए ।

३८५. ल का वाच्य जो कारक = कर्ता या कर्म तद्वाचक युष्मद्शब्द के प्रयुज्यमान या अप्रयुज्यमान रहते मध्यम पुरुष हो ।

३८६. अस्मद्युत्तमः १।४।१०७ ॥ तथाभूतेऽस्मद्युत्तमः ।

३८७. शेषे प्रथमः १।४।१०८ ॥ मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते ।

३८८. तिङ् शित्सार्वधातुकम् ।४।११३ ॥ तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ।

३८९. कर्तरि शप् ३।१।६८ ॥ कर्त्रर्थे सार्वधातुके परे धातोः शप् ।

३९०. सार्वधातुकार्धधातुकयोः ७।८४ ॥ अनयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः । भवति ।

---

रूढिः । अपिना प्रयुज्यमान इति लभ्यते । तथा च तिङ्वाच्यं = तिङर्थः यत् कारकं = कर्त्ता कर्म तद्वाचके युष्मच्छब्देऽप्रयुज्यमाने प्रयुज्यमाने च मध्यमः पुरुष इति निष्कृष्टोऽर्थः ।

अस्मद्युत्तमः । अत्र 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इत्यतः स्थानिन्यपीत्यनुवर्त्तते । ततश्च तिङ्वाच्यकारकवाचिनि अस्मदि अप्रयुज्यमाने प्रयुज्यमाने च उत्तमः पुरुष इति निष्कृष्टोऽर्थः । अत्र तिङो लकारे लक्षणेति शेखरः ।

तिङ्शित् । धातोरित्यधिक्रियते । तेन हरीनित्यादौ शसः सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति तस्य ङित्वेन 'घ्ङिति' इति गुणो न ।

कर्त्तरि शप् । अत्र 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यतो धातोरिति चानुवर्तते ।

सार्व । 'इको गुणवृद्धी' इति परिभाषया इक इत्युपतिष्ठते । अङ्गस्येत्यधिक्रियते । तदन्तविधिः ।

भवति । भू इत्यस्य 'भूवादयो धातवः' इति धातुसंज्ञायां धातुत्वात् 'वर्तमाने लट्' इति लटि अनुबन्धलोपे तत्स्थाने प्रथमपुरुषैकवचने 'तिप्तस्झि' इत्यादिना तिप्प्रत्ययेऽनुबन्धलोपे 'तिङ्शित्सार्वधातुकम्' इति तिपः सार्वधातुकसंज्ञायां 'भूसुवो-

---

३८६. ल का वाच्य जो कारक—कर्ता या कर्म तद्वाचक अस्मद्शब्द के प्रयुज्यमान या अप्रयुज्यमान रहते उत्तम पुरुष हो ।

३८७. मध्यमपुरुष और उत्तम पुरुष के विषय न रहने पर प्रथम पुरुष हो ।

३८८. धात्वधिकार में कहे हुए तिङ् और शकारेत्संज्ञक प्रत्यय सार्वधातुकसंज्ञक हों ।

३८९. कर्ता अर्थ है जिसका उस सार्वधातुकप्रत्यय पर रहते धातु से शप् हो ।

३९०. सार्वधातुक और आर्धधातुकप्रत्यय पर रहते इगन्त अङ्ग को गुण हो ।

भवतः ।

**३९१. झोऽन्तः ७।१।३ ॥** प्रत्ययावयवस्य झस्यान्तादेशः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ।

**३९२. अतो दीर्घो यञि ७।३।१०१ ॥** अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ।

**३९३. परोक्षे लिट् ३।२।११५ ॥** भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ।

---

स्तिङि' इति गुणनिषेधे 'कर्त्तरि शप्' इति शपि अनुबन्धलोपे शपः सार्वधातुकत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे भवतीति सिद्धम् ।

**भवतः** । भूधातोर्लटि लटस्तसि शपि गुणेऽवादेशे रुत्वे विसर्गे च तत्सिद्धिः ।

**झोऽन्तः** । अत्र 'आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम्' इत्यतोऽवयवषष्ठ्यन्तं प्रत्ययग्रहणमनुवर्तते ।

**भवन्ति** । भूधातोर्लटि तत्स्थाने प्रथमपुरुषबहुवचने झिप्रप्रत्यये तस्य 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्त्तरि शप्' इति शप्यनुबन्धलोपे शपः सार्वधतुकत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे 'झोऽन्तः' इति झस्यान्तादेशे 'अतो गुणे' इति पररूपे भवन्तीति सिद्धम् ।

**अतो दीर्घो यञि** । 'अङ्गस्य' इत्यधिक्रियते । तस्य अत इति विशेषणम् । तदन्तविधिः । 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवर्तते । तस्य यञीति विशेषणम् । तदादिविधिः ।

**भवामि** । भूधातोर्लटि तत्स्थाने मिप्यनुबन्धलोपे सार्वधातुकसंज्ञायां 'कर्त्तरि शप्' इति शपि तस्य सार्वधातुकत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'अतो दीर्घो यञि' इति दीर्घे भवामि इति सिद्धम् ।

**परोक्षे लिट्** । अत्र 'धातोः' इति भूते' इति चाधिक्रियते । 'अनद्यतने लङ्,

---

३९१. प्रत्यय के अवयव झ के स्थान में अन्त आदेश हो ।

३९२. ह्रस्वाकारान्त अङ्ग को दीर्घ हो यञादिसार्वधातुकप्रत्यय परे रहते ।

३९३. भूत अनद्यतन परोक्ष अर्थ में विद्यमान धातु से लिट् लकार हो। परोक्ष जो क्रियाविष्टकर्ता तद्वृत्ति जो भूतानद्यतनकालिकक्रिया तद्वाचकत्वेन विवक्षित जो धातु उससे लिट् लकार हो । बीती हुई रात के उत्तरार्द्ध से लेकर आनेवाली रात के पूर्वार्धपर्यन्तकाल से भिन्नकाल को अनद्यतन कहते हैं ।

३९४. **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ । ४ । ८२ ॥** लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते—

३९५. **भुवो वुग् लुङ्लिटोः ६ । ४ । ८२ ॥** भुवो वुगागमः स्यात् लुङ्लिटोरचि ।

३९६. **लिटि धातोरनभ्यासस्य ६ । १ । ८ ॥** लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ।

३९७. **पूर्वोऽभ्यासः ६ । १ । ४ ॥** अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ।

३९८. **हलादिः शेषः ७ । ४ । ६० ॥** अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः ।

---

इत्यतः अनद्यतने इत्यनुवर्तते । व्यतीतरात्रेरन्त्यार्धेन आगामिरात्रेः पूर्वार्धेन च सहितः कालोऽद्यतनः । तद्भिन्नोऽनद्यतनः । साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वं परोक्षत्वम् ।

**परस्मैपदानाम्** । 'लिटस्तझयोरेशिरेच्' इत्यतो लिट इत्यनुवर्तते । णल् अतुस्, उस् थल्, अथुस्, अ, णल्, व, म, एते नव तिबादीनां नवानां क्रमेण स्युरिति तदर्थः ।

**भुवो वुग्** । 'अचिश्नुधातुभ्रुवांय्वोरियङुवङौ' इत्यत अचीत्यनुवर्तते ।

**लिटि धातोः** । अत्र 'एकाचो द्वे प्रथमस्य' 'अजादेर्द्वितीयस्य' इति सूत्रद्वयमधिक्रियते ।

**हलादिः शेषः** । 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते ।

---

३९४. लिट् के स्थान में जो तिप् तस् झि सिप् थस् थ मिप् वस् मस् ये नव प्रत्यय उनके स्थान में क्रम से णल् अतुस् उस् थल् अथुस् अ णल् व म ये नव आदेश हों ।

३९५. भू को वुक् आगम हो लुङ् लिट् सम्बन्धी अच् पर रहते ।

३९६. लिट् पर रहते अभ्यासरहित धातु का अवयव प्रथम एकाच्, उसको द्वित्व हो । अजादिधातु के द्वितीय एकाच् को द्वित्व हो ।

३९७. यहाँ पर जो द्वित्व ( दो वार ) विहित हैं उनमें प्रथम को अभ्यास संज्ञा हो ।

३९८. अभ्यास का प्रथम आदि हल् शेष रहे अन्य हल् का लोप हो ।

**३९९. ह्रस्वः ७ । ४ । ५९ ॥** अभ्यासस्याचो ह्रस्वः स्यात् ।

**४००. भवतेरः ७ । ४ । ७३ ॥** भवतेरभ्यासोकारस्य अः स्याल्लिटि ।

**४०१. अभ्यासे चर्च ८ । ४ । ५४ ॥** अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चर इति विवेकः । बभूव । बभूवतुः । बभूवुः ।

**४०२. लिट् च ३ । ४ । ११५ ॥** लिडादेशस्तिङार्धधातुकसंज्ञः ।

**४०३. आर्धधातुकस्येड् वलादेः ७ । २ । ३५ ॥** वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

---

**ह्रस्वः** । 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्यत्येनुवर्तते । 'अचश्च' इति परिभाषोपतिष्ठते ।

**भवतेरः** । भवतेः अः इति च्छेदः । भवतेरित्यस्य भूधातोरित्यर्थः । अभ्यासस्येत्यनुवर्तते । 'व्यथो लिटि' इत्यतो लिटीत्यनुवर्तते । अलोऽन्त्य परिभाषया अन्त्यस्योकारस्य अकारो भवति ।

**अभ्यासे चर्च** । अत्र 'झलां जश् झसि' इत्यतो झलामिति चकारात् जश् इति चानुवर्तते ; तत्र कस्य चरः इत्याशङ्कायामाह झशां जश इत्यादि ।

**बभूव** । भूधातोः 'परोक्षे लिट्' इति लिटि अनुबन्धलोपे लस्य स्थाने 'तिप्तस्झि' इत्यादिना प्रथमपुरुषैकवचने तिप्प्रत्यये 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति तिपो णलादेशेऽनुबन्धलोपे नित्यत्वाद् गुणवृद्धी बाधित्वा 'भुवोवुग्लुङ्लिटोः' इति वुगागमेऽनुबन्धलोपे 'वृक्षः प्रचलन् सहावयवैः प्रचलति' इति न्यायेन 'व्यपदेशिवदेकस्मिन्' इति परिभाषया भूव् इत्यस्य एकाचः प्रथमत्वेन च 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति प्रथमभूव् इत्यस्याभ्याससंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्वः' इति ऊकारस्य ह्रस्वे 'भवतेरः' इति अभ्यासोकारस्य अकारे 'अभ्यासे चर्च' इति पूर्वभकारस्य जश्त्वेन बकारे बभूव इति सिद्धम् ।

**लिट् च** । अत्र लिडित लुप्तस्थानषष्ठ्यन्तम् । तिङ्शित्सार्वधातुकम्' इत्यतस्तिङिति 'आर्धधातुकं शेषः' इत्यत आर्धधातुकमिति चानुवर्तते ।

**बभूविथ** । भूधातोर्लिटि तत्स्थाने मध्यमपुरुषैकवचने सिपि तस्य 'लिट् च'

---

३९९. अभ्यास के अच् को ह्रस्व हो ।

४००. भूधातु के अभ्यास उकार को अकार हो लिट् पर रहते ।

४०१. अभ्यास झल् को चर् और जश् हो । अर्थात् झश् को जश् और खय् को चर हो ।

४०२. लिट् के स्थान में जो आदेश तिङ् उसको आर्धधातुक संज्ञा हो ।

४०३. वलादि आर्धधातुक को इट् आगम हो ।

४०४. **अनद्यतने लुट्** ३ । ३ । १५ ॥ भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ।

४०५. **स्यतासी लृलुटोः** ३ । १ । ३३ ॥ धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शबाद्यपवादः । लृ इति लृङ्लृटोर्ग्रहणम् ।

४०६. **आर्धधातुकं शेषः** ३।४।११४ ॥ तिङ्शिङ्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ।

४०७. **लुटः प्रथमस्य डारौरसः** २।४।८५ ॥ डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ।

---

इत्यार्धधातुकसंज्ञायां 'परस्मैपदानाम्' इत्यादिना सिपस्थलादेशेऽनुबन्धलोपे 'आर्धधातुकस्येड् वलादेः' इति थस्य इडागमेऽनुबन्धलोपे 'भुवो वुग्लुङ्लिटोः' इति वुगागमे 'लिटि धातोरनभ्यासस्य' इति भूव्इत्यस्य द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'ह्रस्वः' इति ह्रस्वे 'भवतेरः' इत्यभ्यासोकारस्याकारे 'अभ्यासे चर्च' इति जश्त्वेन बकारे बभूविथ इति सिद्धम् ।

**अनद्यतने लुट्** । धातोरित्यधिक्रियते । 'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवर्तते ।

**स्यतासी** । स्यश्च तासिश्चेति विग्रहः । धातोरित्यधिक्रयते । लृङ्लृटोः स्यप्रत्ययो लुटि तास् इति फलितम् ।

**आर्धधातुकं शेषः** । 'तिङ्शित्सार्वधातुकम्' इति पूर्वसूत्रोपात्ततिङ्शिद्भिन्नः शेषः । धातोरित्यधिकृतं विहितविशेषणमाश्रीयते ।

**भविता** । भूधातोः 'अनद्यतने लुट्' इति लुटि तस्य स्थाने प्रथमपुरुषैकवचने तिप्प्रत्ययेऽनुबन्धलोपे 'कर्त्तरि शप्' इति प्राप्तं शपं बाधित्वा 'स्यतासी लृलुटोः' इति तास् प्रत्यये 'आर्धधातुकं शेषः' इति तास आर्धधातुकसंज्ञायां 'आर्धधातुकस्येड्वलादेः' इति इडागमेऽनुबन्धलोपे भू इ तास् ति इति स्थिते 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशेऽनुबन्धलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे इति तासघटकस्य आसः लोपे भविता इति सिद्धम् ।

---

४०४. भविष्यत् अनद्यतन अर्थ में धातु से लुट् लकार हो ।

४०५. धातु से स्य और तास् प्रत्यय हो लृङ् लृट् और लुट् लकार परे रहते ।

४०६. तिङ् और शित् से भिन्न जो धातु से विहित प्रत्यय वह आर्धधातुकसंज्ञक हो ।

४०७. लुट् के स्थान में जो प्रथमपुरुष तिप् तिस् झि उसके स्थान में क्रम से डा रौ रस् आदेश हो ।

**४०८. तासस्त्योर्लोपः ७।४।५०॥** तासेरस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये परे।

**४०९. रि च ७।४।५१॥** रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

**४१०. लृट् शेषे च ३।३।१३॥** भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां वा। स्यः। इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।

---

तासस्त्योः। तास् च अस्तिश्चेति विग्रहः। 'सः स्यार्धधातुके' इत्यतः सि इत्यनुवर्तते। अङ्गस्य' इत्यधिकारादाक्षिप्तप्रत्ययस्य सि इति विशेषणम्। तदादिविधिः।

रि च। अत्र 'तासस्त्योर्लोपः' इति सूत्रमस्तिवर्जमनुवर्तते। रिइत्यनेनाङ्गाक्षिप्तप्रत्ययस्य विशेषणात्तदादिविधिः।

**भवितारौ।** भूधातोर्लुटि तत्स्थाने प्रथमपुरुषद्विवचने तस्प्रत्यये शपं बाधित्वा 'स्यतासी लृलुटो' इति तास्प्रत्यये 'आर्धधातुकं शेषः' इति तस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड् वलादेः' इतीडागमेऽनुबन्धलोपे गुणेऽवादेशे 'लुटः प्रथमस्य डारौरसः' इति तसः रौ आदेशे 'रि च' इति तासः सलोपे भवितारौ इति सिध्यति।

**भवितासि।** भूधातोर्लुटि तस्य स्थाने सिप्यनुबन्धलोपे शपं बधित्वा तास्प्रत्यये आर्धधातुकत्वे इडागमे गुणेऽवादेशे 'तासस्त्योर्लोपः' इति तासः सस्य लोपे भवितासि इति साधु।

**लृट् शेषे च।** धातोरित्यधिक्रियते। 'भविष्यति गम्यादयः' इत्यतो भविष्यति इत्यनुवर्तते। 'तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्' इतिसूत्रोपात्तक्रियार्थायां क्रियायामित्यतो भिन्नः शेषः। ततः क्रियार्थायां क्रियायामसत्यामिति लभ्यते। चकारात्सत्यामित्यपि लभ्यते।

**भविष्यति।** भूधातोः 'लृट् शेषे च' इति लृटि तत्स्थाने तिपि 'स्यतासी

---

४०८. तास् प्रत्यय और अस् धातु के सकार का लोप हो सकारादि प्रत्यय पर रहते।

४०९. तास् प्रत्यय और अस् धातु के सकार का लोप हो रादिप्रत्यय पर रहते।

४१०. भविष्यत् अर्थ में विद्यमान धातु से लृट् लकार हो क्रिया के लिये क्रिया रहे या न रहे।

४११. लोट् च ३।३।१६२ ॥ विध्याद्यर्थेषु धातोर्लोट् ।

४१२. आशिषि लिङ्लोटौ ३।३।१७३ ॥

४१३. एरुः ३।४।८६ ॥ लोट इकारस्य उः । भवतु ।

४१४. तुह्योस्तातङाशिष्यन्यतरस्याम् ७।१।३५ ॥ आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । भवतात् ।

४१५. लोटो लङ्वत् ३।४।८५ ॥ लोटस्तामादयस्सलोपश्च ।

४१६. तस्थस्थमिपां तान्तन्तामः ३।४।१०१ ॥ ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ।

---

ऌलुटोः' इति स्यप्रत्यये 'आर्धधातुकं शेषः' इति तस्यार्धधातुकत्वे 'आर्धधातुकस्येड्वलादेः' इतीडागमे अनुबन्धलोपे गुणेऽवादेशे षत्वे भविष्यति इति सिद्धम् ।

लोट् च । धातोरित्यधिक्रियते । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्' सूत्रं लिङ्वर्जमनुवर्तते ।

एरुः । एः उः इतिच्छेदः । 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते ।

भवतु । भूधातोः 'लोट् च' इत्यनेन 'आशिषि लिङ्लोटौ' इत्यनेन वा लोटि तत्स्थाने तिपि शप्यनुबन्धलोपे गुणेऽवादेशे 'एरुः' इति तिप इकारस्य उत्वे भवतु इति सिद्धचति । आशिषि तु 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति तुइत्यस्य पाक्षिकेऽनेकाल्त्वात्तातङ्ङादेशेऽनुबन्धलोपे भवतात् इति । तातङोऽभावपक्षे भवतु इति च सिद्धति ।

तस्थस्थमिपाम् । 'नित्यं ङितः' इत्यतो ङित इत्यनुवर्तते ।

भवताम् । भूधातोर्लोटि तत्स्थाने तसि 'लोटो लङ्वत्' इति लङ्कार्यातिदेशे । तेन ङित्त्वात् 'तस्थस्थमिपां तान्तन्तामः' इति तसस्तामादेशे शपि गुणेऽवादेशे भवताम् इति सिद्धम् ।

---

४११. विधि निमन्त्रण आमन्त्रण अधीष्ट संप्रश्न प्रार्थना अर्थ की विवक्षा में धातु से लोट् लकार हो ।

४१२. आशीर्वाद अर्थ की विवक्षा में धातु से लिङ् और लोट् लकार हो ।

४१३. लोट्लकारसम्बन्धी इकार के स्थान में उकार हो ।

४१४. आशीर्वाद अर्थ में तु और हि के स्थान में तातङ् आदेश हो विकल्प से ।

४१५. लोट् को लङ् की तरह कार्य हो ।

४१६. ङित् लकारसम्बन्धी जो तस् थस् थ मिप् ये चारप्रत्यय उनके स्थान में क्रम से ताम् तम् त अम् ये चार आदेश हों ।

**४१७. सेर्ह्यपिच्च ३।४।८७ ॥** लोटः सेर्हिः सोऽपिच्च ।

**४१८. अतो हेः ६।४।१०५ ॥** अतः परस्य हेर्लुक् । भव । भवतात् । भवतम् । भवत ।

**४१९. मेर्निः ३।४।८९ ॥** लोटो मेर्निः स्यात् ।

**४२०. आडुत्तमस्य पिच्च ३।४।९२ ॥** लोडुत्तमस्याट् स्यात् स पिच्च । हिन्योरुत्वं न इकारोच्चारणसामर्थ्यात् ।

**४२१. ते प्राग्धातोः १।४।८० ॥** ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ।

---

**सेर्ह्यपिच्च** । हि इति लुप्तषष्ठ्यन्तम् । 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते ।

**अतो हेः** । 'चिणो लुक्' इत्यतो लुगित्यनुवर्तते । अत इति पञ्चमी हेरिति षष्ठी ।

**भव** । भूधातोर्लोटि तत्स्थाने सिपि शप्यनुबन्धलोपे गुणेऽवादेशे भव सि इति स्थिते 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति हेस्तातङादेशेऽनुबन्धलोपे भवतात् इति, तातङोऽभावपक्षे 'अतो हेः' इति हेर्लुकि भव इति च सिद्धम् ।

**मेर्निः** । 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते ।

**आडुत्तमस्य** । अत्रापि 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते । स्तवानीत्याद्यर्थं पित्वम् ।

**भवानि** । भूधातोर्लोटि तत्स्थाने मिपि शपि गुणेऽवादेशे 'लोटो लङ्वत्' इति लङ्कार्यातिदेशेन 'तस्थस्थमिपां तान्तन्तामः' इति मिपः अमादेशे प्राप्ते तम्बाधित्वा 'मेर्निः' इति मेर्न्यादेशे इकारोच्चारणसामर्थ्यात् नेरिकारस्येत्त्वाभावे 'आडुत्तमस्य पिच्च' इत्याडागमेऽनुबन्धलोपे दीर्घे भवानि इति सिद्धम् ।

**ते प्राग्** । 'उपसर्गाः क्रियायोगे' 'गतिश्च' इत्यनयोः प्रकृतत्वात्तत्पदेन परामर्शः ।

---

४१७. लोट् के स्थान में जो सि प्रत्यय उसके स्थान में हि आदेश हो और वह अपित् हो ।

४१८. अकार से परे जो हि उसका लोप हो ।

४१९. लोट् के स्थान में जो मि प्रत्यय उसके स्थान नि आदेश हो ।

४२०. लोट्लकारसम्बन्धी उत्तम पुरुष को आट् आगम हो और वह पित् हो ।

४२१. गतिसंज्ञकों और उपसर्गसंज्ञकों का धातु के पूर्व ही प्रयोग करना चाहिए ।

**४२२. आनि लोट् ८।४।१६ ॥** उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रभवाणि । ( दुरः षत्वणत्वयोरुपर्गत्वप्रतिषेधो वक्तव्यः । ) दुःस्थितिः । दुर्भवानि । ( अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाक्यम् ) । अन्तर्भवाणि ।

---

**आनिलोट्** । आनि इति लोट् इति च लुप्तषष्ठ्यन्तम् । 'रषाभ्यां नो णः समानपदे' इत्यतो रषाभ्यां नो ण इत्यनुवर्तते । 'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यत उपसर्गादित्यनुवर्तते ।

**प्रभवाणि** । भूधातोर्लोटि तत्स्थाने मिपि शपि गुणेऽवादेशे मेर्न्यादेशे आटि दीर्घे 'ते प्राग्धातोः' इति सूत्रबलात्प्रइत्युपसर्गस्य पूर्वमेव प्रयोगे 'आनि लोट्' इति षत्वे तत्साधु ।

**दुरः** । षत्वे णत्वे च कर्त्तव्ये दुर उपसर्गत्वप्रतिषेध इति तदर्थः ।

**दुःस्थितिः** । दुःस्थितिरित्यत्र 'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिच्सञ्जस्वञ्जाम्' इति सस्य षत्वे प्राप्ते 'दूरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' इति दुर उपसर्गत्वप्रतिषेधात्षत्वाभावे तत्सिद्धिः ।

**दुर्भवानि** । भूधातोर्लोटि तस्य स्थाने मिपि शपि गुणेऽवादेशे मेर्न्यादेशे आटि दीर्घे 'ते प्राग्धातो.' इतिसूत्रबलाद् दुरः पूर्वप्रयोगे 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' इति दुर उपसर्गत्वप्रतिषेधात् 'आनि लोट्' इति णत्वाभावे दुर्भवानि इति सिद्धम् ।

**अन्तः शब्दस्य** । अङ्विधौ किविधौ णत्वे च कर्त्तव्ये अन्तः शब्दस्य उपसर्गत्वमित्यर्थः । 'आतश्चोपसर्गे' इत्यङ् । अन्तर्धा । 'उपसर्गे घोः किः' इति किविधिः । अन्तर्धिः ।

**अन्तर्भवाणि** । अन्तरुपपदाद् भूधातोर्लोटि तत्स्थाने मिपि शपि गुणेऽवादेशे आटि दीर्घे 'अन्तः शब्दस्याङ्किविविणत्वेषूपसर्गत्वं वाच्यम्' इति अन्तरित्यस्योपसर्गत्वे 'आनि लोट्' इति णत्वे अन्तर्भवाणि इति सिद्धम् ।

---

४२२. उपसर्ग में रहने वाले निमित्त से पर जो लोट् के स्थान में आदेश आनि उसके न को ण हो ।

( वा० ) षत्व और णत्व कर्तव्य में दुर् के उपसर्गत्व का प्रतिषेध कहना । अर्थात् षत्वणत्व कर्तव्य में दुर् उपसर्ग नहीं माना जाता है ।

( वा० ) अङ्विधि किविधि और णत्व कर्तव्य में अन्तः शब्द को उपसर्ग जानना चाहिये ।

**४२३ नित्यं ङितः ३।४।९९ ॥** सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ।

**४२४ अनद्यतने लङ् ३।२।१११ ॥** अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ।

**४२५ लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१ ॥** एष्वङ्गस्याट् ।

**४२६ इतश्च ३।४।१०० ॥** ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

---

**नित्यं ङितः ।** 'स उत्तमस्य' इतिसूत्रमनुवर्तते । तत्र स इति षष्ठ्यन्तम् उत्तमस्य विशेषणम् । तदन्तविधिः । 'इतश्च लोपः परस्मैपदेषु' इत्यतो लोप इत्यनुवर्तते ।

**भवाव ।** भूधातोर्लोटि तत्स्थाने वस्प्रत्यये शपि गुणेऽवादेशे 'आडुत्तमस्य पिच्च' इत्याडागमेऽनुबन्धलोपे सवर्णदीर्घे 'लोटो लङ्वत्' इति लङ्कार्यातिदेशेन ङित्त्वात् 'नित्यं ङितः' इति सलोपे भवाव इति सिद्धम् । एवं भवाम इत्यपि बोध्यम् ।

**अनद्यतने लङ् ।** 'धातोः' इति 'भूते' इति चाधिक्रियते ।

**लुङ् ।** अत्र 'अङ्गस्य' इत्यधिक्रियते ।

**इतश्च ।** 'लस्य' इत्यधिक्रियते । 'नित्यं ङितः' इत्यतो ङित इत्यनुवर्तते । 'इतश्च लोपः परस्मपदेषु' इत्यतो लोप इति परस्मैदेषु इति चानुवर्तते । तत्र परस्मैपदेष्विति षष्ठ्येकवचनान्ततया विपरिणमते । तस्य इत इति विशेषणम् ।

**अभवत् ।** भूधातोः 'अनद्यतने लङ्' इति लङि तत्स्थाने तिप्प्रत्यये शप्यनुबन्धलोपे सार्वधातुकत्वे गुणेऽवादेशे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अङ्गस्य अडागम 'इतश्च' इति तिप इकारलोपे अभवत् इति सिद्धम् ।

**अभवताम् ।** भूधातोर्लङस्तसि तस्य तामादेशे शपि गुणेऽवादेशेऽटि तत्सिद्धिः ।

**अभवन् ।** भूधातोर्लङि तस्य झौ झस्यान्तादेशे शपि गुणेऽवादेशे पररूपेऽटि 'इतश्च' इति इकारलोपे तकारस्य संयोगान्तलोपे तत्सिद्धिः ।

**अभवाव ।** भूधातोर्लङि तत्स्थाने वस्प्रत्यये शपि गुणेऽवादेशे 'लुङ्लङ्लृङ्क्ष्वडु-

---

४२३ सकारान्त जो ङित्सम्बन्धी उत्तमपुरुष उसका नित्य लोप हो ।

४२४ अनद्यतनभूतार्थकालिक जो क्रिया तद्वाचकत्वेन विवक्षित जो धातु उस से लङ्लकार हो ।

४२५ लुङ् लङ् लृङ् पर रहते अङ्ग को अट् आगम हो और वह उदात्त हो ।

४२६ ङित्लकारसम्बन्धी जो परस्मैपदसंज्ञक इकारान्तप्रत्यय उसके अन्त का लोप हो ।

**४२७ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ३।३।१६१ ॥** एष्वर्थेषु धातोर्लिङ् ।

**४२८ यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३ ॥** लिङः परस्मैपदानां यासुडागमो ङिच्च ।

**४२९ लिङः सलोपोऽनन्त्यस्य ७।२।७९ ॥** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते ।

**४३०. अतो येयः ७।२।८० ॥** अतः परस्य सार्वधातुकावयवस्य तास् इत्यस्य इय् । गुणः ।

---

दात्तः' इत्यडागमेऽनुबन्धलोपे 'अतो दीर्घो यञि' इति दीर्घे 'नित्यं ङितः' इति सलोपे अभवाव इति सिद्धम् ।

**विधिनिमन्त्रणा—**। 'धातोः' इत्यधिक्रियते । विधिः प्रेरणम्- भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यथा त्वं वस्त्रं क्षालयेति । निमन्त्रणम् नियोगकरणम् आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । तद्यथा दौहित्रादीन् प्रति इह श्राद्धे भवान् भुञ्जीत इति । आमन्त्रणं-कामचारानुज्ञा । यथेच्छं क्रियतामित्यभ्यनुज्ञानमित्यर्थः । अधीष्टं सत्कारपूर्वको व्यापारः । सत्कृत्य प्रवर्तनमित्यर्थः । यथा भवान् पुत्रमध्यापयेदिति । इदं कार्यं न वेति विचार्य निर्धारणं संप्रश्नः । यथा किं भोः भवान् व्याकरणमधीयोतेति । प्रार्थनं याच्ञा । यथा भवानन्नं मे दद्यादिति । प्रवर्तनासंप्रश्नप्रार्थनेषु लिङित्येव सुवचम् ।

**यासुट्** । 'लिङः सीयुट्' इत्यतो लिङ इत्यनुवर्तते । लिङइति पञ्चम्यर्थे षष्ठी । परस्मैपदेष्विति षष्ठ्यर्थे सप्तमी ।

**लिङः स–**। अत्र स इति लुप्तषष्ठीकम् । 'रुदादिभ्यः सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवर्तते । तस्य षष्ठ्यन्तत्वेन विपरिणामः ।

**अतो येयः** । अत्र 'रुदादिभ्यः सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवर्त्य अवयवषष्ठ्यन्तत्वेन विपरिणामः । अत इति पञ्चमी । परस्येत्यध्याह्रियते । यास इति

---

४२७. विधि निमन्त्रण आमन्त्रण अधीष्ट संप्रश्न प्रार्थना अर्थ की विवक्षा में धातु से लिङ् लकार हो ।

४२८. लिङ् के स्थान में जो परस्मैपदसंज्ञकप्रत्यय उसके यासुट् आगम हो और वह ङित् हो ।

४२९. सार्वधातुकलिङ्सम्बन्धी अन्त्यभिन्न सकार का लोप हो ।

४३०. ह्रस्व अकार से परे सार्वधातुकावयव यास् के स्थान में इय् आदेश हो ।

**४३१. लोपो व्योर्वलि ६।१।६६ ॥ भवेत् । भवेताम् ।**

**४३२. झेर्जुस् ३।४।१०८ ॥** लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ।

**४३३. लिङाशिषि ३।४।११६ ॥** आशिषि लिङस्तिङ् आर्धधातुकसंज्ञः स्यात् ।

**४३४. किदाशिषि ३।४।१०४ ॥** आशिषि लिङो यासुट् कित् । स्कोः संयोगाद्योःरिति सलोपः ।

---

लुप्तषष्ठीकम् । येय इत्यत्र यास् इय् इति स्थिते रुत्वे यलोपे सन्धिरार्षः । इय इत्यत्र अकार उच्चारणार्थः ।

**भवेत्** । भूधातोः 'विधिनिमन्त्रणा' इत्यादिना लिङि तत्स्थाने तिपि शपि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे 'इतश्च' इतीकारलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुट्यनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति यासः सस्य लोपे प्राप्ते 'अतो येयः' इति यास इयादेशे 'आद् गुणः' इति गुणे 'लोपो व्योर्वलि' इति यलोपे भवेदिति सिद्धम् ।

**भवेताम्** । भूधातोर्लिङ् तत्स्थाने तसि 'तस्थस्थमिपां तान्तन्तामः' इति तसस्तामादेशे शपि गुणेऽवादेशे यासुटि सलोपं बाधित्वा यास इयादेशे गुणे यलोपे तत्सिद्धिः ।

**झेर्जुस्** । 'लिङः सीयुट्' इत्यतो लिङ इत्यनुवर्तते ।

**भवेयुः** । भूधातोर्लिङि तत्स्थाने झिप्रत्यये शपि गुणेऽवादेशे 'झोऽन्तः' इति झस्यान्तादेशे प्राप्ते तं बाधित्वा 'झेर्जुस्' इति झेर्जुसादेशेऽनुबन्धलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुटि 'अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपं बाधित्वा 'अतो येयः' इति यास इयादेशे गुणे रुत्वे विसर्गे भवेयुः इति सिद्धम् ।

**लिङाशिषि** । लिङिति लुप्तषष्ठीकम् । 'तिङ्शित्सार्वधातुकम्' इत्यतः तिङ् इति 'आर्धधातुकं शेषः' इत्यत आर्धधातुकमिति चानुवर्तते ।

**किदाशिषि** । 'लिङः सीयुट्' इत्यतो लिङ इति 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यतो यासुडिति चानुवर्तते । यासुटो ङित्त्वेनैव गुणनिषेधे कित्त्वविधानम् इज्यादित्यादौ सम्प्रसारणाद्यर्थमेव ।

---

४३१. वकार और यकार का लोप हो वल् पर रहते ।

४३२. लिङ् के स्थान में जो झि उसको जुस् आदेश हो ।

४३३. आशीर्वाद अर्थ में जो लिङ् उसके स्थान में जो तिङ् वह आर्धधातुक संज्ञक हो ।

४३४. आशीर्वाद अर्थ में जो लिङ् तत्सम्बन्धी यासुट् कित् हो ।

**४३५. क्ङिति च १।१।५** ॥ गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः। भूयात्। भूयास्ताम्। भुयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म।

**४३६. लुङ् ३।२।११०** ॥ भूतार्थे धातोर्लुङ् स्यात्।

**४३७. माङि लुङ् ३।३।१७५** ॥ सर्वलकारापवादः।

**४३८. स्मोत्तरे लङ् च ३।३।१७६** ॥ स्मोत्तरे माङि लङ् स्याच्चाल्लुङ्।

**४३९. च्लि लुङि ३।१।४३** ॥ शबाद्यपवादः।

**४४०. च्लेस्सिच् ३।१।४४** ॥ इचावितौ।

---

**क्ङिति च**। ग्क्ङ् एषां समाद्वन्द्वः ततः ग्क्ङ् इत् यस्येति विग्रहः। निमित्तसप्तम्येषा। 'इको गुणवृद्धी' इति सूत्रमनुवर्तते। तेन इक इत्युच्चार्य विहिते गुणवृद्धी इति लभ्यते। 'न धातुलोप आर्धधातुके' इत्यतो नेत्यनुवर्तते।

**भूयात्**। भूधातोः 'आशिषि लिङ्लोटौ' इति लिङि तत्स्थाने तिपि 'लिङाशिषि' इति तिप आर्धधातुकत्वात् शपोऽभावे 'इतश्च' इतीकारलोपे यासुटि 'सुट् तिथोः' इति सुट्यनुबन्धलोपे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'क्ङिति च' इति गुणनिषेधे भूयात् इति सिद्धम्।

**भूयास्ताम्**। भूधातोराशिषि लिङस्तसस्तामादेशे 'लिङाशिषि' इत्यार्धधातुकत्वात् शबभावे यासुटि सुटि 'स्कोः' इति यासुटः सलोपे गुणनिषेधे तत्सिद्धिः।

**भूयाः**। भूधातोराशीर्लिङः सिपि 'इतश्च' इतीकारलोपे यासुटि 'स्कोः' इति सलोपे कित्वाद् गुणनिषेधे रुत्वे विसर्गे तत्सिद्धिः।

**भूयास्व**। भूधातोराशीर्लिङो वसि यासुटि 'नित्यं ङितः' इति सलोपे कित्वात् 'क्ङिति च' इति गुणनिषेधे तत्सिद्धिः।

**लुङ्**। 'धातोः' इति 'भूते' इति चाधिक्रियते।

---

४३५. गित् कित् ङित् निमित्तक इग्लक्षण गुण वृद्धि न हो।

४३६. भूतार्थकालिक जो क्रिया तद्वाचकत्वेन बिवक्षित जो धातु उससे लुङ्लकार हो।

४३७. माङ् के योग में धातु से लुङ्लकार हो।

४३८. स्म है पर जिससे ऐसे माङ् के योग में धातु से लङ् और लुङ्लकार हो।

४३९. लुङ् पर रहते धातु से च्लिप्रत्यय हो।

४४०. च्लि के स्थान में सिच् आदेश हो।

**४४१. गतिस्थाघुपाभूभ्यस्सिचः परस्मैपदेषु २।४।७७ ॥** एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ।

**४४२. भूसुवोस्तिङि ७।३।८८ ॥** भूसू एतयोः सार्वधातुके तिङि परे गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

**४४३. न माङ्योगे ६।४।७४ ॥** अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ।

---

**गातिस्था** । गाति स्था घु पा भू एषां द्वन्द्वः । परस्येत्यध्याह्रियते । सिच इति षष्ठी । गातीति श्तिपा निर्देशात् गाधातोर्ग्रहणम् । घुइत्यनेन 'दाधाघ्वदाप्' इति घुसंज्ञकयोः दाधातोः धाधातोश्च ग्रहणम् । 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यतो लुगित्यनुवर्तते ।

**भूसुवोस्तिङि** । अत्र 'मिदेर्गुणः' इत्यतो गुण इति 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यतो नेति सार्वधातुक इति चानुवर्तते । सू इत्यनेन षूङ् प्राणिगर्भविमोचने इत्यस्यैव ग्रहणम् ।

**अभूत्** । भूधातोः 'लुङ्' इति लुङि तस्य स्थाने तिपि अडागमे 'इतश्च' इतींकारलोपे शपं बाधित्वा 'च्लि लुङि' इति च्लिप्रत्यये 'च्लेः सिच्' इति च्लेस्सिजादेशेऽनुबन्धलोपे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि तिपः सार्वधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'भूसुवोस्तिङि' इति गुणनिषेधे अभूत् इति सिद्धम् ।

**अभूवन्** । भूधातोर्लुङि तस्य स्थाने झिप्रत्यये च्लिप्रत्यये तस्य सिजादेशे तस्य लुकि अडागमे 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसि प्राप्ते 'आतः' इति सूत्रनियमात्तदभावे 'झोऽन्तः' इति झस्यान्तादेशे 'इतश्च' इतीकारलोपे तकारस्य संयोगान्तलोपे 'भुवो वुग्लुङ्लिटोः' इति वुगागमेऽनुबन्धलोपे तत्सिद्धिः ।

**मा भवान् भूत्** । माङ्पूर्वाद् भूधातोः 'माङि लुङ्' इति लुङि तस्य स्थाने तिपि च्लौ च्लेः सिचि सिचो लुकि अडागमे प्राप्ते 'न माङ्योगे' इति तन्निषेधे इलोपे गुणनिषेधे तत्सिद्धिः । मध्ये भवानिति प्रयोगस्तु अडभावसूचनाय ।

**मा स्म भवत्** । मास्मपूर्वाद् भूधातोः 'स्मोत्तरे लङ् च' इति लङि लुङि च

---

४४१. इण्स्थानिक गा स्था घुसंज्ञक पा भू इन धातु से पर सिच् का लुक् हो परस्मैपद पर रहते ।

४४२. भू और सू धातु को सार्वधातुक तिङ् पर रहते गुण न हो ।

४४३. माङ् के योग में अट् आट् नहीं होते हैं ।

४४४. **लिङ्निमित्ते लृङ् क्रियातिपत्तौ** ३।३।१३९ ॥ हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् इत्यादि ज्ञेयम् । अत सातत्यगमने ॥ २ ॥ अतति ।

---

पूर्ववत् तिबादिके 'न माङ्योगे' इति अडागमनिषेधे मास्म भवत् इति मास्म भूदिति च सिद्धम् ।

**लिङ्निमित्ते** । 'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषु लिङ्लोटौ' इत्यादि लिङो निमित्तं तस्मिन् इति विग्रहः । क्रियाया अतिपत्तिः अनिष्पत्तिः असिद्धिरिति फलितम् । तस्यामिति विग्रहः । 'भविष्यति मर्यादावचनेऽवरस्मिन्' इत्यतो भविष्यतीत्यनुवर्तते ।

**अभविष्यत्** । भूधातेः 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे शपं बाधित्वा 'स्यतासी लृलुटोः' इति स्यप्रत्यये 'आर्धधातुकं शेषः' इत्यार्धधातुकत्वे 'आर्धधातुकस्येड्वलादेः' इतीडागमे गुणेऽवादेशे अडागमे 'आदेशप्रत्यययोः' इति षत्वे अभविष्यत् इति सिद्धम् ।

**अभविष्यताम्** । भूधातोर्लृङस्तामादेशे स्यप्रत्यये अटि इटि गुणेऽवादेशे षत्वे तत्सिद्धिः ।

**अभविष्यन्** । भूधातोर्लृङो झौ स्ये अटि इटि गुणेऽवादेशे 'झोऽन्तः' इति झेरन्तादेशे 'इतश्च' इतीकारलोपे तकारस्य संयोगान्तलोपे षत्वे तत्सिद्धिः ।

**अभविष्यः** । भूधातोर्लृङिःसिपि स्ये अटि इटि गुणेऽवादेशे 'इतश्च' इतीकारलोपे षत्वे रुत्वे विसर्गे च तत्सिद्धिः ।

**अभविष्यतम्** । भूधातोर्लृङः थसि तस्य तमादेशे स्ये अटि इति गुणेऽवादेशे षत्वे तत्सिद्धिः ।

**अभविष्यम्** । भूधातोःलृङो मिपि मिपोऽमादेशे स्ये अटि इटि गुणेऽवादेशे 'अमि पूर्वः' इति पूर्वरूपे षत्वे तत्सिद्धिः ।

**अभविष्याव** । भूधातोर्लृङो वसि स्ये अटि इटि गुणेऽवादेशे 'अतो दीर्घो यञि' इति दीर्घे 'नित्यं ङितः' इति सलोपे 'आदेशप्रत्यययोः' इति षत्वे तत्सिद्धिः ।

**अत सातत्यगमने** । सातत्यगमनं निरन्तरगमनम् ।

---

४४४. हेतुहेतुमद्भावादिक जो लिङ् का निमित्त उसके रहते भविष्यत्कालिक क्रिया बोधकत्वेन विवक्षित धातु से लृङ्लकार हो क्रिया की असिद्धि गम्यमान रहते ।

**४४५. अत आदेः ७।४।७०॥** अभ्यासस्यादेरतो दीर्घः स्यात्। आत। आतुतः। आतुः। आतिथ। आतथुः। आत। आत। आतिव। आतिम। अतिता। अतिष्यति। अततु।

**४४६. आडजादीनाम् ६।४।७२॥** अजादेरङ्गस्याट् लुङ्लङ्लृङ्क्षु। आतत्। अतेत्। अत्यात्। अत्यास्ताम्। लुङि सिचि इडागमे कृते।

---

**अत आदेः**। अत्र 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येति 'दीर्घ इणः किति' इत्यतो दीर्घ इति चानुवर्तते।

**आत**। अत्धातोर्लिटि तत्स्थाने तिपि 'परस्मैपदानाम्' इत्यादिना तिपो णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति अभ्याससंज्ञायाम् 'हलादिः शेषः' इति लोपे अत् अ इति स्थिते 'अतो गुणे' इति प्राप्तं पररूपं बाधित्वा 'अत आदेः' इत्यभ्यासदीर्घे सवर्णदीर्घे तत्सिद्धिः।

**आतिथ**। अत्धातोर्लिटः सिपि 'परस्मैपदानाम्' इति सिपस्थलादेशे द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे पररूपं बाधित्वा 'अत आदेः' इत्यभ्यासदीर्घे सवर्णदीर्घे 'आर्धधातुकस्येड्वलादेः' इति इडागमेऽनुबन्धलोपे आतिथ इति सिद्धम्।

**अतिता**। अत्धातोर्लुटि तत्स्थाने तिपि 'स्यतासी लृलुटोः' इति तास्प्रत्यये 'आर्धधातुकं शेषः इति तस्यार्धधातुकत्वे 'आर्धधातुकस्येड्वलादेः' इतीडागमेऽनुबन्धलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे तत्सिद्धिः।

**आडजादीनाम्**। 'अङ्गस्य' इत्यधिक्रियते। लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यतो लुङ्लङ्लृङ्क्ष्वित्यनुवर्तते।

**आतत्**। अत्धातोर्लङि तत्स्थाने तिपि शपि अनुबन्धलोपे अटं बाधित्वा 'आडजादीनाम्' इत्याडागम 'आटश्च' इति वृद्धौ 'इतश्च' इतीकारलोपे आतत् इति सिद्धम्।

**अतेत्**। अत्धातोर्विधिलिङि तत्स्थाने तिपि शपि 'इतश्च' इतीकारलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुटि 'लिङः सलोपोऽनन्त्यस्य' इति सलोपं बाधित्वा 'अतो येयः' इति यास इयादेशे 'आद् गुणः' इति गुणे 'लोपो व्योर्वलि' इति यलोपे अतेत् इति सिद्धम्।

---

४४५. अभ्यास के आदिभूत अकार को दीर्घ हो।

४४६. अजादि अङ्ग को आट् आगम हो लुङ् लङ् लृङ् पर रहते।

४४७. **अस्तिसिचोऽपृक्ते ७।३।९६ ॥** विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः ।

४४८. **इट ईटि ८।२।२८ ॥** इटः परस्य सस्य लोपः स्यादीटि परे । ( सिज्लोप एकादेशे सिद्धो वाच्यः ) । आतीत् । आतिष्टाम् ।

४४९. **सिजभ्यस्तविदिभ्यश्च ३।४।१०९ ॥** सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् । षिध गत्याम् ॥ ३ ॥

---

**अस्तिसिचोऽपृक्ते** । सिच्च असुचेति समाहारद्वन्द्वः । सिच्शब्दस्य सौत्रभत्वेन पदत्वबाधात्कुत्वाभावः । ततो विद्यमानार्थकेन अस्तीत्यव्ययेन कर्मधारयः । अस्तिसिचसः इति वक्तव्ये 'सुपां सुलुक्' इत्यादिना पञ्चम्याः लुक् । 'तस्मादित्युत्तरस्य' इति परिभाषया अस्तिसिचस इति पञ्चमी अपृक्ते इति सप्तम्याः षष्ठीं प्रकल्पयति । 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीत्यनुवर्तते । तस्य षष्ठ्यन्तत्वेन विपरिणामः । 'ब्रुव ईट्' इत्यत ईडित्यनुवर्तते ।

**इट ईटि** । 'संयोगान्तस्य लोपः' इत्यतो लोपःइति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते ।

**आतीत्** । अत्धातोर्लुङस्तिपि 'इतश्च' इतीकारलोपे च्लौ च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति सिच इडागमे 'अस्तिसिचोऽपृक्ते' इति ईडागमे 'आडजादीनाम्' इत्याडागमे 'आटश्च' इति वृद्धौ आतिस् ईत् इति स्थिते 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे आतीत् इति सिद्धम् ।

**सिजभ्यस्त** । 'झेर्जुस्' इति सूत्रम् 'नित्यं ङितः' इत्यतो ङित इति चानुवर्तते ।

**आतिषुः** । अत्धातोर्लुङो झौ च्लौ तस्य सिच्यनुबन्धलोपे इटि षत्वे 'आडजादीनाम्' इत्याटि वृद्धौ 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशेऽनुबन्धलोपे रुत्वे विसर्गे च तत्सिद्धिः ।

**आतिष्यत्** । अत्धातोर्लृङस्तिपि 'इतश्च' इतीकारलोपे 'स्यतासी लृलुटोः' इति स्यप्रत्यये तस्यार्धधातुकत्वे इटि षत्वे आटि वृद्धौ तत्सिद्धिः ।

---

४४७. विद्यमान सिच्प्रत्यय और असुधातु से पर अपृक्त हल् को ईट् आगम हो ।

४४८. इट् से पर स का लोप हो ईट् परे रहते ।

४४९. विद्यमान सिच्प्रत्यय अभ्यस्त और विद्धातु से पर झि के स्थान में जुस् आदेश हो ।

**४५०. ह्रस्वं लघु १।४।१० ॥**

**४५१. संयोगे गुरु १।४।११ ॥** संयोगे परे ह्रस्वं गुरु स्यात् ।

**४५२. दीर्घं च ७।४।१७ ॥** गुरु स्यात् ।

**४५३. पुगन्तलघूपधस्य च ७।३।८६ ॥** पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ।

**४५४. असंयोगाल्लिट् कित् १।२।५ ॥** असंयोगात्परोऽपिल्लिट् कित् स्यात् । सिषिधतुः । सिषिधुः सिषेधिथ । सिषिधथुः । सिषिध । सिषेध ।

---

**पुगन्त** । 'मिदेर्गुणः' इत्यतो गुण इत्यनुवर्तते । 'अङ्गस्य' इत्यधिकृतमवयवषष्ठ्यन्तमाश्रीयते । पुक् अन्तो यस्य तत् पुगन्तम् । लघ्वी उपधा यस्य तल्लघूपधम् । पुगन्तं च लघूपधं चेति समाहारद्वन्द्वात् षष्ठी । 'इको गुणवृद्धी' इत्यत इक इत्युपतिष्ठते । तच्च स्थानषष्ठ्यन्तम् ।

**सेधति** । षिध्धातोर्लटि । तत्स्थाने तिपि शपि अनुबन्धलोपे 'धात्वादेः षः सः' इति षस्य सत्वे 'पुगन्तलघूपधस्य च' इति गुणे सेधति इति सिद्धम् ।

**सिषेध** । षिध्धातोर्लिटि तत्स्थाने तिपि षस्य सत्वे 'लिट् च' इति तिप आर्धधातुकत्वेन शपोऽभावे 'परस्मैपदानाम्' इत्यादिना तिपो णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे पूर्वस्य अभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे 'पुगन्तलघूपधस्य च' इति गुणे षत्वे सिषेध इति सिद्धम् ।

**असंयोगात्** । अत्र 'सार्वधातुकमपित्' इत्यतः अपिदित्यनुवर्तते ।

**सिषिधतुः** । षिध्धातोर्लिटस्तसि षस्य सत्वे 'परस्मैपदानाम्' इत्यादिना तसः अतुसादेशे द्वित्वेऽभ्यासकार्ये सस्य षत्वे 'असंयोगाल्लिट् कित्' इति अतुसः कित्त्वेन 'पुगन्तलघूपधस्य च' इति प्राप्तस्य गुणस्य 'क्ङिति च' इति निषेधे रुत्वे विसर्गे च सिषिधतुः इति सिद्ध्यति ।

**सिषेधिथ** । षिध्धातोर्लिटः सिपि षस्य सत्वे 'परस्मैपदानाम्' इति सिपस्थलि द्वित्वेऽभ्यासकार्ये सस्य षत्वे 'लिट् च' इत्यार्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इति थल इडागमे 'पुगन्तलघूपधस्य च' इति गुणे सिषेधिथ इति सिद्धम् ।

---

४५०. ह्रस्व लघुसंज्ञक होता है ।

४५१. संयोग पर रहते ह्रस्व गुरुसंज्ञक होता है ।

४५२. दीर्घ भी गुरुसंज्ञक होता ।

४५३. पुक् अन्त में हो जिसके अथवा लघुभूतउपधा हो जिसकी ऐसा जो अङ्ग उसके इक् को गुण हो सार्वधातु आर्धधातुक पर रहते ।

४५४. असंयोग से पर पित् भिन्न लिट् कित् हो ।

सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवम्—चिती संज्ञाने ।४। शुच शोके ।५। गद व्यक्तायां वाचि ।६। गदति ।

४५५. **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ७।४।१७ ॥** उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णो गदादिषु परेषु । प्रणिगदति ।

४५६. **कुहोश्चुः ७।४।६२ ॥** अभ्यासकवर्गहकारयोश्चवर्गादेशः ।

४५७. **अत उपधायाः ७।२।११६ ॥** उपधाया अतो वृद्धिः स्यात् ञिति

---

**सिषिधिव** । षिध्धातोर्लिटो वसि षस्य सत्वे 'परस्मैपदानाम्' वसो वादेशे द्वित्वेऽभ्यासकार्ये सस्य षत्वे 'लिटि च' इति वस आर्धधातुकत्वादिडागमेऽनुबन्धलोपे 'असंयोगाल्लिटकित्' इति कित्त्वेन 'पुगन्तलघूपधस्य च' इति प्राप्तगुणस्य 'क्ङिति च' इति निषेधे तत्सिद्धिः ।

**असेधीत्** । षिध्धातोर्लुङस्तिपि षस्य सत्वे 'इतश्च' इतीकारलोपे अडागमे शपं बाधित्वा च्लौ च्लेः सिजादेशे गुणे सिच आर्धधातुकत्वेन 'आर्धधातुकस्येड्वलादेः' इति इडागमे 'अस्तिसिचोऽपृक्ते' इति ईडागमेऽनुबन्धलोपे 'वदव्रजहलन्तस्याचः' इति प्राप्तवृद्धेः 'नेटि' इति निषेधे 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे असेधीत् इति सिद्धम् ।

**नेर्गदनद** । अत्र 'रषाभ्यां नो णः समानपदे' इत्यतः रषाभ्यां नो ण इति 'उपसर्गादसमासेऽपि णोपदेशस्य' इत्यत उपसर्गादिति चानुवर्तते । उपसर्गपदमत्र उपसर्गस्थे लाक्षणिकम् ।

**प्रणिगदति** । प्रनिपूर्वाद् गद्धातोर्लटस्तिपि शपि अनुबन्धलोपे 'नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च' इति प्रोपसर्गस्थरेफात्परस्य नेर्नकारस्य णत्वे प्रणिगदति इति सिद्धम् ।

**कुहोश्चुः** । 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते ।

**अत उपधायाः** । 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति 'अचोञ्णिति' इत्यतः ञ्णिति इति चानुवर्तते ।

---

४५५. उपसर्ग में रहनेवाले जो णत्व के निमित्त रेफ षकार उनसे पर नि के नकार को ण हो गदादिधातु पर रहते ।

४५६. अभ्याससंज्ञक कवर्ग और हकार को चवर्गादेश हो ।

४५७. उपधाभूत ह्रस्व अ को वृद्धि हो ञित और णित् प्रत्यय पर रहते ।

णिति च प्रत्यये परे। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद।

**४५८. णलुत्तमो वा ७।१।९१॥** उत्तमो णल् वा णित्स्यात्। जगाद, जगद। जगदिव। जगदिम। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्।

**४५९. अतो हलादेर्लघोः ७।२।७॥** हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि। अगादीत्, अगदीत्। अगादिष्यत्। णद अव्यक्ते शब्दे।७।

---

**जगाद।** गद्धातोर्लिटस्तिपि 'परस्मैपदानाम्' इति तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य चुत्वेन जकारे जगद् अ इति स्थिते 'अत उपधाया' इति उपाधाभूताकारस्य वृद्धौ जगाद इति सिद्धम्।

**णलुत्तमो वा।** अत्र 'गोतो णित्' इत्यतो णिदित्यनुवर्तते।

**जगाद-जगद।** गद्धातोर्लिटो मिपि 'परस्मैपदानाम्' इति मिपो णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य चुत्वेन जकारे जगद् अ इति स्थिते 'णलुत्तमो वा' इति णलः पाक्षिके णित्त्वेन 'अत उपधायाः' इति वृद्धौ जगाद इति। णित्त्वाभावपक्षे जगद इति च सिद्धम्।

**अतो हलादेर्लघोः।** अत्र 'सिचि वृद्धिः परस्मैपदेषु' इति सूत्रम् 'नेटि' इत्यत इटीति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषेति चानुवर्तते।

**अगादीत्।** गद्धातोर्लुङस्तिपि 'इतश्च' इतीकारलोपे अटि शपं बाधित्वा च्लौ च्लेः सिच्यनुबन्धलोपे 'आर्धधातुकं शेषः' इति सिच आर्धधातुकत्वे 'आर्धधातुकस्येड्वलादेः' इति सस्य इडागमे 'अस्तिसिचोऽपृक्ते' इति तकारस्य ईडागमेऽनुबन्धलोपे अगद् इस् ईत् इति जाते 'अतो हलादेर्लघोः' इति पाक्षिकवृद्धौ 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे अगादीत् इति वृद्ध्यभावपक्षे अगदीत् इति च सिद्धम्।

**णद अव्यक्ते शब्दे।** अव्यक्तशब्दः अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः।

---

४५८. उत्तम पुरुष का णल् विकल्प से णित् होता है।

४५९. हलादि अङ्ग के अवयव भूत लघु अकार के स्थान में विकल्प से वृद्धि आदेश होता है इडादि परस्मैपद सिच् परे रहते।

**४६०. णो नः ६।१।६५ ॥** धात्वादेर्णस्य नः । णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्दनक्कनॄनृतः ।

**४६१. उपसर्गादसमासेपि णोपदेशस्य ८।४।१४ ॥** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः । प्रणदति । प्रणिनदति । नदति । ननाद ।

**४६२. अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२० ॥** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च

---

**णो नः** । ण इति षष्ठ्यन्तम् । 'धात्वादेः षः सः' इत्यतो धात्वादेरित्यनुवर्तते ।

**नदति** । णद् धातोर्लटस्तिपि शप्यनुबन्धलोपे 'णो नः' इति णस्य नकारे तत्सिद्धिः ।

'उपसर्गादसमासेऽपि णोपदेशस्य' इतिसूत्रोक्तणोपदेशपदेन के धातवो गृह्यन्त इत्याकाङ्क्षायां पूर्वमेवाह—**णोपदेशास्त्विति** । तथा च नर्द शब्दे । नट अवस्कन्दने चुरादिः । नाधृ नाथृ याञ्चादौ । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एतेभ्योऽष्टाभ्यो भिन्नाः णकारादिधातवः णोपदेशपदेनोच्यन्ते इति तदर्थः ।

**उपसर्गादसमासेऽपि** । रषाभ्यां नो णः इत्यनुवर्तते । अपिशब्दात्समासेऽपीत्यर्थः ।

**प्रणदति** । प्रोपसर्गपूर्वात् णद्धातोर्लटस्तिपि शप्यनुबन्धलोपे 'णो नः' इति णकारस्य नकारे 'उपसर्गादसमासेऽपि णोपदेशस्य' इति प्रोपसर्गस्थरेफात्परस्य नद्धातोर्नस्य णत्वे तत्सिद्धिः ।

**अत एकहल्मध्ये** । लिटीत्यावर्तते । पूर्वत्र निमित्तसप्तमी । परत्र परसप्तमी । एकशब्दोऽसहायवाची । ततश्च एकौ-असंयुक्तहलौ एकहलौ तयोर्मध्ये इति विग्रहः । अङ्गस्येत्यधिक्रियते । 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यत एदिति अभ्यासलोप इति 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्यतः कितीति चानुवर्तते ।

---

४६०. उपदेश अवस्था में धातु के आद्यवयव णकार के स्थान में नकार आदेश होता है ।

४६१. उपसर्ग में स्थित णत्व के निमत्तभूत रेफ षकार से परे णोपदेश धातु के नकार के स्थान में णकार होता है ।

४६२. लिट् को निमित्त मानकर जिसके आदि में कोई आदेश न हुआ हो उस अङ्ग के अवयवभूत असंयुक्त हलमध्यस्थ अकार के स्थान में एत्व होता है और अभ्यास का लोप होता है कित लिट परे रहते ।

किति लिटि । नेदतुः । नेदुः ।

**४६३. थलि च सेटि ६।४।१२१ ।।** प्रागुक्तं स्यात् । नेदिथ । नेद । ननाद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्, अनदीत् । अनदिष्यत् । टुनदि समृद्धौ ।८।

**४६४. आदिर्ञिटुडवः १।३।५ ।।** उपदेशे धातोराद्या एते इतः स्युः ।

**४६५. इदितो नुम् धातोः ७।१।५८ ।।** नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत । अर्च पूजायाम् ।९। अर्चति ।

---

**नेदतुः ।** णद्धातोर्लिटस्तसि णस्य नत्वे तस अतुसि द्वित्वेऽभ्यसकार्ये 'अत-एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वेऽभ्यासलोपे रुत्वे विसर्गे च नेदतुरिति सिद्धम् ।

**थलि च ।** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थ-स्यात एत्वं स्यादभ्यासलोपश्च सेटि थलि इति तदर्थः ।

**नेदिथ ।** णद्धातोर्लिटः सिपि णस्य नत्वे सिपस्थलादेशे द्वित्वेऽभ्यासकार्ये 'आर्धधातुकस्येड्वलादेः' इति थल इडागमे 'थलि च सेटि' इत्येत्वेऽभ्यासलोपे च नेदिथेति सिद्धम् ।

**अनादीत् ।** णद् इत्यस्य धातुत्वे 'णो नः' इति णस्य नत्वे लुङि तिपि 'इतश्च' इतीकारलोपे अटि शपं बाधित्वा च्लौ च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति इटि 'अस्तिसिचोऽपृक्ते' इति ईटि 'अतो हलादेर्लघोः' इति पाक्षिकवृद्धौ 'इट ईटि' इति सलोपे सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे अनादीत् इति । वृद्ध्यभावपक्षे अनदीत् इति च सिद्धम् ।

**आदिः ।** 'भूवादयो धातवः' इत्यतोऽनुवृत्तं धातव इति षष्ठ्या विपरिणम्यते । 'उपदेशेऽजनुनासिक इत्' इत्यत उपदेशे इति इदिति चानुवर्तते ।

**नन्दति ।** टुनद् इत्यस्य धातुत्वे 'आदिर्ञिटुडवः' इति टुइत्यस्येत्संज्ञायां लोपे ततो लटि तत्स्थाने तिपि शपि 'इदितो नुम् धातोः' इति नुम्यनुबन्धलोपे नन्दतीति सिद्धम् ।

---

४६३. यदि इट युक्त थल पर हो तो भी जिस अङ्ग के आद्यवयव के स्थान में लिट निमित्तक आदेश न हुआ हो उस अङ्ग के अवयव असंयुक्त तथा हलमध्यस्थ अकार के स्थान में एकार होता है तथा अभ्यास का लोप होता है ।

४६४. उपदेश अवस्था में धातु के आदि में ञि, टु, डु, की इत् संज्ञा होती है ।

४६५. ह्रस्व इकार की इत् संज्ञा हुई हो जिसके उसको नुम का आगम होता है ।

४६६. तस्मान्नुड् द्विहलः ७।४।७१ ॥ द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । व्रज गतौ ।१०। व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ।

४६७. वदव्रजहलन्तस्याचः ७।२।३ ॥ वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् । कटे वर्षावरणयोः ।११। कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कट्यात् ।

---

तस्मान्नुट् । द्वौ हलौ यस्य तस्येति विग्रहः । तच्छब्देन 'अत आदेः' इति कृतदीर्घ आकारः परामृश्यते ।

आनर्च । अर्च् धातोर्लिटस्तिपि 'परस्मैपदानाम्' इति तिपो णलि द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे 'अत आदेः' इत्यभ्यासाकारस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुट्यनुबन्धलोपे तत्सिद्धिः ।

आर्चीत् । अर्च् धातोर्लुङस्तिपि 'इतश्च' इतीकारलोपे आटि वृद्धौ च्लौ च्लेः सिच्यनुबन्धलोपे इटि ईटि च कृते 'इट ईटि' इति सलोपे सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे आर्चीदिति सिद्धम् ।

वव्राज । व्रज्धातोर्लिटस्तिपि तस्य णलि, द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति अभ्यास लोपे 'अत उपधायाः' इति वृद्धौ वव्राजेति सिद्धम् ।

वदव्रज । 'अङ्गस्य' इत्यधिक्रियते । 'सिचि वृद्धिः परस्मैपदेषु' इति सूत्रमनुवर्तते ।

अव्राजीत् । व्रज्धातोर्लुङस्तिपि इकारलोपे अटि च्लौ च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति इटि 'अस्तिसिचोऽपृक्ते' इति ईटि 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'इट ईटि' इति सलोपे सिज्लोपस्यासिद्धत्वाभावात्सवर्णदीर्घे अव्राजीत् इति सिद्धम् ।

चकाट । कट्धातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति कस्य चुत्वेन चकारे 'अत उपधायाः' इति वृद्धौ चकाट इति सिद्धम् ।

---

४६६. दीर्घाभूत अकार से परे दो हल् वाले अङ्ग को नुट् का आगम होता है ।

४६७. वद्, व्रज और हलन्त अङ्गावयव अच् के स्थान में वृद्धि आदेश होता है सिच् परे रहते परस्मैपद में ।

**४६८. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५** ॥ हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादो सिचि । अकटीत् । अकटिष्यत् । गुपू रक्षणे ।१२।

**४६९. गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८** ॥ एभ्य आयः प्रत्ययः स्यात् स्वार्थे ।

**४७०. सनाद्यन्ता धातवः ३।१।३२** ॥ सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः । धातुत्वाल्लडादयः । गोपायति ।

**४७१. आयादय आर्धधातुके वा ३।१।३१** ॥ आर्धधातुकविवक्षाया-

---

**ह्म्यन्तक्षण** । अत्र 'सिचिवृद्धिः' इति 'नेटि' इति चानुवर्तते । ततश्च हान्त मान्त यान्त क्षण श्वस जागृ ण्यन्त श्वि एदित् एषां वृद्धिर्न स्यादिडादौ सिचि इति तदर्थः ।

**अकटीत्** । कट्धातोर्लुङस्तिपि इकारलोपे लटि च्लौ च्लेः सिचि इडागमे च 'अतो हलादेर्लघोः' इति वृद्धौ प्राप्तायां 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति तन्निषेधे 'इट ईटि' इति सलोपे सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घे अकटीत् इति सिद्धम्!

**सनादय इति** । सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा !

यगायेयङ्णिङश्चेति द्वादशामी सनादयः ।

**गोपायति** । गुप् इत्यस्मात् 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति आयप्रत्यये 'आर्धधातुकं शेषः' इति तस्यार्धधातुकत्वेन 'पुगन्तलधूपस्य च' इति गुणे 'सनाद्यन्ता धातवः' इति गोपाय इत्यस्य धातुसंज्ञायां धातुत्वाल्लटि लटस्तिपि शपि 'अतो गुणे' इति पररूपे गोपायति इति सिद्धम् ।

**आयादयः** । आर्धधातुके इत्यत्र विषयसप्तमी । आय इयङ् णिङ् एते त्रय आयादयः ।

---

४६८. हकारान्त मकारान्त और णकारान्त तथा क्षण, श्वस, जागृ ण्यन्त, श्वि, और एदित धातुओं के वृद्धि आदेश नहीं होता इडादि सिच् परे रहते ।

४६९. गुपू धूप, विच्छ, पणि, पनि, इन पाँच धातुओं से आय प्रत्यय होता है स्वार्थ में,

४७०. जिस धातु के अन्त में सन् क्यच, काम्यच, क्यङ् क्यष्, आचार क्विप, णिच, यङ्, यक, आय, इयङ् णिङ् ये वारह प्रत्यय हुए हों और कम से णिङ् प्रत्यय तक जिनके अन्त में हों वे सब धातु संज्ञक होते हैं ।

४७१. आर्धधातुक की विवक्षा में धातु से आय्, इयङ् और णिङ् प्रत्यय विकल्प से होते हैं ।

मायादयो वा स्युः (कास्यनेकाच आम् वक्तव्यः)। लिटि आस्कासोराम् विधानान्मस्य नेत्त्वम्।

४७२, **आतो लोपः** ६।४।४८ ॥ आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके।

४७३. **आमः** २।१।८१ ॥ आमः परस्य लुक्।

४७४. **कृञ्चानुप्रयुज्यते लिटि** ३।१।४० ॥ आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि।

४७५. **उरत्** ७।४।६६ ॥ अभ्यासऋवर्णस्यात् स्यात् प्रत्यये। रपरः। हलादिः शेषः। वृद्धिः। गोपायाञ्चकार। द्वित्वात्परत्वाद्यणि प्राप्ते।

---

**अतो लोपः**। 'आर्धधातुके' इत्यधिक्रियते। 'अनुदात्तोपदेश' इत्या उपदेशइत्यनुवर्तते। आर्धधातुके इत्यावर्तते। एकमुपदेशेऽन्वेवि। द्वितीयं तु लोपे परनिमित्तम्।

**आमः**। 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यतो लुगित्यनुवर्तते।

**कृञ्चानु**। 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यत आमित्यनुवृत्तं पञ्चम्या विपरिणम्यते। प्रत्ययग्रहणपरिभाषया तदन्तविधिः। कृञ् इत्यनेन कृभ्वस्तीनां ग्रहणम्।

**उरत्**। उः अत् इति च्छेदः। 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यसस्येत्यनुवर्तते। 'अङ्गस्य' इत्यधिक्रियते। तद्वशात्प्रत्यये परत इति लभ्यते। प्रत्यये परत एवाङ्गसंज्ञाविधानात्।

**गोपायाञ्चकार**। गुप् इत्यस्मात् 'आयादय आर्धधातुके वा' इत्यत आयप्रत्यये तस्यार्धधातुकत्वात् 'पुगन्तलघूपधस्य च' इति गुणे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लिटि 'कास्यनेकाच आम्वक्तव्यः' इत्याम्प्रत्यये लिटि आस्कासोराम्विधानान्मकारस्येत्वाभावे 'अतो लोपः' इत्यल्लोपे 'आमः' इति लिटो लुकि लिटः कृत्वात्प्रत्ययलक्षणेन गोपायामित्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ 'आमः' इति तस्यापि

---

(वा) कास् और अनेकाच् धातुओं से आम् प्रत्यय कहना चाहिए।

४७२. आर्धधातुक परे होने पर उपदेश में जो अदन्त अङ्ग उसके अकार का लोप होता है आर्धधातुक परे रहते।

४७३. आम् से परे लकार का लुक् होता है।

४७४. आम प्रत्यय के पश्चात् कृभुअस् धातुओं का अनुप्रयोग होता है और उसके पर लिट् का भी अनुप्रयोग होता है।

४७५. अभ्यास ऋवर्ण के स्थान में अत् होता है।

४७६. **द्विर्वचनेऽचि १।१।५९ ॥** द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ।

४७७. **एकाच उपदेशेऽनुदात्तात् ७।२।१० ॥** उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न ।

ऊदॄदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ।

कान्तेषु शक्लेकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु प्रच्छेकः । जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज् यज् युज् रुज् रञ्ज्वि-

---

लुकि 'कृञ्चानुप्रयुज्यते लिटि इति लिट्परकृप्रयोगे लिटस्तिपो णलि कृइत्यस्य द्वित्वेऽभ्यासत्वे 'उरत्' इत्यभ्यासऋकारस्य अकारे रपरत्वे 'हलादिः शेषः' इति रलोपे 'कुहोश्चुः' इति कस्य चुत्वेन चकारे मस्यानुस्वारे 'वा पदान्तस्य' इति पाक्षिकेऽनुस्वारस्य परसवर्णे ञकारे परत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'अत उपधायाः' इति वृद्धौ गोपायाञ्चकार इति सिद्धम् ।

**द्विर्वचनेऽचि** । 'अचः परस्मिन्पूर्वविधौ' इत्यतः अचः इति 'स्थानिवदादेशोऽनल्विधौ' इत्यत आदेश इति 'न पदान्तद्विर्वचन' इत्यतो नेति चानुवर्तते । द्विर्वचन इत्यावर्तते । पूर्वस्य द्वित्वनिमित्ते इत्यर्थः, परस्य द्वित्वे कर्त्तव्ये इत्यर्थः ।

**गोपायाञ्चक्रतुः** । गुप् इत्यस्मादायप्रत्यये गुणे धातुत्वाल्लिटि आम्प्रत्ययेऽल्लोपे लिटो लुकि लिट्परकृप्रयोगे लिटस्तसोऽतुसि गोपायाम् कृ अतुस् इति स्थिते द्वित्वापेक्षया परत्वाद् यणि प्राप्ते 'द्विर्वचनेऽचि' इति तन्निषेधे द्वित्वेऽभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे 'हलादिः शेषः' इति रलोपे चुत्वेऽनुस्वारे परसवर्णे यणि रुत्वे विसर्गे च तत्सिद्धिः ।

**एकाच उपदेशे** । 'ऋत इद्धातोः' इत्यतो धातोरिति 'नेड्वशि कृति' इत्यतो नेडिति चानुवर्तते । वलादेरार्धधातुकस्येति तु फलितार्थकथनमनुवृत्त्यसम्भवात् । तत्र केऽनुदात्ता इत्याकाङ्क्षायाह-ऊदॄदन्तैरित्यादिना । ऊकारान्त ॠकारान्त यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि वृङ् वृञ् एतान्धातून्विहाय एकाचः अजन्तधातवः अनुदात्ताः इति तदर्थः । हलन्तेषु तु शक्ल इत्यारभ्य वह् पर्यन्ता एकाचस्त्र्यधिकशतधातवोऽनुदात्ताः मूलोक्ता एव ।

---

४७६. द्वित्व निमित्तक अच् परे रहते अच् आदेश नहीं होता यदि द्वित्व करना हो तब ।

४७७. उपदेश अवस्था में एकाच् और अनुदात्त धातु से परे आर्धधातुक को इट् का आगम नहीं होता ।

जिर्स्वञ्ज्सञ्जसृजः पञ्चदश । दान्तेषु अद् क्षुद् छिद् तुद् नुद् पद्यभिद्विद्य-तिविनद्विन्दशद्सद्स्विद्यस्कन्दहदः षोडश । धान्तेषु क्रुधक्षुध्बुध्यबन्धयुध्-रुध्राधव्यधसाधशुध्सिध्या एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप्-छुपक्षिप्तपतिप्तृप्यदृप्यलिप्लुप्वपशप्स्वप्सृपस्त्रयोदश । भान्तेषु यभ्रभ्-लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्ते क्रुशदंशदिश्दृश्मृश्रिश्-रुशलिश्विश्स्पृशो दश । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्-श्लिष्या एकादश । सान्तेषु घस्वसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्-रुह्लिह्वहोष्टौ ।

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम् ।

गोपायाञ्चकर्थ । गोपायाञ्चक्र । गोपायाञ्चकार, गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः जुगुपुः ।

**४७८. स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४ ॥** स्वरत्यादेरूदितश्च

---

**गोपायाञ्चकर्थ** । गुप् इत्यस्मादायप्रत्यये गुणे धातुत्वाल्लिटि आम्प्रत्ययेऽल्लोपे लिटो लुकि लिट्परकृञोऽनुप्रयोगे लिटः सिपस्थलि कृञो द्वित्वेऽभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे 'हलादिः शेषः' इति लोपे चुत्वेऽनुस्वारे परसवर्णे गोपायाञ्चकृ थ इति स्थिते 'आर्धधातुकस्येड्वलादेः' इति इडागमे प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति तन्निषेधे 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे गोपायाञ्चकर्थ इति सिद्धम् ।

**गोपायाम्बभूव** । गुप् इत्यस्मात्पाक्षिके आयप्रत्यये गुणे धातुत्वाल्लिटि आम्प्र-त्यये अल्लोपे लिटो लुकि लिट्परभूप्रयोगे लिटस्तिपो णलि वुकि द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे ह्रस्वेऽत्वे जश्त्वे तत्सिद्धिः ।

**गोपायामास** । गुप् इत्यस्मादायप्रत्यये गुणे लिटि आमि अल्लोपे लिटो लुकि लिट्परे असः प्रयोगे लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये 'अत आदेः' इति दीर्घे सवर्णदीर्घे तत्सिद्धिः ।

**जुगोप** । गुप् इत्यस्माद् धातोरायप्रत्ययाभावपक्षे लिटि तत्स्थाने तिपि तिपो णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे हलादेः शेषे 'कुहोश्चुः' इति चुत्वे 'पुगन्तलघूप-धस्य च' इति गुणे तत्सिद्धिः ।

**स्वरति** । 'आर्धधातुकस्येड्वलादेः' इत्यनुवर्तते ।

---

४७८. स्वृ, षू, सूयति, धूञ और ऊदित धातुओं से परे वलादि आर्धधातुक को इट् का आगम होता है विकल्प से ।

परस्य वलादेरार्धधातुकस्येड् वा स्यात्। जुगोपिथ, जुगोप्थ। गोपायिता, गोप्ता। गोपायिष्यति, गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्। गोपाय्यात्। गुप्यात्। अगोपायीत्।

**४७९. नेटि ७।२।३॥** इडादौ सिचि हलन्तस्य वृद्धिर्न। अगोपीत्, अगौप्सीत्।

**४८०. झलो झलि ८।२।२६॥** झलः परस्य सस्य लोपो झलि। अगौ-

---

**जुगोपिथ।** गुप् धातोरायप्रत्ययाभावपक्षे लिटि तत्स्थाने सिपि 'परस्मैपदानाम्' इति सिपस्थलादेशे द्वित्वेऽभ्यासत्वे हलादेः शेषे 'कुहोश्चुः' इति चुत्वे पुगन्तलघूपधस्य च' इति गुणे 'स्वरतिसूतिसूयतिधूञूदितो वा' इति पाक्षिके इटि अनुबन्धलोपे जुगोपिथ-जुगोप्थ इति रूपद्वयं सिद्धम्।

**गोपायिता।** गुप् इत्यस्मात् 'आयादय आर्धधातुके वा' इत्यायप्रत्यये 'पुगन्तलघूपस्य च' इति गुणे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लुटि तत्स्थाने तिपि तास्प्रत्यये तास आर्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इति इडागमे 'अतो लोपः' इत्यल्लोपे तिपो डादेशेऽनुबन्धलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे गोपायिता इति सिद्ध्यति, आयप्रत्ययाभावपक्षे गुपो लुटस्तिपि तास्यार्धधासुकत्वे 'स्वरतिसूतिसूयतिधूञूदितो वा' इति पाक्षिके इडागमेऽनुबन्धलोपे गुणे तिपो डादेश डित्त्वात् टिलोपे गोपिता गोप्ता इति रूपद्वयं सिद्ध्यति।

**नेटि।** 'सिचि वृद्धिः परस्मैपदेषु' इति 'वदव्रजहलन्तस्याचः' इत्यतो हलन्तस्येति चानुवर्तते।

**अगोपायीत्।** गुप् इत्यस्मादायप्रत्यये गुणे धातुत्वाल्लुङि अडागमे तिपि च्लौ च्लेः सिजादेशे 'इतश्च' इतोकारलोपे इटि ईटि 'अतो लोपः' इत्यल्लोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे अगोपायीत् इति सिद्ध्यति। आयप्रत्ययाभावपक्षे तु गुपो लुङस्तिपि इकारलोपे च्लौ च्लेः सिचि अटि 'स्वरतिसूतिसूयतिधूञूदितो वा' इति पाक्षिके ईटि नित्यत्वाद् गुणं बाधित्वा 'वदव्रजहलन्तस्याचः' इति वृद्धौ प्राप्तायाम् 'नेटि' इति तन्निषेधे गुणे सलोपे सवर्णदीर्घे अगोपीत् इति। इडभावपक्षे 'वदव्रजहलन्तस्याचः' इति वृद्धौ अगौप्सीत् इति च सिद्धम्।

**झलो झलि।** 'संयोगान्तस्य लोपः' इत्यतो लोपः' इति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते।

---

४७९. इडादि सिच् परे रहते हलन्त अङ्ग को वृद्धि नहीं होती।

४८०. झल् से परे सकार का लोप होता है उससे परे झल् होने पर।

प्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व ।
अगौप्स्म । अगोपायिष्यत् अगोप्स्यत् । क्षि क्षये ।१३। क्षयति । चिक्षाय ।
चिक्षियतुः चिक्षियुः । एकाच इति निषेधे प्राप्ते ।

**४८१. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३ ॥** क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोपि स्यात् ।

**४८२. अचस्तास्वत्थल्यनिटो नित्यम् ७।२।६१ ॥** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न ।

**४८३. उपदेशेऽत्वतः ७।२।६२ ॥** उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण् न स्यात् ।

---

**अगौप्ताम्** । गुपूधातोर्लुङस्तसि अटि तसस्तामादेशे च्लौ च्लेः सिचि अनुबन्धलोपे 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'झलो झलि' इति सलोपे अगौप्ताम् इति सिद्ध्यति ।

**चिक्षाय** । क्षिधातोर्लिटस्तिपो णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति चुत्वे 'अचोञ्णिति' इति वृद्धौ आयादेशे चिक्षाय इति सिद्धम् ।

**चिक्षियतुः** । क्षिधातोर्लिटस्तस अतुसादेशे द्वित्वेऽभ्यासत्वे हलादेः शेषे 'कुहोश्चुः' इति चुत्वे 'अचिश्नुधातु' इत्यादिना इयङादेशेऽनुबन्धलोपे रुत्वे विसर्गे च तत्सिद्धिः ।

**कृसृभृ** । 'नेड्वशि कृति' इत्यतो नेडिति अनुवर्तते । क्रादीनामनुदात्तत्वान्निषेधे सिद्धे नियमार्थमिदं सूत्रम् ।

**अचस्तास्वत्** । 'न वृद्भ्यश्चतुर्भ्यः' इत्यतः न इति 'गमेरिट् परस्मैपदेषु' इत्यत इडिति चानुवर्तते । 'एकाच' इति निषेधस्य 'कृसृभृ' इति नियमेन बाधात् इटः प्राप्तौ निषेधार्थमिदम् ।

**उपदेशे** । 'अचस्तास्वत्' इत्यतः तास्वत्थल्यनिटो नित्यमिति 'न वृद्भ्यश्च' इत्यतः नेति 'गमेरिट्' इत्यत इडित चानुवर्तते ।

---

४८१. कृसृभृवृस्तुद्रुस्रुश्रु इन आठ धातुओं से ही पर लिट् को इट् न हो । इन से भिन्न अनिट से भी पर लिट् को इट् हो ।

४८२. तास् पर रहते नित्य अनिट् तथा उपदेश काल में अजन्त जो धातु उससे पर थल् को इट् न हो ।

४८३. तासपर रहते नित्य अनिट् तथा उपदेश काल में अकारवान् जो धातु उससे पर थल् को इट् न हो ।

**४८४. ऋतो भारद्वाजस्य ७।२।६३ ॥** तासौ नित्यानिट् ऋदन्तादेव थलो नेट् भारद्वाजस्य मते। तेन अन्यस्य स्यादेव। अयमत्र संग्रहः—

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्।

चिक्षयिथ, चिक्षेथ। चिक्षियथुः। चिक्षिय। चिक्षाय, चिक्षय। चिक्षियिव। चिक्षियिम। क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्।

**४८५. अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५ ॥** अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये, न तु कृत्सार्वधातुकयोः। क्षीयात्।

**४८६. सिचि वृद्धिः परस्मैपदेषु ७।२।१ ॥** इगन्ताङ्गस्य वृद्धिः स्यात्

---

**ऋतः**। ऋदन्तस्य अजन्तत्वादेव निषेधे सिद्धे नियमार्थमिदम्। नियमफलन्त्वन्यव्यावृत्तिरित्यभिप्रेत्याह **तेनेति**।

**चिक्षयिथ**। क्षिधातोर्लिटः सिपि तस्य 'परस्मैपदानाम्' इत्यादिना थलादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति चुत्वे 'एकाच उपदेशेऽनुदात्तात्' इति इटो निषेधे प्राप्ते 'ऋतो भारद्वाजस्य' इति नियमात् पाक्षिके इडागमेऽनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽयादेशे चिक्षयिथ इति। इडभावपक्षे गुणे चिक्षेथ इति च सिद्धम्।

**अकृत्**। 'अङ्गस्य' इत्यधिक्रियते। 'अयङ्यि क्ङिति' इत्यतः यीति सप्तम्यन्तमनुवर्तते। अङ्गाक्षिप्तप्रत्ययविशेषणात्तदादिविधिः। 'अचश्च' इति परिभाषया अच उपस्थित्या तदन्तविधिः।

**क्षीयात्**। क्षिधातोराशीर्लिङस्तिपि 'इतश्च' इतीकारलोपे यासुडागमेऽनुबन्धलोपे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे क्षीयात् इति सिद्धम्।

**सिचि वृद्धिः**। 'अङ्गस्य' इत्यधिक्रियते 'इको गुणवृद्धी' इति परिभाषया इक इत्युपतिष्ठते। तदन्तविधिः।

---

४८४. तास् पर रहते नित्य अनिट् जो ऋकारान्तधातु उसीसे पर थल् को इट् न हो भारद्वाज के मत में। अर्थात् अन्य के मत में इट् हो।

( संग्रह ) तास पर रहते अनिट् जो अजन्त और अकारवान् धातु वह थल् पर रहते विकल्प से सेट् हो। जो ऋकारान्त धातु तास् पर रहते नित्य अनिट् हो वह थल पर रहते नित्य अनिट् हो। क्रादि से भिन्न धातु लिट् में सेट् हो।

४८५. अजन्त अङ्ग को दीर्घ होता है! यकारादि प्रत्यय परे रहते कृत सार्वधातुक को छोड़कर।

४८६. परस्मैपद सिच् परे रहते इगन्त अङ्ग को वृद्धि होती है।

परस्मैपदे सिचि । अक्षैषीत् । अक्षेष्यत् । तप संतापे ।१४। तपति । ततापं । तेपतुः । तेपिथ ततप्थ । तेपिव । तेपिम । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् । क्रमु पादविक्षेपे ।१५।

४८७. **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** ३।१।७० ॥ एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ।

४८८. **क्रमः परस्मैपदेषु** ७।३।७८ ॥ क्रमो दीर्घः परस्मैपदे शिति । क्राम्यति, क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु, क्रामतु ।

---

**अक्षैषीत्** । क्षिधातोर्लुङस्तिपि अडागमेऽनुबन्धलोपे इकारलोपे च्लौ च्लेः सिचि 'अस्तिसिचोऽपृक्ते' इति ईटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ षत्वे तत्सिद्धिः ।

'अक्षैष्टाम्, अक्षैषुः । अक्षैषीः, अक्षैष्टम्, अक्षैष्ट । अक्षैषम्, अक्षैष्व, अक्षैष्म ।

**तेपतुः** । तप्धातोर्लिटस्तसि तस्य अतुसि द्वित्वेऽभ्यासत्वे हलादेः शेषे 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वेऽभ्यासलोपे च रुत्वे विसर्गे तेपतुरिति सिद्धम् ।

**तेपिथ** । तपो लिटः सिपस्थलि द्वित्वेऽभ्यासकार्ये 'एकाच उपदेशेऽनुदात्तात्' इति इटो निषेधे प्राप्ते 'ऋतो भारद्वाजस्य' इति नियमात्पाक्षिके इटि 'थलि च सेटि' इति एत्वेऽभ्यासलोपे तेपिथ इति इडभावपक्षे ततप्थ इति च सिद्धम् ।

**अताप्सीत्** । तपो लुङस्तिपि अटि इकारलोपे च्लौ च्लेः सिचि ईडागमेऽनुबन्धलोपे 'वदव्रजहलन्तस्याचः' इति वृद्धौ अताप्सीत् इति सिद्धम् ।

**अताप्ताम्** । तपो लुङस्तसस्तामादेशेऽडागमे च्लौ च्लेस्सिजादेशे 'वदव्रज' इति वृद्धौ 'झलो झलि' इति सलोपे तत्सिद्धिः ।

**वा भ्राश** । 'दिवादिभ्यः श्यन्' इत्यतः श्यन् इति 'कर्त्तरि शप्' इत्यतः कर्त्तरीति 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते ।

**क्रमः** । 'शमामष्टानां दीर्घः श्यनि' इत्यतो दीर्घ इति 'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीति चानुवर्तते ।

**क्राम्यति** । क्रम्धातोर्लटस्तिपि शपं बाधित्वा 'वाभ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इति पाक्षिके श्यन्प्रत्ययेऽनुबन्धलोपे 'क्रमः परस्मैपदेषु' इति दीर्घे क्राम्यति इति । श्यनोऽभावे शपि दीर्घे क्रामति इति च सिद्धम् ।

---

४८७. भ्रास, म्लास, भ्रमु, क्रमु, क्लमु, त्रस, त्रुटि और लष धातुओं से श्यन् प्रत्यय होता है विकल्प से, कर्तृवाच्य सार्वधातुक परे रहते । पक्षमें शप् होता है ।

४८८. क्रम धातु को दीर्घ आदेश होता है परस्मैपद शित् प्रत्यय परे रहते ।

अक्राम्यत्, अक्रामत् । क्राम्येत्, क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यद् । पा पाने ।१६।

४८९. **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** ७।३।७८ ।। पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ।

४९०. **आत औ णलः** ७।१।३४ ।। आदन्ताद्धातोर्णल औकारदेशः स्यात् । पपौ ।

४९१. **आतो लोप इटि च** ६।४।६४ ।। अजाद्योरार्धधातुकयोः क्ङिदिटोः

---

**अक्रमीत्** । क्रम्धातोर्लुङस्तिपि अडागमे इकारलोपे च्लौ च्लेः सिचि इटि ईटि 'वदव्रजहलन्तस्याचः' इति प्राप्तवृद्धेः 'नेटि' इति निषेधे 'अतो हलादेर्लघोः' इति प्राप्तवृद्धेः 'ह्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति निषेधे 'इट ईटि' इति सलोपे दीर्घे अक्रमीत् इति सिद्धम् ।

**पाघ्राध्मा** । 'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीत्यनुवर्तते ।

**पिबति** । पाधातोर्लटस्तिपि शपि 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति पा इत्यस्य पिबादेशे तस्य अदन्तत्वात् 'पुगन्तलघूपधस्य च' इति गुणाभावे 'अतो गुणे' इति पररूपे पिबति इति सिद्धम् ।

**पपौ** । पाधातोर्लिटस्तिपि तस्य 'परस्मैपदानाम्' इति णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे 'आत औ णलः' इति णल औकारादेशे 'वृद्धिरेचि' इति वृद्धौ पपौ इति सिद्धम् ।

**आतो लोप इटि च** । 'आर्धधातुके' इत्यधिक्रियते । 'दीङो युडचि क्ङिति' इत्यतः अचि क्ङिति इत्यनुवर्तते । तदादिविधिः ।

---

४८९. पा, घ्रा, ध्मा, स्था, म्ना, दाण, दृशि, ऋ, सृ, शद्, सद् धातुओं के स्थान में क्रम से पिव, जिघ्र, धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय, सीद, आदेश होते हैं, इत्संज्ञक सकारादि प्रत्यय परे रहते । पिब आदेश अदन्त है अतः लघूपधन न होने से गुण नहीं होता ।

४९०. आकारान्त धातु से परे णल् के स्थान में औकार आदेश होता है

४९१. अजादि आर्धधातुक कित्, ङित, इट, परे रहते दीर्घाकार का लोप होता है ।

परयोरातो लोपः । पपतुः । पपुः । पपिथ । पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ।

४९२. **एर्लिङि ६।४।६७ ॥** घुसंज्ञकाना मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् ।

४९३. **आतः ३।४।११० ॥** सिज्लुकि आदन्तादेव झेर्जुस् ।

४९४. **उस्यपदान्तात् ६।१।९६ ॥** अपदान्तादकारादुसि परे पररूपमेकादेशः । अपुः । अपास्यत् । ग्लै हर्षक्षये ।१७। ग्लायति ।

---

**पपतुः** । पाधातोर्लिटस्तसिः तसः 'परस्मैपदानाम्, इति अतुसादेशे द्वित्वेऽभ्यासत्वे ह्रस्वे 'आतो लोप इटि च' इति आलोपे रुत्वे विसर्गे तत्सिद्धिः ।

**पपिथ** । पाधातोर्लिटः सिपस्थलि द्वित्वेऽभ्यासत्वे ह्रस्वे 'एकाच' इति इटो निषेधे प्राप्ते 'ऋतो भारद्वाजस्य' इति नियमात्पाक्षिके इटि 'आतो लोप इटि च' इत्यालोपे पपिथ इति । इडभावे पपाथ इति च सिद्धम् ।

**पपिव** । पाधातोर्लिटो वसि तस्य वादेशे द्वित्वेभ्यासत्वे ह्रस्वे 'एकाच' इत्यादिना इण्निषेधे प्राप्ते क्रादिनियमान्नित्ये इटि आलोपे पपिव इति सिद्धम् । एवं पपिम इति ।

**एर्लिङि** । 'आर्धधातुके' इत्यधिक्रियते । घुमास्थागापाजहातिसामित्यनुवर्तते । 'दीङो युडचि क्ङिति' इत्यतः कितीति चानुवर्तते ।

**पेयात्** । पाधातोराशीर्लिङस्तिपि 'लिङाशिषि' इति तिप आर्धधातुकत्वे इकारलोपे यासुटि 'किदाशिषि' इति यासुटः कित्त्वे 'स्कोः' इति सलोपे 'एर्लिङि' इत्येत्वे पेयात् इति सिद्धम् ।

**अपात्** । पाधातोर्लुङस्तिपि अटि इकारलोपे च्लौ च्लेः सिचि 'गातस्थाघुपाभूभ्यः सिचः परस्मैदेषु' इति सिचो लुकि तत्सिद्धिः ।

**उस्यपदान्तात्** । 'एकः पूर्वपरयोः' इत्यधिक्रियते । आद् गुणः' इत्यत आदिति 'एङि पररूपम्' इत्यतः पररूपमिति चानुवर्तते ।

**अपुः** । पाधातोर्लुङो झौ अडागमे सिचि तस्य लुकि 'आतः' इति झेर्जुसादेशेऽनुबन्धलोपे 'उस्यपदान्तात्' इति पररूपे रुत्वे विसर्गे अपुः इति सिद्धम् ।

---

४९२. घुसंज्ञक और मा स्था गा पा ओहाक् षोन्तकर्मणि इन धातुओं के आकारको एकार हो आर्धधातुक कित् लिङ् पर रहते ।

४९३. सिच् का लोप होने पर आदन्त धातु से ही झि के स्थान में जुस् आदेश होता है ।

४९४. अपदान्त अकार से उस् परे रहते पूर्वपर के स्थान में पररूप एकादेश होता है ।

**४९५. आदेच उपदेशेऽशिति ६।१।४५ ॥** उपदेशे एजन्तस्य धातोरात्वं, न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ।

**४९६. वाऽन्यस्य संयोगादेः ६।४।६८ ॥** घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि । ग्लेयात्, ग्लायात् ।

**४९७. यमरमनमातां सक् च ७।२।७३ ॥** एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । ह्वृ कौटिल्ये ।१८। ह्वरति ।

---

**जग्लौ** । ग्लैधातोर्लिटस्तिपो णलि 'आदेच उपदेशेऽशिति' इति आत्वे द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति लोपे ह्रस्वे चुत्वे 'आत औ णलः' इत्यौकारे वृद्धौ जग्लौ इति साधुः ।

**वाऽन्यस्य** । 'आर्धधातुके' इत्यधिक्रियते । 'एर्लिङि' इति । 'आतो लोपे इटि च' इत्यतः आत इति 'दीङो युडचि क्ङिति' इत्ततः कितीति चानुवर्तते । 'घुमास्थागापाजहातिसां हलि' इति सूत्रस्य प्रकृतत्वात् तेभ्योऽन्यस्येति लभ्यते ।

**ग्लेयात्** । ग्लैधातोराशीर्लिङस्तिपि इकारलोपे यासुटि 'किदाशिषि' इति यासुटः कित्त्वे 'आदेच उपदेशेऽशिति' इत्यात्वे 'वाऽन्यस्य संयोगादेः' इत्येत्वे 'स्कोः' इति सलोपे ग्लेयात् इति । एत्वाभावे ग्लायात् इति च सिद्धम् ।

**यमरम** । 'इडत्यर्तिव्ययतीनाम्' इत्यतः इडिति 'अञ्जेः सिचि, इत्यतः सिचीति 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इत्यतः परस्मैपदेष्विति चानुवर्तते । सिचीत्यस्य षष्ठ्यन्तत्वेन विपरिणामः ।

**अग्लासीत्** । ग्लैधातोर्लुङस्तिपि इकारलोपे अटि च्लौ च्लेस्सिचि आत्वे ईडागमे 'यमरमनमातां सक् च' इति सकि सिच इडागमे च कृतेऽनुबन्धलोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे अग्लासीत् इति सिद्धम् ।

अग्लासिष्टाम् । अग्लासिषुः । अग्लासीः । अग्लासिष्टम् । अग्लासिष्ट । अग्लासिषम् । अग्लासिष्व । अग्लासिष्म ।

---

४९५. उपदेश अवस्था में एजन्त धातु के आकार अन्तादेश होता है यदि शित् परे न हो ।

४९६. घुसंज्ञक और मा स्था गा पा ओहाक् षोन्तकर्मणि इन से भिन्न जो संयोगादि धातु उनके आकार को एकार हो विकल्प से आर्धधातुक कित् लिङ् पर रहते ।

४९७. यम, रम, नम, और आकारान्त धातु का अवयव सक् आगम होता है और इनसे परस्मैपद में सिच् को इट् आगम होता है ।

**४९८. ऋतश्च संयोगादेर्गुणः ७।४।१०॥** ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि। उपधाया वृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। जह्वरथुः। जह्वर। जह्वार, जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता।

**४९९. ऋद्धनोः स्ये ७।२।७०॥** ऋतो हन्तेश्च स्यस्येट्। ह्वरिष्यति। ह्वरतु। अह्वरत्। ह्वरेत्।

**५००. गुणोऽर्तिसंयोगाद्योः ७।४।२९॥** अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च। ह्वर्यात्।

---

**ऋतश्च**। अङ्गस्येत्यधिक्रियते। 'दयतेर्दिगि लिटि' इत्यतो लिटीत्यनुवर्तते।

**जह्वार**। ह्वृधातोर्लिटस्तिपो णलि द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरे 'हलादिः शेषः' इति लोपे चुत्वे जश्त्वे 'अचो ञ्णिति' इति प्राप्तां वृद्धिं परत्वाद्बाधित्वा 'ऋतश्च संयोगादेर्गुणः' इति गुणे रपरे 'अत उपधायाः' इति वृद्धौ जह्वार इति साधु।

**जह्वरतुः**। ह्वृधातोर्लिटस्तसोऽतुसि द्वित्वेऽभ्यासकार्ये अतुसः कित्त्वाद् गुणाभावे प्राप्ते 'ऋतश्च संयोगादेर्गुणः' इति गुणे रपरे रुत्वे विसर्गे तत्सिद्धिः।

**जह्वर्थ**। ह्वृधातोर्लिटः सिपस्थलि द्वित्वेऽभ्यासकार्ये क्रादिनियमात्प्राप्तस्य इटः 'अचस्तास्वत्थल्यनिटो नित्यम्' इति निषेधे गुणे रपरे तत्सिद्धिः।

**जह्वरिव**। ह्वृधातोर्लिटो वसि तस्य वादेशे द्वित्वेऽभ्यासकार्ये क्रादिनियमादिटि गुणे रपरे तत्सिद्धिः।

**ऋद्धनो**। 'इडत्यर्तिव्ययतीनाम्' इत्यत इडित्यनुवर्तते।

**ह्वरिष्यति**। ह्वृधातोर्लृटस्तिपि स्यप्रत्यये आर्धधातुकत्वे 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे प्राप्ते 'ऋद्धनोः स्ये' इतीटि गुणे रपरे षत्वे तत्सिद्धिः।

**गुणोऽर्ति**। अङ्गस्येत्यधिक्रियते। 'रीङ् ऋतः' इत्यतः ऋत इत्यनुवर्तते। तदन्तविधिः। 'रिङ्शयग्लिङ्क्षु' इत्यतः यक् लिङ् इत्यनुवर्तते। 'अकृत्सार्वधातुकयोः' इत्यतः असार्वधातुक इत्यनुवर्तते। तेनार्धधातुक इति लभ्यते। 'अयङ् यि क्ङिति' इत्यतो यीत्यनुवर्तते। तदादिविधिः।

**ह्वर्यात्**। ह्वृधातोराशीर्लिङस्तिपि इकारलोपे यासुटि तस्यार्धधातुकत्वे कित्त्वे

---

४९८. ऋकारान्त जो संयोगादि अङ्ग उसको गुण हो लिट् पर रहते।

४९९. ऋकारान्त और हन् धातु के स्य का अवयव इट् होता है।

५००. ऋधातु और संयोगादि जो ऋदन्त धातु उसको गुण हो यक् और यादि आर्धधातुक लिङ् पर रहते।

अह्वार्षीत् । अह्वरिष्यत् । श्रु श्रवणे ।१९।

**५०१. श्रुवः शृ च ३।१।७४॥** श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ।

**५०२. सार्वधातुकमपित् १।२।४॥** अपित्सार्वधातुकं ङिद्वत् । शृणुतः ।

**५०३. हुश्नुवोः सार्वधातुके ६।४।८७॥** हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि ।

---

च 'स्कोः' इति सलोपे यासुटः कित्त्वाद्गुणाभावे प्राप्ते 'गुणोऽर्त्तिसंयोगाद्योः' इति गुणे रपरे तत्सिद्धिः ।

**अह्वार्षीत्** । ह्वृधातोर्लुङस्तिपि इकारलोपे अटि च्लौ च्लेः सिचि 'अस्तिसिचोऽपृक्ते' इति ईडागमे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरे षत्वे तत्सिद्धिः ।

अह्वार्ष्टाम् । अह्वार्षुः । अह्वार्षीः । अह्वार्ष्टम् । अह्वार्ष्ट । अह्वार्षम् । अह्वार्ष्व । अह्वार्ष्म ।

**श्रुवः** । 'स्वादिभ्यः श्नुः' इत्यतः श्नुरित्यनुवर्तते ।

**शृणोति** । श्रुधातोर्लटस्तिपि शपि प्राप्ते तम्प्रबाध्य 'श्रुवः शृ च' इति श्नुप्रत्यये अनुबन्धलोपे णत्वे श्रुवः शृ इत्यादेशे 'सार्वधातुकार्धधातुकयोः' इति गुणे तत्सिद्धिः ।

**सार्वधातुकमपित्** । 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यतो ङिदित्यनुवर्त्तते ।

**शृणुतः** । श्रुधातोर्लटस्तसि शपं बाधित्वा 'श्रुवः शृ च' इति श्नुप्रत्यये श्रुवः शृइत्यादेशे च णत्वे 'सार्वधातुकमपित्' इति तसो ङित्त्वाद् गुणाभावे रुत्वे विसर्गे तत्सिद्धिः ।

**हुश्नुवोः** । 'एरनेकाच' इत्यतः अनेकाचोऽसंयोगपूर्वस्येति 'ओः सुपि' इत्यत ओरिति 'इणो यण्' इत्यतो यणिति 'अचिश्नुधातु' इत्यतः अचीति चानुवर्तते ।

**शृण्वन्ति** । श्रुधातोर्लटो झिप्रत्यये शपं बाधित्वा 'श्रुवः शृ च' इति श्नुप्रत्यये श्रुवः शृइत्यादेशे णत्वे झस्यान्तादेशे ङित्त्वाद् गुणाभावे 'अचि श्नुधातु' इति प्राप्तमुवङादेशं बाधित्वा 'हुश्नुवोः सार्वधातुके' इति यणि शृण्वन्ति इति सिद्धम् ।

---

५०१. कर्ता अर्थ में सार्वधातुक के परे रहते श्रु धातु के स्थान में शृ आदेश होता है और शप् को बाँधकर श्नु प्रत्यय होता है ।

५०२. तिप, सिप, मिप से भिन्न सार्वधातुक प्रत्यय ङित् होते हैं ।

५०३. हुधातु और श्नुप्रत्ययान्त जो अनेकाच् अङ्ग उसके असंयोगपूर्वक उवर्ण को यण् हो अजादि सार्वधातुक पर रहते ।

**५०४. लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७ ॥** असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः। शृण्वः, शृणुवः। शृण्मः, शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव, शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु शृणुतात्। शृणुताम्। शृण्वन्तु।

**५०५. उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६ ॥** असंगपूर्वात् प्रत्ययोतो हेर्लुक्। शृणु, शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व, अशृणुव। अशृण्म, अशृणुम। शृणुयात्। शृणुयाताम्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्। गम्लृ गतौ।२०।

---

**लोपश्च।** अत्र 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति सूत्रमनुवर्तते। षष्ठ्यन्तत्वेन विपरिणामः।

**शृण्वः।** श्रुधातोर्लटः वस्प्रत्यये शपं बाधित्वा 'श्रुवः शृ च' इति श्नुप्रत्यये श्रुवः शृ इत्यादेशे च 'लोपश्चास्यान्यतरस्यां म्वोः' इति श्नुप्रत्ययोकारस्य पाक्षिके लोपे णत्वे रुत्वे विसर्गे शृण्वः इति। लोपाभावे शृणुवः इति च सिद्धम्।

**शुश्राव।** श्रुधातोर्लिटस्तिपो णलि द्वित्वेऽभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे 'अचो ञ्णिति' इति वृद्धौ आवादेशे तत्सिद्धिः।

**शुश्रोथ।** श्रुवो लिटः सिपस्थलि द्वित्वेऽभ्याससंज्ञायां हलादेः शेषे 'एकाच उपदेशेऽनुदात्तात्' इति इण्निषेधे णत्वे गुणे तत्सिद्धिः।

**उतश्च।** 'अतो हेः' इत्यतो हेरिति 'चिणो लुक्' इत्यतो लुगिति चानुवर्तते।

**शृणु।** श्रुधातोर्लोटः सिपि शपं बाधित्वा 'श्रुवः शृ च' इति श्नुप्रत्यये श्रुवः शृ इत्यादेशे णत्वे सेर्हौ हेर्वैकल्पिके तातङादेशेऽनुबन्धलोपे शृणुतात् इति। तातङोऽभावपक्षे तु 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुकि शृणु इति च सिद्धम्।

**शृणवानि।** श्रुधातोर्लोटो मिपि शपं बाधित्वा श्नुप्रत्यये श्रुवः शृ इत्यादेशे मेर्न्यादेशे 'आडुत्तमस्य पिच्च' इति आडागमेऽनुबन्धलोपे गुणेऽवादेशे तत्सिद्धिः।

**अश्रौषीत्।** श्रुधातोर्लुङस्तिपि इकारलोपेऽडागमे च्लौ च्लेः सिचि 'अस्तिसिचोऽपृक्ते' इति इटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ षत्वे अश्रौषीत् इति सिद्धम्।

---

५०४. असंयोग पूर्व प्रत्यय के उकार का लोप होता है मस, वस, प्रत्यय परे रहते।

५०५. असंयोग पूर्व उकारान्त प्रत्यय से परे हि का लोप होता है।

**५०६. इषगमियमां छः ७।३।७७ ॥** एषां छः स्यात् शिति । गच्छति । जगाम ।

**५०७. गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८ ॥** एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः, जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता ।

**५०८. गमेरिट् परस्मैपदेषु ७।२।५८ ॥** गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ।

---

**इषगमि ।** 'इषु' इति उदित्पाठोऽनार्ष इति शेखरः । 'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीत्यनुवर्तते ।

**गच्छति ।** गम्धातोर्लटस्तिपि शपि 'इषगमियमां छः' इति मस्य छादेशे 'छे च' इति तुकि श्चुत्वे गच्छति इति सिद्धम् ।

**जगाम ।** गम्धातोर्लिटस्तिपो णलि द्वित्वेऽभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति चुत्वे 'अत उपाधायाः' इति वृद्धौ तत्सिद्धिः ।

**गमहन ।** 'ऊदुपधाया गोहः' इत्यत उपधाया इति । 'अचि श्नुधातु' इत्यतः अचीति चानुवर्तते । तदादिविधिः ।

**जग्मतुः ।** गम्धातोर्लिटस्तसः अतुसि द्वित्वे अभ्यासकार्ये 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपे रुत्वे विसर्गे तत्सिद्धिः ।

**गमेरिट् ।** 'आर्धधातुकस्येड्वलादेः' इत्यत आर्धधातुकस्येति 'सेऽसिचि कृतचृतच्छृदतृदनृतः' इत्यतः से इति चानुवर्तते । तदादिविधिः ।

**गमिष्यति ।** गम्धातोर्लृटस्तिपि स्यप्रत्यये आर्धधातुकत्वे 'एकाच' इतीण्निषेधे प्राप्ते 'गमेरिट् परस्मैपदेषु' इति इडागमे षत्वे तत्सिद्धिः ।

**गच्छेत् ।** गमो विधिलिङस्तिपि इकारलोपे शपि 'इषगमियमां छः' इति छादेशे तुकि चुत्वे यासुटि 'अतो येयः' इति यास इयादेशे गुणे 'लोपो व्योर्वलि' इति यलोपे तत्सिद्धिः ।

---

५०६. इष, गम, और यम धातुओं के छकार अन्तादेश होता है शित प्रत्यय परे रहते ।

५०७. गम, हन, जन, खन, घस, धातुओं के उपधा का लोप होता है अजादि कित्, ङित् प्रत्यय परे रहते अङ को छोड़कर ।

५०८. गम धातु से परे सकारादि आर्धधातुक को इट् का आगम होता है परस्मैपद परे रहते ।

**५०९. पुषादिद्युताद्य्लृदितः परस्मैपदेषु ३।१।५५ ॥** श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् ।

इति परस्मैपदिनः ।

**५१०. टित आत्मनेपदानां टेरे ३।४।७९ ॥** टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ।

**५११. आतो ङितः ७।२।८१ ॥** अतः परस्य ङितामाकास्य इय् स्यात् । एधेते । एधन्ते ।

**५१२. थासः से ३।४।८० ॥** टितो लस्य थासः से स्यात् ।

---

**पुषादि** । 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यतोऽङीति चानुवर्तते ।

**अगमत्** । गमो लुङस्तिपि इकारलोपे अटि च्लौ सिचं बाधित्वा 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति च्लेरङि अनुबन्धलोपे 'गमहन' इति सूत्रे अनङीतिपर्युदासादुपधालोपाभावे अगमत् इति सिद्धम् ।

**अथात्मनेपादिनः ।**

**टित आत्मनेपदानाम्** । अत्र 'लस्य' इत्यधिक्रियते ।

**एधते** । एध्धातोर्लटि तत्स्थाने तप्रत्यये 'कर्त्तरि शप्' इति शपि 'टित आत्मनेपदानां टेरे' इति एत्वे तत्सिद्धिः ।

**अतो ङितः** । 'अतो येयः' इत्यतः अत इति इय इति चानुवर्तते ।

**एधेते** । 'एध्धातोर्लटः' आताम् प्रत्यये 'सार्वधातुकमपित्' इति तस्य ङित्त्वे शपि 'आतो ङितः' इत्याकारस्य इयादेशे गुणे यलोपे टेरेत्वे तत्सिद्धिः ।

**एधन्ते** । एधो लटो झप्रप्यये शपि झत्यान्तादेशे 'अतो गुणे' इति पररूपे 'टित आत्मनेपदानां टेरे' इति एत्वे तत्सिद्धिः ।

**थासः** । अत्र 'लस्य' इत्यधिक्रियते 'टित आत्मनेपदानां टेरे' इत्यतः टित इत्यनुवर्त्तते ।

---

५०९. श्यन् है विकरण जिसका उस पुषादि द्युतादि और लृदित धातुओं से परे च्लि के स्थान में अङ् आदेश होता है ।

५१०. टित् लकार लट्, लिट्, लुट्, लृट्, लोट्, सम्बन्धी आत्मनेपद प्रत्यय के टि के स्थान में एकार होता है ।

५११. अकार से परे ङित् सार्वधातुक के अवयव आकार के स्थान में इय आदेश होता है ।

५१२. टित् लकार के स्थान में जो थास प्रत्यय उसके स्थान में से आदेश होता है ।

एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ।

**५१३. इजादेश्च गुरुमतोऽनृच्छः ३।१।३६ ॥** इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ।

**५१४. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १।३।६३ ॥** आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ।

**५१५. लिटस्तझयोरेशिरेच् ३।४।८१ ॥** लिडादेशयोस्तझयोरेश् इरेजेतौ स्तः । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ।

**५१६. इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८।३।७८ ॥** इणन्तादङ्गात्परेषां

---

**एधसे** । एधो लटः थासि शपि 'थासः से' इति थासः से इत्यादेशे तत्सिद्धिः ।

**एधेथे** । एधो लट आथाम्प्रत्यये शपि 'आतोङितः' इति आकारस्य इयादेशे गुणे 'लोपो व्योर्वलि' इति यलोपे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे तत्सिद्धिः ।

**एधे** । एधो लट इट्प्रत्यये शपि 'टित आत्मनेपदानां टेरे' इति इट एत्वे कृते 'अतो गुणे' इति पररूपे 'एधे' इति सिद्धम् ।

**एधावहे** । एधो लटो वहिप्रत्यये शपि 'अतो दीर्घो यञि' इति दीर्घे टेरेत्वे तत्सिद्धिः ।

**इजादेश्च** । 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यतो धातोरिति 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यत आमिति लिटीति चानुवर्तते ।

**एधाञ्चक्रे** । एधधातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परकृप्रयोगे परगामिनि क्रियाफले कृञः परस्मैपदे प्राप्ते 'आम्प्रयवत्कृञोऽनुप्रयोगस्य' इति आत्मनेपदत्वात् तप्रत्यये 'लिटस्तझयोरेशिरेच्' इति तस्येशादेशेऽनुबन्धलोपे **'असंयोगाल्लिट् कित्' इति कित्त्वाद् गुणाभावे** द्वित्वात्परत्वाद्यणि प्राप्ते 'द्विर्वचनेचि' इति तन्निषेधे द्वित्वेऽभ्यासकार्ये अनुस्वारे परसवर्णे यणि एधाञ्चक्रे इति सिद्धम् ।

**इणः षीध्वम्** । 'अपदान्तस्य मूर्धन्यः' इत्यधिक्रियते ।

---

५१३. ऋच्छ धातु को छोड़कर अन्य गुरु वर्ण वाले इजादि धातुओं से आम प्रत्यय होता है लिट् परे रहते ।

५१५. लिट् के स्थान में जो आदेश रूप त झ उसके स्थान में क्रम से एश् और ईरेच आदेश होते हैं ।

५१६. इणन्त अङ्ग से परे लुङ् लिट् सम्बन्धी सीध्वं के धकार के स्थान में ढकार होता है ।

षीध्वंलुङ्लिटां धस्य ढः स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

**५१७. धि च ८।२।२५ ॥** धादौ प्रत्यये परे सस्य लोपः । एधिताध्वे ।

**५१८. ह एति ७।४।५२ ॥** तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ।

**५१९. आमेतः ३।४।९० ॥** लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ।

---

**एधाञ्चकृढ्वे ।** एध्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्यये 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परकृञोऽनुप्रयोगे लिटो ध्वमि द्वित्वेऽभ्यासकार्ये 'टित आत्मनेपदानां टेरे' इति टेरत्वे 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इति धस्य ढत्वे अनुस्वारे परसवर्णे च कृते तत्सिद्धिः ।

**धि च ।** 'सः स्यार्धधातुके' इत्यतः स इति 'तासस्त्योर्लोपः' इत्यतो लोपे इति चानुवर्तते । 'अङ्गस्य' इत्यस्याधिकारात्प्रत्यय इत्यस्याक्षेपः । तदादिविधिः ।

**एधिताध्वे ।** एधुधातोर्लुटो ध्वमि टेरेत्वे तास्प्रत्यये तस्यार्धधातुकत्वादिटि 'धि च' इति तासः सस्य लोपे तत्सिद्धिः ।

**ह इति ।** 'तासस्त्योर्लोपः' इत्यतः तासस्त्योरिति 'स स्यार्धधातुके' इत्यतः स इति चानुवर्तते ।

**एधिताहे ।** एधो लुट इटि 'टित आत्मनेपदानां टेरे' इति इट एत्वे कृते तास्प्रत्यये तस्यार्धधातुकत्वादिटि 'ह एति' इति सस्य हकारे तत्सिद्धम् ।

**आमेतः ।** 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते ।

**एधताम् ।** एधधातोर्लोटः तप्रत्यये टेरेत्वे शपि 'आमेतः' इत्यामि तत्सिद्धिः ।

**एधेताम् ।** एधधातोर्लोट आतामि टेरेत्वे शपि 'सार्वधातुकमपित्' इति ङित्त्वात् 'आतो ङितः' इत्याकारस्य इयादेशे गुणे 'लोपो व्योर्वलि' इति यलोपे 'आमेतः' इति एकारस्य आमि तत्सिद्धिः ।

---

५१७. धादि प्रत्यय परे रहते तास के सकार का लोप होता है ।

५१८. तास और अस्ति के सकार के स्थान में हकार होता है ऐकार परे रहते ।

५१९. लोट् के एकार के स्थान में आम होता है ।

**५२०. सवाभ्यां वामौ ३।४।९१ ॥** सवाभ्यां परस्य लोडेतः क्रमाद्वामौ स्तः। एधस्व। एधेथाम्। एधध्वम्।

**५२१. एत ऐ ३।४।९३ ॥** लोडुत्तमस्य एत ऐ स्यात्। एधै। एधावहै। एधामहै। आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि।

**५२२. लिङः सीयुट् ३।४।१०२ ॥**सलोपः। एधेत। एधेयाताम्।

**५२३. झस्य रन् ३।४।१०५ ॥** लिङो झस्य रन् स्यात्। एधेरन्।

---

**सवाभ्याम्।** 'लोटो लङ्वत्' इत्यतो लोट इति 'आमेतः' इत्यत एत इति चानुवर्तते।

**एधस्व।** एधो लोटस्थासि शपि 'थासः से' इति थासः से इत्यादेशे आमं बाधित्वा 'सवाभ्या वामौ' इति एकारस्य वादेशे तत्सिद्धिः।

**एधध्वम्।** एधो लोट। ध्वमि टेरत्वे शपि आमं बाधित्वा 'सवाभ्यां वामौ' इति एकारस्य अमादेशे एधध्वमिति सिद्धम्।

**एत ऐ।** 'लोटो लङ्वत्' इत्यतो लोट इति 'आडुत्तमस्य पिच्च' इत्यत उत्तमस्येति चानुवर्त्तते।

**एधै।** एधो लोट इटि तस्य एत्वे शपि आमं बाधित्वा 'एत ऐ, इति एकारस्य ऐकारे 'आडुमस्य पिच्च' इति आटि 'आटश्च' इति वृद्धौ 'वृद्धिरेचि' इति वृद्धौ एधै इति सिद्धम्।

**एधावहै।** एधधातोर्लोटो वहिप्रत्यये एत्वे शपि आमं बाधित्वा 'एत ऐ' इत्येकारस्य ऐकारे 'आडुत्तमस्य पिच्च' इति आटि सवर्णदीर्घे तत्सिद्धिः।

**ऐधत।** एधोर्लङस्तप्रत्यये शपि 'आडजादानाम्' इति आटि वृद्धौ तत्सिद्धिः।

**एधेत।** एधधातोर्विधिलिङः तप्रत्यये शपि 'लिङः सीयुट्' इति सीयुटि अनुबन्धलोपे 'लिङ' सलोपोऽनतन्त्यस्य' इति सलोपे गुणे 'लोपो व्योर्वलि' इति यलोपे तत्सिद्धिः।

**एधेरन्।** एधधातोर्लिङो झप्रत्यये 'झस्य रन्' इति झस्य रनि शपि सीयुटि सलोपे गुणे यलोपे एधेरन् इति सिद्धम्।

---

५२०. स व से परे लोट् के एकार के स्थान में क्रम से व और अम् आदेश होते हैं।

५२१. लोट् के उत्तम पुरुष के एकार के स्थान में ऐ आदेश होता है।

५२२. लिङ् को सीयुट् आगम होता है आत्मनेपद में।

४२३. लिङ् लकार के झ के स्थान में रन् आदेश होता है।

एधेथाः। एधेयाथाम्। एधेध्वम्।

**५२४. इटोऽत् ३।४।१०६॥** लिङादेशस्य इटोऽत्स्यात्। एधेय। एधेवहि। एधेमहि।

**५२५. सुट् तिथोः ३।४।१०७॥** लिङस्तथोः सुट्। यलोपः। आर्धधातुकत्वात्सलोपो न। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्।

**५२६. आत्मनेपदेष्वनतः ७।१।५॥** अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात्। एधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्।

---

**एधेय**। एधधातोर्लिङ इटि तस्य 'इटोऽत्' इति अकारे सीयुटि 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे गुणे तत्सिद्धिः।

**एधिषीष्ट**। एधधातोराशीर्लिङस्तप्रत्यये 'लिङाशिषि' इति तस्यार्धधातुकत्वे 'लिङः सीयुट्' इति सीयुटि आर्धधातुकत्वात्सीयुटः सकारस्य 'लिङः सलोपोऽनन्त्यस्य' इति सलोपाभावे 'सुट् तिथोः' इति सुटि इडागमे 'लोपो व्योर्वलि' इति यलोपे सीयुट्सुटोः सस्य षत्वे तकारस्य ष्टुत्वेन टकारे तत्सिद्धिः।

**एधिषीयास्ताम्**। एधधातोराशीर्लिङ आतामि सीयुटि 'सुट्तिथोः' इति सुटि इटि षत्वे तत्सिद्धिः।

**एधिषीरन्**। एध आशीर्लिङो झ प्रत्यये झस्य रति सीयुटि इटि यलोपे षत्वे तत्सिद्धिः।

**ऐधिष्ट**। एधधातोर्लुङस्तप्रत्यये च्लौ च्लेः सिचि इटि आदिवृद्धौषत्वे ष्टुत्वे तत्सिद्धिः।

**आत्मनेपदेषु**। 'झोऽन्तः' इत्यतो झ इति 'अदभ्यस्तात्' इत्यतः अदिति चानुवर्तते। आत्मनेपदेष्वितिषष्ठ्यर्थे सप्तमी।

**एधिषत**। एधधातोर्लुङो झप्रत्यये 'आत्मनेपदेष्वनतः' इति झस्य अत् इत्यादेशे च्लौ च्लेः सिचि इडागमे आटि वृद्धौ षत्वे तत्सिद्धिः।

**ऐधिढ्वम्**। एधो लुङो ध्वमि च्लौ च्ले, सिचि इटि आटि वृद्धौ 'धि च' इति सलोपे 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इति धस्य ढत्वे तत्सिद्धिः।

---

५२४. लिङ् के स्थान में जो इट् उसको अकार होता है।

५२५. लिङ् के तकार थकार को सुट् का आगम होता है।

५२६. जो नकार से परे न हो उस झकार के स्थान में अत् आदेश होता है आत्मनेपद में।

ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। कमु कान्तौ। २।

**५२७. कमेर्णिङ् ३।१।३०॥** स्वार्थे। ङित्त्वात्तङ्। कामयते।

**५२८. अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५॥** आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। कामयाञ्चक्रे। आयादय इति णिङ् वा। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे। चकमे। चकमिवहे। चकमिमहे। कामयिता। कामयितासे। कमिता। कामयिष्यते, कमिष्यते। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट।

**५२९. विभाषेटः ८।३।७९॥** इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः। कामयिषीढ्वम्। कामयिषीध्वम्। कमिषीष्ट। कमिषीध्वम्।

---

**कामयते।** कम् इत्यस्मात् 'कमेर्णिङ्' इति णिङ्प्रत्ययेऽनुबन्धलोपे उपधावृद्धौ 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि ङित्त्वादात्मनेपदत्वेन तप्रत्यये शपि गुणेऽयादेशे टेरेत्वे तत्सिद्धिः।

**अयामन्त।** 'णेरनिटि' इत्यतो णेरित्यनुवर्तते।

**कामयाञ्चक्रे।** कम् इत्यस्माद् 'आयादय आर्धधातुके वा' इति पाक्षिके णिङि उपधावृद्धौ 'सनाद्यन्ता' इति धातुत्वाल्लिटि 'कास्यनेकाच आम्वक्तव्यः, इत्यामि 'सार्वधातुकार्धधातुकयोः' इति प्राप्तगुणं बाधित्वा 'णेरनिटि' इति णिलोपे प्राप्ते 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति णेरयादेशे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परकृञोऽनुप्रयोगे लिटः तप्रत्यये एशि द्वित्वेऽभ्यासकार्ये यणि तत्सिद्धिः। णिङोऽभावपक्षे लिटस्ते एशि द्वित्वेऽभ्यासकार्ये चकमे इति सिद्ध्यति।

**विभाषेटः।** 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इति सूत्रमनुवर्तते।

**कामयिषीढ्वम्।** कमः 'आयादय' इति पाक्षिके णिङि उपधावृद्धौ धातुत्वाल्लिङोध्वम्प्रत्यये सीयुटि इटि गुणेऽयादेशे षत्वे यलोपे 'विभाषेटः' इति वैकल्पिके

---

५२७. कम् धातु को णिङ् का आगम होता है स्वार्थ में।

५२८. आम, अन्त, आलु, आय, इत्नु, इष्णु से परे णि के स्थान में अय आदेश होता है।

५२९. इण से परे जो इट् उससे परे सीध्वं और लुङ् लिट् सम्बन्धी धकार के स्थान में ढकार आदेश होता है विकल्प से।

५३०. **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८ ॥** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे। अकामि अ त इति स्थिते।

५३१. **णेरनिटि ६।४।५१ ॥** अनिडादावार्धधातुके परे णेर्लोपः स्यात्।

५३२. **णौ चङ्युपधाया ह्रस्वः ७।४।१ ॥** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्।

५३३. **चङि। ६।१।११ ॥** चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य।

५३४. **सन्वल्लघुनि चङ्परेऽनग्लोपे। ७।४।९३ ॥** चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति।

५३५. **सन्यतः ७।४।७९ ॥** अभ्यासस्यात इत् स्यात् सनि।

---

ढत्वे कामयिषीढ्वम् इति ढत्वाभावे कामयिषीध्वमिति णिङभावे कमिषीध्वम् इति च सिद्धम्।

**णिश्रि।** 'च्लि लुङि' इत्यतो लुङीति 'च्लेः सिच्' इत्यतः च्लेरिति चानुवर्तते।

**णेरनिटि।** 'आर्धधातुके' इत्यधिक्रियते। 'अतो लोपः' इत्यतो लोप इत्यनुवर्तते।

**चङि।** 'एकाचो द्वे प्रथमस्य' इति 'अजादेर्द्वितीयस्य इति धातोरनभ्यासस्य इति चानुवर्तते।

**सन्यतः।** 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येति 'भृञामित्' इत्यत इदिति चानुवर्तते।

---

५३०. ण्यन्त और णि, श्री, द्रु, स्रु, से परे च्लि के स्थान में चङ् आदेश होता है कर्ता अर्थ में लुङ् परे रहते।

५३१. अनिडादि आर्धधातुक परे रहते णि का लोप होता है।

५३२. चङ् परक णि परे रहते जो अङ्ग उसकी उपधा को ह्रस्व होता है।

५३३. अभ्यास धातु के अवयव प्रथम एकाच को द्वित्व होता है चङ् परे रहते और अजादि धातु के द्वितीय एकाच को द्वित्व होता है।

५३४. चङ् परक णि पर रहते जो अङ्ग उसका जो लघु परक अभ्यास उसको सन् पर रहते जैसा कार्य होता हो वैसा हो यदि चङ् पर णि पर रहते अक् का लोप न हुआ हो।

५३५. अभ्यास अकार के स्थान में इकार होता है सन् परे रहते।

**५३६. दीर्घो लघोः ७।४।९४ ॥** लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये। अचीकमत। णिङभावपक्षे—(कमेश्च्लेश्चङ् वाच्यः)। अचकमत। अकामयिष्यत, अकमिष्यत। अय गतौ।३। अयते।

**५३७. उपसर्गस्यायतौ ८।२।१९ ॥** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते।

**५३८. दयायासश्च ३।१।३७ ॥** दय् अय् आस् एभ्य आम् स्याल्लिटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्। आयत। अयेत। अयिषीष्ट। विभाषेटः। अयिषीढ्वम्, अयिषीध्वम्। आयिष्ट। आयिढ्वम्, आयिध्वम्।

---

**दीर्घो लघोः।** 'अत्र लोऽभ्यासस्य' इत्यतोऽभ्यासस्येति 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यतो लघुनि चङ्परेऽनग्लोपे इति चानुवर्तते।

**अचीकमत।** कमः 'आयादय' इति पाक्षिके णिङि उपधावृद्धौ धातुत्वाल्लुङ्स्तप्रत्ययेऽटि च्लौ च्लेः सिजादेशं बाधित्वा 'णिश्रिदुश्रुभ्यः कर्त्तरि चङ्' इति च्लेश्चङि अकामि अत इति स्थिते 'णेरनिटि' इति णेर्लोपे 'णौचङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'चङि' इति द्वित्वेऽभ्या सत्वे हलादेः शेषे चुत्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इति अभ्यासाकारस्य इकारे 'दीर्घोलघोः' इति दीर्घे अचीकमत इति। णिङ्भावपक्षे तु 'कमेश्च्लेश्चङ्वाच्यः' इति चोङ द्वित्वेऽभ्यासकार्ये अचकमय इति च सिद्धम्।

**उपसर्गस्य।** 'कृपो रो लः' इत्यतो रोल इत्यनुवर्तते।

**प्लायते।** प्रपूर्वादय्धातोर्लटस्तप्रत्यये शपि टेरेत्वे दीर्घे 'उपसर्गस्यायतौ' इत्युपसर्गरेफस्य लत्वे प्लायते इति सिद्धम्। एवं पलायत इत्याद्यपि।

**दयायासश्च।** 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यत आमिति लिटीति चानुवर्तते।

**अयाञ्चक्रे।** अय्धातोर्लिटि 'दयायासश्च' इति आमि 'आमः' इति लिटो लुकि लिट्परकृञोऽनुप्रयोगे तप्रत्यये एशि द्वित्वेऽभ्यासकार्ये यणि तत्सिद्धिः।

**अयिषीढ्वम्।** अय्धातोर्लिङो ध्वम्प्रत्यये सीयुटि इटि षत्वे यलोपे 'विभाषेटः' इति पक्षिके ढत्वे अयिषीढ्वम्-अयिषीध्वम् इति रूपद्वयं सिद्धम्।

---

५३६. लघु के अभ्यास को दीर्घ होता है सन्वद्भाव के विषय में (वा०) कम धातु से परे च्लि को चङ् होता है।

५३७. अयति से परे जो उपसर्ग उसका जो रेफ उसके स्थान में लकार आदेश होता है।

५३८. दय्, अय, आस, धातुओं से आम प्रत्यय होता है लिट् परे रहते।

आयिष्यते । द्युत दीप्तौ ।४। द्योतते ।

**५३९. द्युतिस्वाप्योः सम्प्रसारणम् ७।४।६७ ॥** अनयोरभ्यासस्य सम्प्रसारणं स्यात् । दिद्युते ।

**५४०. द्युद्भ्यो लुङि ३।४।९१ ॥** द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादीत्यङ् । अद्युतत्, अद्योतिष्ट । अद्योतिष्यत । एवम् । श्विता वर्णे ।५। ञिमिदा स्नेहने ।६। ञिष्विदा स्नेहनमोचनयोः ।७। मोहनयोरित्येके । ञिक्ष्विदा चेत्येके । रुच दीप्तावभिप्रीतौ च ।८। घुट परिवर्तने ।९। शुभ दीप्तौ ।१०। क्षुभ संचलने ।११। णभ तुभ हिंसायाम् ।१२-१३। स्रंसु भ्रंसु ध्वंसु अवस्रंसने ।१४-१५-१६। ध्वंसु गतौ च। स्रम्भु विश्वासे ।१७। वृतु वर्तने ।१८। वर्तते । ववृते ।

**५४१. वृद्भ्यः स्यसनोः १।३।९२ ॥** वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ।

**५४२. न वृद्भ्यश्चतुर्भ्यः ७।२।५९ ॥** वृतुवृधुशृधुस्यन्दूभ्यः सकारा-

---

**द्योतते** । द्युतधातोर्लटस्तप्रत्यये शपि 'पुगन्त' इति गुणे टेरेत्वे तत्सिद्धिः ।

**द्युतिस्वाप्योः** । 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते ।

**दिद्युते** । द्युतो लिटस्तप्रत्यये द्वित्वेऽभ्यासत्वे 'द्युतिस्वाप्योः सम्प्रसारणम्' इति सम्प्रसारणे पूर्वरूपे 'हलादिः शेषः' इति लोपे एशि तत्सिद्धिः ।

**अद्युतत्** । द्युतधातोर्लुङि 'द्युद्भ्यो लुङि 'इति परस्मैपदत्वाल्लुङस्तिपि इकारलोपे अटि च्लौ 'पुषादि द्युताद्यॢदितः परस्मैपदेषु' इति' च्लेरङि ङित्त्वाद् गुणाभावे अद्युतत् इति । परस्मैपदत्वाभावपक्षे तु तप्रत्यये च्लेः सिचि इटि गुणे षत्वे ष्टुत्वे अद्योतिष्टेति च सिद्धम् ।

**वृद्भ्यः** । 'शेषात्कर्तरि परस्मैपदम्' इत्यतः परस्मैपदमिति 'वा क्यषः' इत्यतो वेति चानुवर्तते ।

**न वृद्भ्यः** । 'सेऽसिचिकृतचृतछृदतृदनृतः' इत्यतः से इति 'आर्धधातुकस्येड्-

---

५३९. द्युति और ण्यन्त स्वप धातु के अभ्यास को सम्प्रसारण होता है ।

५४०. द्युतादिगण पठित धातुओं से जो लुङ् उससे परस्मैपद होता है विकल्प से ।

५४१. वृतादि जो पाँच धातु उनसे परस्मैपद होता है स्य और श्यनि परे रहते ।

५४२. वृतु, वृधु शृधु, श्यन्दू, इन चार धातुओं से परे सकारादि आर्धधातुक से इट् नहीं होता तङ् कौर आनि के अभाव में ।

देरार्धधातुकस्येण् न स्यात् तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत । दद दाने ।१९। ददते ।

**५४३. न शसददवादिगुणानाम्** ६।४।१२६ ।। शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न । ददहे । दददाते । ददहिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ त्रपूष् लज्जायाम् ॥२०॥ त्रपते ।

**५४४. तॄफलभजत्रपश्च** ६।४।१२२ ॥ एषामत एत्वमभ्यासलोपश्च स्यात्

---

वलादेः' इत्यत आर्धधातुकस्येडिति 'गमेरिट् परस्मैपदेषु' इत्यतः परस्मैपदेष्विति चानुवर्तते ।

**वर्त्स्यति** । वृत्धातोर्लृटि 'वृद्भ्यः स्यसनोः' इति परस्मैपदत्वात्तिपि स्यप्रत्यये गुणे 'न वृद्भ्यश्चतुर्भ्यः' इतीण्निषेधे वर्त्स्यति इति परस्मैपदत्वाभावे वर्तिष्यते इति च सिद्धम् ।

**अवृतत्** । वृत् धातोर्लुङि 'द्युद्भ्यो लुङि' इति परस्मैपदत्वात्तिपि इकारलोपे अटि च्लौ सिचं बाधित्वा 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि अवृत् इति, परस्मैपदत्वाभावपक्षे तप्रत्यये च्लेः सिचि इटि गुणे रपरे षत्वे ष्टुत्वे च कृते अवर्तिष्ट इति च सिद्धम् ।

**न शस** । 'अत एकहल्मध्ये' इत्यतः अत इति 'ध्वसोरेद्धावभ्यासलोपश्च' इत्यत एदिति अभ्यासलोपश्चेति चानुवर्तते ।

**ददहे** । दद्धातोर्लिटस्तप्रत्यये तस्य 'लिटस्तझयोरेशिरेच्' इत्येशादेशे द्वित्वे अभ्यासत्वे हलादेः शेषे 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वाभ्यासलोपयोः प्राप्तौ 'न शसददवादिगुणानाम्' इति तन्निषेधे तत्सिद्धिः ।

**अददिष्ट** । ददधातोर्लुङस्तप्रत्ययेऽटि च्लेः सिचि इटि षत्वे ष्टुत्वे तत्सिद्धिः ।

**तॄफल** । 'अत एकहल्मध्ये' इत्यत अत इति लिटि इति 'ध्वसोरेद्धावभ्यासलोपश्च' इत्यत एदिति अभ्यासलोपश्चेति 'गमहन' इत्यतः कितीति 'थलि च सेटि' इति सूत्रञ्चानुवर्तते ।

---

५४३. शस्, दद् और वकारादि धातुओं से गुण शब्द से विहित जो अकार उसको एत्व और अभ्यास लोप नहीं होता ।

५४४. तॄ, फल, भज और त्रप धातुओं के अकार को एत्व होता है और अभ्यास का लोप भी होता है ।

किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ।। इत्यात्मनेपदिनः ।।

## अथोभयपदिनः

श्रिञ् सेवायाम् ।।१।। श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयितासि, श्रयितासे । श्रयिष्यति, श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत्, अश्रयत । श्रयेत्, श्रयेत । श्रीयात्, श्रयिषीष्ट । चङ् । अशिश्रियत् । अशिश्रियत । अश्रयिष्यत्, अश्रयिष्यत ।। भृञ् भरणे ।।२।। भरति, भरते । बभार । बभ्रतुः ।

---

**त्रेपे** । त्रप्धातोर्लिटस्तस्य एशि द्वित्वेऽभ्यासत्वे हलादेः शेषे प्राप्ते 'तॄफलभजत्रपश्च' इति एत्वेऽभ्यासलोपे च कृते तत्सिद्धिः ।

**त्रपिता** । त्रपो लुटस्तप्रत्यये तासि तास आर्धधातुकत्वात् 'स्वरतिसूतिसूयतिधूञूदितो वा' इति पाक्षिके इडागमे तस्य डादेशे डित्वात् टिलोपे त्रपिता इति । इडभावे त्रप्ता इति च सिद्धम् ।

।। इत्यात्मनेपदिनः ।।

## अथोभयपदिनः

**शिश्राय** । श्रिधातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे हलादेः शेषे 'अचो ञ्णिति' इति वृद्धौ आयादेशे शिश्राय इति । आत्मनेपदे तु तप्रत्यये तस्य एशि द्वित्वेऽभ्यासकार्ये 'अचि श्नुधातु' इति इयङि शिश्रिये इति च सिद्धम् ।

**अशिश्रियत्** । श्रिधातोर्लुङस्तिपि इकारलोपे अटि च्लौ 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' इति च्लेश्चङि 'चङि' इति द्वित्वेऽभ्यासत्वे हलादेः शेषे 'अचि श्नु' इतीयङि अशिश्रियत् इति आत्मनेपदे तु तप्रत्यये पूर्वोक्तकार्ये अशिश्रियत इति च सिद्धम् ।

**बभार** । भृधातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्त्वे 'उरत्' इत्यत्वे रपरे हलादेः शेषे 'अभ्यासे चर्च' इति जश्त्वे सिद्धम् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरे 'अत उपधायाः' इति वृद्धौ बभार इति ।

आत्मनेपदे तु तप्रत्यये तस्य एशि द्वित्वेऽभ्यासकार्ये यणि बभ्रे इति च सिद्धम् ।

**बभ्रतुः** । भृधातोर्लिटि तसि तस्यातुसि द्वित्वे अभ्यासत्वे उरदत्वे रपरे हलादि; शेषे जश्त्वे बभृ अतुस् इति स्थिते 'असंयोगाल्लिट् कित्' इति कित्वे गुणनिषेधे यणि रुत्वे विसर्गे सिद्धम् ।

बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । भर्तासि, भर्तासे । भरिष्यति भरिष्यते । भरतु, भरताम् । अभरत्, अभरत । भरेत्, भरेत ।

५४५. **रिङ्शयग्लिङ्क्षु ७।४।२८ ॥** शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ।

५४६. **उश्च १।२।१२ ॥** ऋवर्णात्परो झलादी लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ।

५४७. **ह्रस्वादङ्गात् ८।२।२७ ॥** सिचो लोपो झलि । अभृत । अभृषाताम् ।

---

**बभर्थ** । भृधातोर्लिटः सिपस्थलि द्वित्वेऽभ्यासकार्ये 'एकाच उपदेशेऽनुदात्तात्' इतीण्णिषेधे गुणे रपरे तत्सिद्धिः । अत्र क्रादित्वादिद् प्राप्ते अचस्तास्वत् इति निषेधः ।

**रिङ्शयग्लिङ्क्षु** । 'अयङ् यि क्ङिति' इत्यतो यीत्यनुवर्तते । तदादिविधिः । 'अकृत्सार्वधातुकयोः' इति 'रीङ् ऋतः' इत्यतः ऋत इति चानुवर्तते ।

**भ्रियात्** । भृधातोराशीर्लिङस्तिपि इकारलोपे आर्धधातुकत्वे यासुटि 'स्कोः' इति सलोपे 'रिङ्शयग्लिङ्क्षु' इति रिङादेशे 'रीङ् ऋतः' इत्यतः रीङित्यनुवृत्त्यैव सिद्धे रिङ्विधानसामर्थ्यात् 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घाभावे भ्रियात् इति सिद्धम् ।

**उश्च** । 'इको झल्' इत्यतो झलिति 'लिङ्सिचावात्मनेपदेषु' इति चानुवर्तते ।

**भृषीष्ट** । भृधातोराशीर्लिङस्तप्रत्यये आर्धधातुकत्वे सीयुटि 'सुट् तिथोः' इति सुटि अनुबन्धलोपे यलोपे 'उश्च' इति कित्त्वात् गुणाभावे षत्वे ष्टुत्वे तत्सिद्धिः ।

**अभार्षीत्** । भृधातोर्लुङ्तिपि इकारलोपे अटि च्लौ च्लेः सिचि ईटि 'सिचि-वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरे षत्वे तत्सिद्धिः ।

**ह्रस्वादङ्गात्** । 'रात्सस्य' इत्यतः सस्येति । 'संयोगान्तस्य लोपः' इत्यतो लोप इति । 'झलो झलि' इत्यतो झलीति चानुवर्तते । अत्र सिच इति भाष्यम् ।

**अभृत** । भृधातोर्लुङस्तप्रत्ययेऽटि च्लेः सिचि 'उश्च' इति कित्त्वे 'ह्रस्वादङ्गात्' इति सलोपे कित्त्वाद् गुणाभावे तत्सिद्धिः ।

**अभृषाताम्** । भृधातोर्लुङि आतामि च्लौ सिचि अटि सिचः 'उश्चेति कित्वेन गुणाभावे सस्य षत्वे सिद्धम् ।

---

५४५. ऋ के स्थान में रिङ् आदेश होता है शकार और यकारादि आर्ध-धातुक लिङ् परे रहते ।

५४६ ऋवर्ण से परे झलादि लिङ् सिच् कित् होते हैं, तङ् परे रहते ।

५४७. ह्रस्व अङ्ग से परे सिच् का लोप होता है, झल् परे रहते ।

अभरिष्यत्, अभरिष्यत ॥ हृञ् हरणे ॥ ३ ॥ हरति, हरते । जहार । जहर्थ । जह्रिव । जह्रिम । जह्रे । जहृषे । हर्तासि, हर्तासे । हरिष्यति, हरिष्यते । हरतु, हरताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात् । हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत ॥ धृञ् धारणे ॥ ४ ॥ धरति, धरते ॥ णीञ् प्रापणे ॥ ५ ॥ नयति, नयते ॥ डुपचष् पाके ॥ ६ ॥ पचति, पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्तासि, पक्तासे ॥ भज सेवायाम् ॥ ७ ॥ भजति, भजते । बभाज, भेजे । भक्तासि, भक्तासे । भक्ष्यति, भक्ष्यते । अभाक्षीत् । अभक्त । अभक्षाताम् ॥ यज देवपूजासङ्गतिकरणदानेषु ॥ ८ । यजति, यजते ।

५४८. **लिट्यभ्यासस्योभयेषाम्** ६।१।२७ ॥ वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिटि । इयाज ।

५४९. **वचिस्वपियजादीनां किति** ६।१।१५ ॥ वचिस्वप्योर्यजादीनां च

---

**जहार** । हृधातोर्लिटस्तिपि णलि द्वित्वे अभ्यासत्वे उरदत्वे हलादिशेषे हस्य चुत्वेन झकारे तस्य जश्त्वेन जकारे गुणे रपरे 'अत उपधायाः इति वृद्धौ सिद्धम् ।

**पेचिथ** । पच्धातोर्लिटः सिपस्थलि द्वित्वेऽभ्यासत्वे हलादेः शेषे भारद्वाजनियमात् पाक्षिके इटि 'थलि च सेटि' इति एत्वाभ्यासलोपयोः पेचिथ इति । इडभावे कुत्वे पपक्थ इति च सिद्धम् ।

**पेचे** । पचो लिटस्तस्य एशि द्वित्वेऽभ्यासकार्ये 'अत एकहल्मध्ये' इति एत्वाभ्यासलोपयोः तत्सिद्धिः ।

**पक्षीष्ट** । पच्धातोराशीर्लिङस्तप्रत्यये सीयुटि 'चोः कुः' इति कुत्वे यलोपे सुटि षत्वे ष्टुत्वे पक्षीष्टेति सिद्धम् ।

**लिटच** । 'ष्यङः सम्प्रसारणम्' इत्यतः सम्प्रसारणमित्यनुवर्तते । उभयेषामित्यनेन 'वचिस्वपि' 'ग्रहिज्या' इति सूत्रोक्तानां ग्रहणम् ।

**इयाज** । यज्धातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे हलादेः शेषे 'लिटचभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे उपधावृद्धौ तत्सिद्धिः ।

---

५४८. वच्यादि और ग्रह्यादि के अभ्यास को सम्प्रसारण होता है लिट् परे रहते ।

५४९. वच् स्वप् और यजादि धातुओं को सम्प्रसारण होता है कित् परे रहते ।

संप्रसारणं स्यात् किति। ईजतुः। ईजुः। इयजिथ, इयष्ठ। ईजे। यष्टा। षढोः कः सि। यक्ष्यति, यक्ष्यते। इज्यात्, यक्षीष्ट। अयाक्षीत, अयष्ट॥ वह प्रापणे॥ ९॥ वहति, वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ।

**५५०. झषस्तथोर्धोऽधः ८।२।४८॥** झषः परयोस्तथोर्धः स्यान्न तु दधातेः।

---

**ईजतुः**। यज्धातोर्लिटस्तसः अतुसि द्वित्वं बाधित्वा परत्वात्पूर्वं 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे पूर्वरूपे ततः 'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति न्यायात् द्वित्वे सवर्णदीर्घे रुत्वे विसर्गे ईजतुरिति सिद्धम्।

**इयजिथ**। यज्धातोर्लिटः सिपस्थलि द्वित्वे 'लिटयभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे भारद्वाजनियमात्पाक्षिके इटि इयजिथ इति। इडभावपक्षे 'व्रश्च' इति षत्वे ष्टुत्वे इयष्ठ इति च सिद्धम्।

**ईजे**। यजधातोर्लिटस्तस्य एशि 'असंयोगाल्लिट् कित' इति कित्वात् 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे द्वित्वे दीर्घे तत्सिद्धिः।

**यक्ष्यति**। यजो लृटस्तिपि स्ये 'व्रश्च' इति षत्वे 'षढोः कः सि' इति षकारस्य ककारे षत्वे तत्सिद्धिः।

**इज्यात्**। यज्धातोराशीर्लिङस्तिपि इकारलोपे यासुटि 'किदाशिषि' इति यासुटः कित्त्वात् 'वचिस्वपि' इति सम्प्रसारणे तत्सिद्धिः।

**यक्षीष्ट**। यजो लिङस्तप्रत्यये सीयुटि यलोपे जस्य षत्वे तस्य ककारे सुटि षत्वे ष्टुत्वे तत्सिद्धिः।

**अयाक्षीत्**। यज्धातोर्लुङस्तिपि इकारलोपे अटि च्लेः सिचि इटि प्राप्ते एकाजिति इणिषेधे ईटि 'वदव्रज' इति वृद्धौ 'व्रश्च' इति जस्य षत्वे 'षढोः कः सि' षस्य कत्वे सिचः सस्य षत्वे षत्वे तत्सिद्धिः।

**उवाह**। वहो लिटस्तिपो णलि द्वित्वे हलादेः शेषे 'लिटयभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे उपधावृद्धौ तत्सिद्धिः।

**ऊहतुः**। वहो लिटस्तसोऽतुसि परत्वाद् 'वचिस्वपि' इति सम्प्रसारणे पूर्वरूपे ततो द्वित्वे दीर्घे रुत्वविसर्गयोस्तत्सिद्धिः।

**उवहिथ**। वहो लिटः सिपस्थलि द्वित्वेऽभ्यासकार्ये सम्प्रसारणे पूर्वरूपे भारद्वाजनियमात्पाक्षिके इटि उवहिथ इति। इडभावपक्षे तु उवह् थ इति स्थिते 'होढः' इति हस्य ढत्वे 'झषस्तथोर्धोधः' इति थस्य धत्वे ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे 'सहिवहोरोदवर्णस्य' इति ओत्वे उवोढ इति च सिद्धम्।

---

५५०. झष से परे तकार थकार के स्थान में ध होता है, धा धातु को छोड़कर।

५५१. ढो ढे लोपः ८।३।१३ ॥

५५२. सहिवहोरोदवर्णस्य ६।३।११२ ॥ अनयोरवर्णस्य ओत्स्यात् ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम् अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि।

इति तिङन्ते भ्वादयः



---

**वोढा**। वह् धातोर्लुटस्तिपि डादेशे टिलोपे हस्य ढत्वे तस्य धत्वे ष्टुत्वे ढलपो 'सहिवहोरोदवर्णस्य' इति ओत्वे तत्सिद्धिः।

**वक्ष्यति**। वहो लृटस्तिपि स्ये हस्य ढत्वे 'षढोः कः सि' इति ढस्य कत्वे षत्वे तत्सिद्धिः।

**अवाक्षीत्**। वहो लुङस्तिपि इलोपेऽटि च्लेः सिचि ईटि **'वदव्रज'** इति वृद्धौ हस्य ढत्वे तस्य कत्वे षत्वे ततसिद्धिः।

**अवोढाम्**। वहो लुङस्तसस्तामि अटि च्लेः सिचि 'झलो झलि' इति सलोपे हस्य ढत्वे तस्य धत्वे ष्टुत्वे ढलोपे 'सहिवहोरोदवर्णस्य' इति ओत्वे तत्सिद्धिः।

॥ इति भ्वादयः ॥



---

५५१. ढ का लोप होता है ढ परे रहते।

५५२. सह् और वह् धातु के अवर्ण को ओत् होता है ढलोप परे रहते।



## अथ अदादिप्रकरणम्

**५५३. अदिप्रभृतिभ्यः शपः २।४।७२॥** लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः।

**५५४. लिट्यन्यतरस्याम् २।४।४०॥** अदो घस्लृ वा स्याल्लिटि। जघास। उपधालोपः।

**५५५. शासिवसिघसीनां च ८।३।६०॥** इण्कुभ्यां परस्यैषां सस्य षः स्यात्। घस्य चर्त्वम्। जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास, जघस। जक्षिव। जक्षिम। आद। आदतुः आदुः।

**५५६. इडत्त्यर्तिव्ययतीनाम् ८।२।६६॥** अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आदिथ। अत्ता। अत्स्यति। अत्तु। अत्तात्। अत्ताम्। अदन्तु।

---

**अत्ति।** अदो लटस्तिपि शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि चर्त्वे तत्सिद्धिः।

**जघास।** अदो लिटि 'लिट्यन्यतरस्याम्' इति पाक्षिके घस्लादेशेऽनुबन्धलोपे तिपो णलि द्वित्वेऽभ्यासत्वे हलादेः शेषे चुत्वे जश्त्वे उपधावृद्धौ तत्सिद्धिः।

**जक्षतुः।** अदो लिटि घस्लादेशे तस अतुसि द्वित्वेऽभ्यासकार्ये जश्त्वे 'गमहन' इत्युपधालोपे चर्त्वे 'शासिवसिघसीनां च' इति षत्वे तत्सिद्धिः।

**जघसिथ।** अदो लिटि पाक्षिके घस्लादेशे सिपस्थलि द्वित्वे हलादेः शेषे चुत्वे जश्त्वे तासि घसोऽभावात् थलि क्रादिनियमान्नित्ये इटि जघसिथ इति। घस्लादेशाभावपक्षे द्वित्वे 'अत आदेः' इति दीर्घे सवर्णदीर्घे 'इडत्त्यर्तिव्ययतीनाम्' इति इटि आदिथेति च सिद्धम्।

---

५५३. अदादि गण पठित धातु से परे शप् का लोप होता है।

५५४. अद् को घस्लृ आदेश होता है विकल्प से लिट् परे रहते।

५५५. इण कवर्ग से परे शास, वस, घस, धातुओं के सकार को षत्व होता है।

५५६. अद् ऋ, व्येञ् इनसे परे थल को नित्य इट् होता है।

**५५७. हुझल्भ्यो हेर्धिः ६।४।१०१ ॥** होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ।

**५५८. अदः सर्वेषाम् ७।३।१०० ॥** अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ।

**५५९. लुङ्सनोर्घस्लृ २।४।३७ ॥** अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । आत्स्यत् ॥ हन हिंसागत्योः ॥ २ ॥ हन्ति ।

**५६० अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७ ॥** अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति च परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु धृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ।

---

**अद्धि** । अद्धातोर्लोटः सिपो हौ शपो लुकि 'हुझल्भ्योंहेर्धिः' इति हेर्धौ तत्सिद्धिः ।

**आदत्** । अद्धातोर्लङस्तिपि इकारलोपे शपो लुकि आटि वृद्धौ 'अदः सर्वेषाम्' इत्यटि तत्सिद्धिः ।

**अघसत्** । अदो लुङि 'लुङ्सनोर्घस्लृ' इति घस्लादेशे तिपि इलोपेऽटि च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि तत्सिद्धिः ।

**हतः** । हन् धातोर्लटस्तसि शपो लुकि 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति नलोपे रुत्वे विसर्गे तत्सिद्धिः ।

**घ्नन्ति** । हन्धातोर्लटो झौ झस्यान्तादेशे 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपे 'हो हन्ते ञ्णिन्नेषु' इति कुत्वे तत्सिद्धिः ।

**जघान** । हनो लिटिस्तिपोणलि द्वित्वेऽभ्यासत्वे हलादेः शेषे चुत्वे जश्त्वे उपधावृद्धौ 'अभ्यासाच्च' इत्यस्यापेक्षया शीघ्रोपस्थितिकत्त्वरूपान्तरङ्गत्वात् 'हो हन्ते ञ्णिन्नेषु' इति कुत्वे तत्सिद्धिः ।

---

५५७. हु और झलन्त धातुओं से परे हि के स्थान में धो होता है ।

५५८. अद् से परे अपृक्त सार्वधातुक को अट् का आगम होता है सब आचार्यों के मत में ।

५५९. अद् के स्थान में घस्लृ आदेश होता है लुङ् और सन् परे रहते ।

५६०. अनुनासिकान्त जो अनुदात्तोपदेश तथा वन और तनोत्यादि धातु के अनुनासिक का लोप हो झलादि कित् ङित् प्रत्यय पर रहते ।

**५६१. अभ्यासाच्च ७।३।५५ ॥** अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघान, जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति ॥ हन्तु, हतात् । हताम् । घ्नन्तु ।

**५६२. हन्तेर्जः ६।४।३६ ॥** हौ परे ।

**५६३. असिद्धवदत्राभात् ६।४।२२ ॥** इत ऊर्ध्वमापादसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम् । इति जस्यासिद्धत्वान्न हेर्लुक् । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । हन्याताम् । हन्युः ।

**५६४. आर्धधातुके २।४।३५ ॥** इत्यधिकृत्य ।

**५६५. हनो वध लिङि २।४।४२ ॥**

**५६६. लुङि च । २।४।४३ ॥** वधादेशोऽदन्तः । आर्धधातुके इति विषय-

---

**जघनिथ ।** हनो लिटः सिपस्थलि द्वित्वेऽभ्यासकार्ये भरद्वाजनियमात्पाक्षिके इटि ञ्गित्प्रत्ययपरत्वाभावान्नकारपरत्वाभावाच्च 'हो हन्तेः' इत्यस्याप्राप्त्या 'अभ्यासाच्च' इति कुत्वे जघनिथ इति । इडभावे जघन्थ इति च सिद्धम् ।

**जघ्निव ।** हनो लिटो वसो वादेशे द्वित्वेऽभ्यासकार्ये जहन् व इति स्थिते क्रादिनियमादिटि 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वे तत्सिद्धिः ।

**जहि ।** हनो लोटः सिपो हौ 'हन्तेर्जः' इति जादेशे 'असिद्धवदत्राभात्' इति जस्यासिद्धत्वाद् 'अतो हेः' इति हेर्लुकोऽभावे तत्सिद्धिः ।

**अहन् ।** हनो लङस्तिपि इकारलोपे अटि शपो लुकि 'हल्ङ्याब्भ्यः' इति तल्लोपे 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषया 'अहन्' इति सूत्रे प्रतिपदोक्तस्यैव अहन् इत्यस्य ग्रहणात् अत्र रुत्वाभावे तत्सिद्धिः ।

---

५६१. अभ्यास से परे हन् धातु के हकार के स्थान में कुत्व होता है ।

५६२. हन् धातु के हकार के स्थान में जकार होता है हि परे रहते ।

५६३. इस सूत्र से लेकर पादसमाप्तिपर्यन्त आभीय हैं । समानाश्रय आभीय कर्त्तव्य में कृत आभीय असिद्ध होता है ।

५६४. यह अधिकार सूत्र है ।

५६५. हन् धातु के स्थान में वध आदेश होता है लिङ् परे रहते ।

५६६. हन् धातु को वध आदेश होता है लुङ् परे रहते । यह वध आदेश अदन्त है । आर्धधातुके में विषय सप्तमी है । इसलिए उपदेश काल में आर्धधातुक होने के कारण अकारान्त के अकार का लोप होता है ।

सप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आदेशस्यानेकाच्त्वादेकाच इतोऽनिषेधाभावादिट् । अतो हलादेरिति वृद्धौ प्राप्तायाम् ।

**५६७. अचः परस्मिन् पूर्वविधौ ॥ १।१।५७ ॥** परनिमित्तोऽजादेशः स्थानिवत्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये ॥ इत्यल्लोपस्य स्थानिवत्त्वेनोपधात्वाभावान्न वृद्धिः ॥ अवधीत् । अहनिष्यत् ॥ यु मिश्रणामिश्रणयोः ॥ ३ ॥

**५६८. उतो वृद्धिर्लुकि हलि ७।३।८९ ॥** लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके, नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न भाष्ये पिच्च ङिन्न, ङिच्च पिन्नेति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् ।

---

**वध्यात्** । हन्धातोराशीर्लिङि 'हनो वध लिङि' इति हनो वधादेशे लिङस्तिपि इलोपे आर्धधातुकत्वे यासुटि 'स्कोः' इति सलोपे आर्धधातुकोपदेशे वधादेशस्यादन्तत्वाद् 'अतो लोपः' इत्यल्लोपे तत्सिद्धिः ।

**अवधीत्** । हनो लुङि वधादेशे लुङस्तिपि इलोपे अटि च्लेः सिचि वधादेशस्यानेकाच्त्वाद् 'एकाच उपदेशे' इति निषेधाभावादिटि ईटि अल्लोपे 'अचः परस्मिन् पूर्वविधौ' इति अल्लोपस्य स्थानिवत्वाद्' अतो हलादेर्लघोः' इति वृद्ध्यभावे सलोपे सवर्णदीर्घे तत्सिद्धिः ।

**यौति** । युधातोर्लटस्तिपि शपो लुकि 'उतो वृद्धिर्लुकि हलि' इति वृद्धौ तत्सिद्धिः ।

**अयुवन्** । युधातोर्लङो झौ शपो लुकि झस्यान्तादेशे इलोपेऽढि 'अचि श्नुधातु' इति उवङि तकारस्य संयोगान्तलोपे तत्सिद्धिः ।

**युयात्** । युधातोर्लिङस्तिपि शपो लुकि इलोपे यासुटि 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे भाष्ये पिच्च ङिन्न ङिच्च पिन्न इति व्याख्यानात् यदागमपरिभाषया यासुटः पित्त्वाभावेन उतो वृद्ध्यभावे तत्सिद्धिः ।

---

५६७. पर निमित्तक अजादेश स्थानिवत् होता है स्थानिभूत अच से पूर्वत्वेन दृष्ट को विधि कर्तव्य में ।

५६८. लुक के विषय में उकार को वृद्धि होती है । पित हलादि सार्वधातुक परे रहते, अभ्यास को छोड़कर ।

यूयासुः । अयावीत् । अयविष्यत् ।। या प्रापणे ।। ४ ।। याति । यातः । यान्ति । ययो । याता । यास्यति । यातु । अयात् । अयाताम् ।

**५६९. लङः शाकटायनस्यैव ३।४।१११** ।। आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । वा गतिगन्धनयोः ।। ५ ।। भा दीप्तौ ।।६।। ष्णा शौचे ।। ७ ।। श्रा पाके ।। ८ ।। द्रा कुत्सायां गतौ ।। ९ ।। प्सा भक्षणे ।। १० ।। रा दाने ।। ११ ।। ला आदाने ।। १२ ।। दाप् लवने ।। १३ ।। पा रक्षणे ।। १४ ।। ख्या प्रकथने ।। १५ ।। अयं सार्वधातुके एव प्रयोक्तव्यः ।। विद ज्ञाने ।। १६ ।।

**५७०. विदो लटो वा ३।४।८३** ।। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे, वेत्ति । वित्तः । विदन्ति ।

**५७१. उषविदजागृभ्योऽन्यतरस्याम् ३।१।३८** ।। एभ्यो लिटि आम्वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार, विवेद । वेदिता । वेदिष्यति ।

---

**ययौ** । याधातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासह्रस्वे 'आत औ णलः' इति णल औकारादेशे वृद्धौ तत्सिद्धिः ।

**अयुः** । याधातोर्लङो झौ शपो लुकि अटि 'लङः शाकटायनस्यैव' इति पाक्षिके झेर्जुसादेशे 'उस्यपदान्तात्' इति पररूपे रुत्वे विसर्गे अयुः इति, जुसोऽभावपक्षे झस्यान्तादेशे इलोपे तलोपे अयान् इति च सिद्धम् ।

**वेद** । विद् धातोर्लटस्तिपि शपो लुकि 'विदो लटो वा' इति पाक्षिके तिपो णलि गुणे वेद इति । णलोऽभावे गुणे चर्त्वे वेत्ति इति च सिद्धम् ।

**विदाञ्चकार** । विदो लिटि 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यामि विद इत्यदन्तत्वनिपातनाल्लघूपधगुणाभावे लिटो लुकि लिट्परकृञोऽनुप्रयोगे तिपो णलि द्वित्वे 'उरत्' इत्यत्वे रपरे हलादेः शेषे चुत्वे गुणे रपरे उपधावृद्धौ अनुस्वारे परसवर्णे तत्सिद्धिः । आमोऽभावपक्षे द्वित्वेऽभ्यासकार्ये गुणे विवेद इति सिद्ध्यति ।

---

५६९. आकारान्त से परे लङ् के स्थान में झि को जुस् होता है विकल्प से ।

५७०. विद् धातु से लट् लकार में परस्मैपद तिबादि के स्थान में णलादि होते हैं विकल्प से ।

५७१ उष, विद्, जागृ, धातुओं से लिट् परे रहते आम का आगम होता है विकल्प से ।

**५७२. विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ३।१।४१ ॥** वेत्तेर्लोटि आम् गुणाभावो, लोटो लुक्, लोडन्तकारोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते ।

**५७३. तनादिकृञ्भ्य उः ३।१।७९ ॥** तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः । गुणौ । विदाङ्करोतु ।

**५७४. अत उत्सार्वधातुके ६।४।११० ॥** उप्रत्ययान्तस्य कृञोत उत्सार्वधातुके क्ङिति । विदङ्कुरुतात् । विदाङ्कुरुतम् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । अविदुः ।

**५७५. दश्च ८।२।७५ ॥** धातोर्दस्य पदान्तस्य सिपि परे रुर्वा । अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् ॥ अस भुवि ॥ १७ ॥ अस्ति ।

**५७६. श्नसोरल्लोपः ६।४।१११ ॥** श्नस्यास्तेश्चातो लोपः सार्वधातुके ङ्किति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

---

**विदाङ्करोतु ।** विदो लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति निपातनात् विद आमि गुणाभावे लोटो लुकि लोडन्तकृञोऽनुप्रयोगे च लोटस्तिपि शपं बाधित्वा 'तनादिकृञ्भ्य उः' इति उ प्रत्यये गुणे रपरे उत्वे अनुस्वारे परसवर्णे तातङि 'अत उत्सार्वधातुके' इति ककारोत्तराकारस्य उत्वे विदाङ्कुरुतात् इति तातङभावे गुणे विदाङ्करोतु इति आमोऽभावपक्षे तातङि वित्तात् इति पक्षे वेत्त इति । च सिद्धम् ।

**अवेः ।** विदो लङस्सिपि इलोपेऽटि शपो लुकि गुणे 'हल्ङ्याब्भ्यः' इति सलोपे 'दश्च' इति रुत्वे विसर्गे तत्सिद्धिः ।

**स्तः ।** अस्धातोर्लटस्तसि शपो लुकि 'सार्वधातुकमपित्' इति ङित्त्वात् 'श्नसोरल्लोपः' इति अल्लोपे रुत्वे विसर्गे तत्सिद्धिः ।

---

५७२. विद् धातु से लोट् परे रहते आम्, गुणाभाव, लोट् का लुक्, लोडन्त कृ का अनुप्रयोग होता है विकल्प से ।

५७३ तनादि और कृञ् धातु से उ प्रत्यय होता है ।

५७४. उ प्रत्ययान्त कृञ् के अकार को उकार होता है, कित, ङित् सार्वधातुक परे रहते ।

५७५. धातु के पदान्त दकारको रु होता है विकल्प से सिप् परे रहते ।

५७६. श्ना और अस् धातु के आकार का लोप होता है कित्, ङित् सार्वधातुक परे रहते ।

**५७७. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७ ।।** उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे। निष्यात्। प्रनिषन्ति। प्रादुःषन्ति। यच्परः किम्-अभिस्तः।

**५७८. अस्तेर्भूः २।४।५२ ।।** आर्धधातुके। बभूव। भविता। भविष्यति। अस्तु, स्यात्। स्ताम्। सन्तु।

**५७९. ध्वसोरेद्धावभ्यासलोपश्च ६।४।११९ ।।** घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च। एत्त्वस्यासिद्धत्वाद्धेर्धिः। श्नसोरित्यल्लोपः। तातङ्पक्षे एत्त्वं न। परेण तातङा बाधात्। एधि, स्तात्। स्तम्। स्त। असानि। असाव। असाम।। आसीत्। आस्ताम्। आसन्।। स्यात्। स्याताम्। स्युः।। भूयात्। अभूत्। अभविष्यत्।। इण् गतौ।। १८।। एति। इतः।

**५८०. इणो यण् ६।४।८१ ।।** अजादौ प्रत्यये परे। यन्ति।

**५८१. अभ्यासस्यासवर्णे ६।४।७८ ।।** अभ्यासस्य इवर्णोवर्णयोरियङुवङौ

---

**निष्यात्।** निपूर्वादस्धातोर्लिङस्तिपि इलोपे यासुटि सलोपे अल्लोपे 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वे तत्सिद्धिः।

**बभूव।** अस्धातोर्लिटस्तिपो णलि आर्धधातुकत्वात् 'अस्तेर्भूः' इति भ्वादेशे वुकि द्वित्वेऽभ्यासकार्ये तत्सिद्धिः।

**एधि।** अस्धातोर्लोटः सिपो हौ 'ध्वसोरेद्धावभ्यासलोपश्च इति सस्य एत्वे एत्वस्यासिद्धत्वाद् 'हुझल्भ्यो हेर्धिः' इति हेर्धौ 'श्नसोरल्लोपः' इत्यल्लोपे तत्सिद्धिः। तातङ्पक्षे परेण तातङा बाधादेत्वाभावे स्तात् इति सिद्ध्यति।

**आसीत्।** असो लङस्तिपि इलोपे आटि वृद्धौ ''अस्तिसिचोऽपृक्ते' इति ईटि तत्सिद्धिः।

**यन्ति।** इधातोर्लटो झौ शपो लुकि झस्यान्तादेशे इयङादेशं बाधित्वा 'इणो यण्' इति यणि तत्सिद्धिः।

---

५७७. उपसर्ग सम्बन्धी इण् और प्रादुस् से पर अस् धातु के स को ष हो यकार और अच् पर रहते।

५७८. अस् धातु के स्थान में भू आदेश होता है आर्धधातुक की विवक्षा में।

५७९. घुसंज्ञक और अस् धातु को एकार हो और अभ्यास का लोप हो हि पर रहते।

५८०. अजादि प्रत्यय परे रहते इण् के स्थान में यण् होता है।

५८१. अभ्यास के इकार, उकार के स्थान में इयङ्, उवङ् आदेश होते हैं क्रम से असवर्ण अच् पर रहते।

स्तोऽसवर्णेऽचि । इयाय ।

५८२. दीर्घ इणः किति ७।४।६९ ॥ इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इययिथ इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् ।

५८३. एतेर्लिङि ७।४।२४॥ उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि । निरियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अण किम्—समेयात् ।

---

**इयाय** । इणो लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे 'अचोञ्णिति' इति वृद्धौ आयादेशे 'अभ्यासस्यासवर्ण' इतीयङि तत्सिद्धिः ।

**ईयतुः** । इणो लिटस्तसोऽतुसि द्वित्वेऽभ्यासत्वे इ इ अतुसिति स्थिते 'इणो यण्' इति यणि 'दीर्घ इणः किति' इति दीर्घे रुत्वे विसर्गे तत्सिद्धिः ।

**इययिथ** । इणो लिटः सिपस्थलि द्वित्वे भारद्वाजनियमात्पाक्षिके इटि गुणेऽयादेशे 'अभ्यासस्यासवर्णे' इति इयङि इययिथ इति । इडभावपक्षे तु गुणे इयङि इयेथ इति च सिद्धम् ।

**ऐत्** । इणो लङस्तिप इलोपे इकारस्य गुणे आटि वृद्धौ तत्सिद्धि ।

**आयन्** । इणो लङो झौ झस्यान्तादेशे इकारलोपे 'इणो यण्' इति यणि तस्याभीयत्वेनासिद्धत्वादाटि तलोपे तत्सिद्धिः ।

**निरियात्** । निर्पूर्वाद् इण्धातोराशीर्लिङस्तिपि इकारलोपे यासुटि आर्धधातुकत्वे कित्वे सलोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इतिदीर्घे 'एतेर्लिङि' इति ह्रस्वे तत्सिद्धिः ।

**अभीयात्** । अभिपूर्वादिणो लिङस्तिपि इकारलोपे यासुटि सलोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति सवर्णदीर्घे 'उभयत आश्रयणे नान्तादिवत्' इति परिभाषया 'अन्तादिवच्च' इतिसूत्राप्रवृत्या उपसर्गात्परस्य इणोऽभावेन ह्रस्वाभावे तत्सिद्धिः ।

**समेयात्** । सम् आपूर्वादिणोलिङस्तिपि इकारलोपे यासुटि सलोपे 'अकृत्सार्वधातुकयोदीर्घः' इति दीर्घे गुणे तत्सिद्धिः । 'एतेलिङि' इति सूत्रे 'केऽणः' इत्यतोऽण इत्यस्य सम्बन्धाभावे समेयादित्यत्र ह्रस्वः स्यादतस्तत्सम्बन्ध आवश्यकः ।

---

५८२. इण् के अभ्यास को दीर्घ होता है कित, लिट् परे रहते ।

५८३. उपसर्ग से परे इण् धातु के अण् को ह्रस्व होता है आर्धधातुक कित् लिङ् परे रहते ।

**५८४. इणो गा लुङि २।४।४५ ॥** गातिस्थेति सिचो लुक्। अगात्। ऐष्यत्। शीङ् स्वप्ने। १९।

**५८५. शीङः सार्वधातुके गुणः ७।४।२१ ॥** क्ङिति चेत्यस्यापवादः। शेते। शयाते।

**५८६. शीङो रुट् ७।१।६ ॥** शीङः परस्य झादेशस्यातो रुडागमः स्यात्। शेरते। शेषे। शयाथे। शेध्वे। शये। शेवहे। शेमहे। शिश्ये। शिश्याते। शिश्यिरे। शयिता। शयिष्यते। शेताम्। शयाताम्। अशेत। अशयाताम्। अशेरत। शयीत। शयीयाताम्। शयीरन्। शयिषीष्ट। अशयिष्ट। अशयिष्यत। इङ् अध्ययने॥ २०॥ इङिकावध्युपसर्गतो न व्यभिचरतः। अधीते। अधीयाते। अधीयते।

**५८७. गाङ् लिटि २।४।४९ ॥** इङो गाङ् स्याल्लिटि। अधिजगे। अधिजगाते। अधिजगिरे। अध्येता। अध्येष्यते। अधीताम्। अधीयाताम्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै।

---

**अगात्।** इणो लुङि 'इणो गा लुङि' इति गादेशे तिपि इलोपेऽटि च्लेः सिचि 'गातिस्था' इति सिचो लुकि तत्सिद्धिः।

**शेते।** शीङो लटस्तप्रत्यये शपो लुकि 'सार्वधातुकमपित्' इति तप्रत्ययस्य ङित्त्वात् 'क्ङिति च' इति गुणनिषेधे प्राप्ते 'शीङः 'सार्वधातुके गुणः' इति गुणे तत्सिद्धिः।

**शेरते।** शीङो लटो झप्रत्यये शपो लुकि 'शीङः सार्वधातुके गुणः' इति गुणे 'आत्मनेपदेष्वनतः' इति झस्याताादेशे टेरेत्वे 'शीङो रुट्' इति रुटि तत्सिद्धिः।

**शयीत।** शीङो लिङस्तप्रत्यये शपो लुकि 'शीङः सार्वधातुके गुणः' इति गुणे सीयुटि सलोपेऽयादेशे यलोपे तत्सिद्धिः।

**अधिजगे।** अधिपूर्वादिङो लिटि, गाङ् लिटि' इति इङो गाङादेशेऽनुबन्धलोपे लिटस्तस्यैशि द्वित्वेऽभ्यासत्वे ह्रस्वे चुत्वे 'आतो लोप इटि च' इत्यालोपे तत्सिद्धिः।

**अध्ययै।** अधिपूर्वादिङो लोट इट एत्वे 'आडुत्तमस्य पिच्च' इत्याटि वृद्धौ अधि इ ऐ इति स्थिते गुणे अयादेशे यणि तत्सिद्धिः।

---

५८४. इण्-धातु के स्थान में गाङ् आदेश होता है लुङ् परे रहते।

५८५. शीङ् धातु को गुण होता है सार्वधातुक परे रहते।

५८६. शीङ् से परे झ के स्थान में जो आदेश उसके अकार को रुट् का आगम होता है।

५८७. इङ् को गाङ् आदेश होता है लिट् परे रहते।

अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ।

५८८. **विभाषा लुङ्लृङोः २।४५०॥** इङो गाङ् वा स्यात् लुङ्लृङोः ।

५८९. **गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१ ॥** गाङादेशात् कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ।

५९०. **घुमास्थागापाजहातिसां हलि ६।४।६६ ॥** एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत ॥ दुह प्रपूरणे ॥ २१ ॥ दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धासि, दोग्धासे ।

---

**अध्ययावहै** । अधिपूर्वादिङो लोटो वहिप्रत्यये शपो लुकि टेरेत्वे एकारस्य ऐकारे आटि गुणे अयादेशे यणि तत्सिद्धिः ।

**अध्यैत** । अधिपूर्वादिङो लङस्तप्रत्यये शपो लुकि आटि वृद्धौ यणि तत्सिद्धिः ।

**अध्यैयाताम्** । अधिपूर्वादिङो लङ आतामि शपो लुकि परत्वादियङ तत आटि वृद्धौ यणि तत्सिद्धिः ।

**अधीयीत** । अधिपूर्वादिङो लिङस्तप्रत्यये शपो लुकि सीयुटि सुटि सलोपे यलोपे इयङि सवर्णदीर्घे तत्सिद्धिः ।

**अध्यगीष्ट** । अधिपूर्वादिङो लुङस्तप्रत्यये 'विभाषा लुङ्लृङोः' इति गाङादेशेऽटि च्लेः सिचि 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति सिचो ङित्त्वे 'घुमास्थागापाजहातिसां हलि' इति ईत्वे यणि षत्वे ष्टुत्वे अध्यगीष्ट इति । गाङोऽभावे आटि वृद्धौ पूर्वोक्तकार्ये अध्यैष्टेति च सिद्धम् ।

**दोग्धि** । दुहो लटस्तिपि शपो लुकि 'दादेर्धातोर्घः' इति हस्य घत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धकारे घस्य घस्य जश्त्वेन गकारे गुणे तत्सिद्धिः ।

**धोक्षि** । दुहो लटः सिपि शपो लुकि गुणे हस्य घत्वे 'एकाचो बशो भष्' इति दस्य भष्भावेन धकारे घस्य चर्त्वे षत्वे तत्सिद्धिः ।

---

५८८. इङ् को गाङ् आदेश होता है विकल्प से लुङ् और लृङ् परे रहते ।

५८९. गाङ् आदेश और कुटादि से परे जो ञित, णित् प्रत्यय वे ङित होते हैं ।

५९०. घु संज्ञक और मा, स्था, गा, पा, जहाति और सा धातुओं के आकार को ईकार होता है हलादि कित्, ङित आर्धधातुक परे रहते ।

धोक्ष्यति, धोक्ष्यते। दोग्धु, दुग्धात्। दुग्धाम्। दुहन्तु। दुग्धि, दुग्धात्। दुग्धम्। दुग्ध। दोहानि। दोहाव। दोहाम। दुग्धाम्। दुहाताम्। दुहताम्। धुक्ष्व। दुहाथाम्। धुग्ध्वम्। दोहै। दोहावहै। दोहामहै। अधोक्। अदुग्धाम्। अदुहन्। अदोहम्। अदुग्ध। अदुहाताम्। अदुहत अधुग्ध्वम्। दुह्यात्, दुहीत।

**५९१. लिङ्सिचावात्मनेपदेषु १।२।११॥** इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि। धुक्षीष्ट।

**५९२. शल इगुपधादनिटः क्सः ३।१।४५॥** इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात्। अधुक्षत्।

**५९३. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३॥** एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि। अदुग्ध, अधुक्षत।

---

**धोक्ष्यति।** दुहो लृटस्तिपि स्ये गुणे घत्वे भष्भावे चर्त्वे षत्वे तत्सिद्धिः।

**दुग्धि।** दुहो लोटः सिपो हौ हस्य घत्वे 'हुझल्भ्यो हेर्धिः' इति हेर्धौ जश्त्वे तत्सिद्धिः।

**धुक्ष्व।** दुहो लोटस्थासः से आदेशे शपो लुकि घत्वे भष्भावे चर्त्वे षत्वे 'सवाभ्यां वामौ' इति एकारस्य वादेशे तत्सिद्धिः।

**अधोक्।** दुहो लङस्तिपि इकारलोपे शपो लुकि अटि गुणे 'हल्ङ्याब्भ्यः' इति तलोपे हस्य घत्वे भष्भावे जश्त्वे चर्त्वे तत्सिद्धिः।

**अदुग्ध।** दुहो लङस्तप्रत्यये शपो लुकि अटि हस्य घत्वे तस्य धत्वे जश्त्वे तत्सिद्धिः।

**धुक्षीष्ट।** दुह आशीर्लिङस्तप्रत्यये 'लिङ्सिचावात्मनेपदेषु' इति तस्य कित्त्वाद् गुणाभावे सीयुटि सुटि यलोपे हस्य घत्वे भषभावे चर्त्वे षत्वे तत्सिद्धिः।

**अधुक्षत्।** दुहो लुङस्तिपि इकारलोपेऽटि च्लौ 'शलइगुपधादनिट, क्सः' इति च्लेः क्सादेशेऽनुबन्धलोपे घत्वे भष्भावे चर्त्वे षत्वे तत्सिद्धिः।

**अधुग्ध।** दुहो लुङस्तप्रत्ययेऽटि च्लौ 'शल इगुपधादनिटः क्सः' इति च्लेः

---

५९१. इक्समीप जो हल उससे पर जो झलादि लिङ् सिच् वह कित् हो आत्मनेपद में।

५९२. इक् उपधा हो जिसकी ऐसे शलन्त से पर अनिट् च्लि को क्स आदेश हो।

५९३. दुह, दिह, लिह, गुह धातुओं से परे क्स का लोप होता है विकल्प से दन्त्य तङ् परे रहते।

**५९४. क्सस्याचि ७।३।७२ ॥** अजादौ तङि क्सस्य लोपः। अलोऽन्त्यस्येति लोपः। अधुक्षाताम्। अधुक्षन्त। अदुग्धाः। अदुक्षथाः। अधुक्षाथाम्। अधुग्ध्वम्, अधुक्षध्वम्। अधुक्षि। अदुह्वहि, अधुक्षावहि। अधुक्षामहि। अधोक्ष्यत। एवम्—दिह उपचये ॥२२॥ लिह आस्वादने ॥२३॥ लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लिलेह, लिलिहे। लेढासि, लेढासे। लेक्ष्यति, लेक्ष्यते। लेढु। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्, अलेड्। आलिक्षात्, अलीढ, अलिक्षात। अलेक्ष्यत्, अलेक्ष्यत। ब्रूञ् व्यक्तायां वाचि ॥२४॥

**५९५. ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४ ॥** ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः। आह। आहतुः। आहुः।

---

क्सादेशे 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति क्सस्य लुकि घत्वे धत्वे जश्त्वे अदुग्ध इति। लुगभावपक्षे अधुक्षत इति च सिद्धम्।

**अधुक्षाताम्**। दुहो लुङ आताम्यटि च्लेः क्सादेशे 'अलोऽन्त्यस्य' इति परिभाषया 'क्सस्याचि' इति सकारोत्तराकारस्य लोपे घत्वे भष्भावे चर्त्वे षत्वे तत्सिद्धिः।

**अदुग्धाः**। दुहो लुङस्थासि अटि च्लेः क्सादेशे 'लुग्वा दुह' इति क्सस्य लुकि घत्वे थस्य धत्वे जश्त्वे रुत्वविसर्गयोः अदुग्धाः इति। लुगभावे हस्य घत्वे भष्भावे चर्त्वे षत्वे अधुक्षथाः इति च सिद्धम्।

**लेढि**। लिहो लटस्तिपि शपो लुकि गुणे होढः' इति हस्य ढत्वे 'झषस्तथोर्धोधः' इति तस्य धत्वे ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे तत्सिद्धिः।

**लेक्षि**। लिहो लटः सिपि शपो लुकि गुणे हस्य ढत्वे 'षढोः कः सि इति ढस्य कत्वे षत्वे तत्सिद्धिः।

**अलीढ**। लिहो लुङस्तप्रत्ययेऽटि च्लेः क्सादेशे 'लुग्वा दुह' इति सस्य लुकि हस्य ढत्वे तस्य धत्वे ष्टुत्वे ढलोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे अलीढ इति। लुगभावे ढत्वे 'षढोःकः सि' इति ढस्य कत्वे षत्वे अलिक्षत इति च सिद्धम्।

**आह**। ब्रूधातोर्लटस्तिपि शपो लुकि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति

---

५९४. अजादि तङ परे रहते क्स का लोप होता है।

५९५. ब्रुव धातु के लट् के स्थान में जो तिबादि पाँच उनके स्थान में णलादि पाँच होते हैं विकल्प से और ब्रुव के स्थान में आह आदेश होता है।

५९६. **आहस्थः ८।२।३५ ॥** झलि परे हस्य थः स्यात्। चर्त्वम्। आत्थ। आहथुः।

५९७. **ब्रुव ईट् ७।३।९३ ॥** ब्रुवः परस्य हलादेः पित ईट् स्यात्। ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रूते। ब्रुवाते। ब्रुवते।

५९८. **ब्रुवो वचिः २।४।५३ ॥** आर्धधातुके। उवाच। ऊचतुः। ऊचुः। उवचिथ, उवक्थ। ऊचे। वक्तासि, वक्तासे। वक्ष्यति, वक्ष्यते। ब्रवीतु, ब्रूतात्। ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्। ब्रवै। अब्रवीत्, अब्रूत। ब्रूयात्, ब्रुवीत। उच्यात्, वक्षीष्ट।

५९९. **अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२ ॥** एभ्यश्च्लेरङ् स्यात्।

---

तिपो णलि ब्रुव आहादेशे च आह इति। पक्षे 'ब्रुव ईट्' इति ईटि गुणेऽवादेशे ब्रवीति इति च सिद्धम्।

**आत्थ**। ब्रुवो लटः सिपि शपो लुकि 'ब्रुवः पञ्चानाम्' इति सिपस्थलि ब्रुव आहादेशे च 'आहस्थः' हस्य थकारे तस्य चर्त्वे आत्थ इति। पक्षे ईटि गुणेऽवादेशे षत्वे ब्रवीषि इति च सिद्धम्।

**उवाच**। ब्रुवो लिटस्तिपो णलि तस्यार्धधातुकत्वात् 'ब्रुवो वचिः' इति ब्रुवो वचादेशे द्वित्वेऽभ्यासत्वे हलादेः शेषे 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे 'अत उपधायाः' इत्युपधावृद्धौ तत्सिद्धिः।

**ऊचतुः**। ब्रुवो लिटस्तस अतुसि तस्य कित्त्वात् 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे ततो द्वित्वे हलादेः शेषे सवर्णदीर्घे रुत्वे विसर्गे तत्सिद्धिः।

**उवचिथ**। ब्रुवो लिटः सिपस्थलि द्वित्वे हलादिशेषे 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे भारद्वाजनियमाद्वेटि उवचिच इति। इडभावपक्षे कुत्वे उवक्थेति च सिद्धम्।

**ब्रवै**। ब्रुवो लोट इट एत्वे तस्य ऐकारे आटिवृद्धौ आटः पित्त्वेन ङित्त्वाभावाद् गुणेऽवादेशे तत्सिद्धिः।

---

५९६. झल परे रहते हकार के स्थान में थकार होता है।

५९७. ब्रुव से परे हलादि कित को ईट् का आगम होता है।

५९८. ब्रुव धातु के स्थान में वच आदेश होता है आर्धधातुक परे रहते।

५९९. अस्यति वक्ति और ख्याति धातुओं से परे च्लि के स्थान में अङ् आदेश होता है।

**६००. वच उम् ७।४।२०** ॥ अङि परे। अवोचत्, अवोचत। अवक्ष्यत्, अवक्ष्यत। (ग० चर्करीतं च ) चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तददादौ बोध्यम्। ऊर्णुञ् आच्छादने ॥२५॥

**६०१. ऊर्णोतेर्विभाषा ७।३।९०** ॥ वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति, ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुवाते। ऊर्णुवते। ( वा० ऊर्णोतेराम्नेति वाच्यम् )।

**६०२. न न्द्राः संयोगादयः ६।१।३** ॥ अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुवुतुः।

**६०३. विभाषोर्णोः १।२।३** ॥ इडादिप्रत्ययो वा ङित्स्यात्। ऊर्णुनुविथ। ऊर्णुविता, ऊर्णविता। ऊर्णुविष्यति, ऊर्णविष्यति। ऊर्णौतु। ऊर्णवानि। ऊर्णवै।

---

**अवोचत्**। ब्रुवो लुङस्तिप इकारलोपेऽटि च्लौ 'ब्रुवो वचिः' इति वचादेशे 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङि 'वच उम्' इत्युमागमे गुणे तत्सिद्धिः।

**ऊर्णौति**। ऊर्णुधातोर्लटस्तिपि शपो लुकि 'ऊर्णोतेर्विभाषा' इति पाक्षिकवृद्धौ ऊर्णौति इति। वृद्ध्यभावपक्षे गुणे ऊर्णोति इति च सिद्धम्।

**ऊर्णुनाव**। ऊर्णुधातोर्लिटस्तिपो णलि 'ऊर्णोतेराम्नेति वाच्यम्' इत्याम्निषेधे 'नन्द्राः संयोगादयः' इति रेफद्वित्वनिषेधे द्वित्वे कर्त्तव्ये णत्वस्यासिद्धत्वात् नुशब्दस्य द्वित्वेऽभ्यासत्वे 'रषाभ्याम्' इति पूर्वनकारस्य णत्वे वृद्धौ आवादेशे तत्सिद्धिः।

**ऊर्णुनुविथ**। ऊर्णुधातोर्लिटः सिपस्थलि आम्निषेधे 'नन्द्राः' इति रेफस्य द्वित्वनिषेधे णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वे इटि 'विभाषोर्णोः' इति थलो ङित्वाद् गुणाभावे उवङि ऊर्णुनुविथइ ति। ङित्त्वाभावे गुणेऽवादेश ऊर्णुनविथेति च सिद्धम्।

**ऊर्णवै**। ऊर्णुधातोः आत्मनेपदे लोटि इटि प्रत्यये शपो लुकि टेरेत्वे आटि 'ए ऐ' इत्यैत्वे 'आटश्च' इति बृद्धौ गुणे अवादेशे ऊर्णवै इति सिद्धम्।

---

६००. वच् धातु को उम् का आगम होता है अङ् परे रहते। (ग) यङ्लुङन्त की चर्करीतं संज्ञा है। अर्थात् अदादि विशेष विहित कार्य यङ् लुगन्त में भी होंगे।

६०१. ऊर्णूञ् धातु को वृद्धि होती है विकल्प से हलादिपित सार्वधातुक परे रहते। ( वा० ) ऊर्णूञ् को आम् का आगम नहीं होता।

६०२. अच् से परे संयोग के आदि में स्थित न, द, र को द्वित्व नहीं होता।

६०३. ऊर्णूञ् धातु से परे इडादि प्रत्यय ङित् होते हैं विकल्प से।

६०४. **गुणोऽपृक्ते ७।३।९१** ॥ ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुविषीष्ट । ऊर्णविषीष्ट ।

६०५. **ऊर्णोतेर्विभाषा ७।२।६** ॥ इडादौ सिचि वा वृद्धिः परस्मैपदे परे । पक्षे गुणः । और्णावीत्, और्णुवीत्, और्णवीत् । और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम् । और्णुविष्ट, और्णविष्ट । और्णुविष्यत्, और्णविष्यत्; और्णुविष्यत, और्णविष्यत ।

॥ इत्यदादयः ॥



---

**और्णोत्** । ऊर्णुधातोर्लङस्तिपि इकारलोपे शपो लुक्याटि वृद्धौ वृद्धिं बाधित्वा 'गुणोऽपृक्ते' इति गुणे तत्सिद्धिः ।

**ऊर्णुविषीष्ट** । ऊर्णुधातोराशीर्लिङस्तप्रत्यये सीयुटि सुटि यलोपे इटि 'विभाषोर्णोः' इति ङित्त्वाद् गुणाभावे उवङि षत्वे ष्टुत्वे ऊर्णुविषीष्टेति । ङित्त्वाभावपक्षे गुणेऽवादेशे ऊर्णविषीष्टेति च सिद्धम् ।

**ऊर्णोतेर्विभाषा** । अत्र 'सिचिवृद्धिः परस्मपदेषु' इति सूत्रम् । 'नेटि' इत्यतः इटि इति पदमनुवर्तते ।

**और्णुवीत्** । ऊर्णुधातोर्लुङस्तिप इकारलोपे आटि वृद्धौ च्लेः सिचि इटि ईटि 'विभाषोर्णो' इति ङित्त्वाद् गुणाभावे उवङि सलोपे दीर्घे और्णुवीत् इति । ङित्त्वाभावपक्षे गुणं बाधित्वा 'ऊर्णोतेर्विभाषा' इति वृद्धावावादेशे और्णावीत् इति । वृद्ध्यभावपक्षे गुणेऽवादेशे और्णवीत् इति च सिद्धम् ।

**और्णुविष्ट** । ऊर्णुधातोर्लुङ आत्मनेपदे तप्रत्यये आटि वृद्धौ च्लेः सिचि इटि 'विभाषोर्णोः' इति ङित्त्वाद् गुणाभावे उवङि षत्वे ष्टुत्वे और्णुविष्ट इति । पक्षे गुणेऽवादेशे और्णविष्टेति च सिद्धम् ।

॥ इत्यदादयः ॥



---

६०४. ऊर्णुञ् धातु को गुण होता है अपृक्त हलादि पित् सार्वधातुक परे रहते ।

६०५. इडादि परस्मैपद सिच् परे रहते ऊर्णु से अन्तावयव उकार के स्थान में वृद्धि होती है ।

# अथ जुहोत्यादयः

६०६. **जुहोत्यादिभ्यः श्लुः २।४।७५** ॥ शपः श्लुः स्यात् ।

६०७. **श्लौ ६।१।१०** ॥ धातोर्द्वे स्तः । जुहोति । जुहुतः ।

६०८. **अदभ्यस्तात् ७।१।४** ॥ झस्यात्स्यात् । हुश्नुवोरिति यण् । जुह्वति ।

६०९. **भीह्रीभृहुवां श्लुवच्च ३।१।३९** ॥ एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ।

---

**जुहोति** । हुधातोर्लटस्तिपि शपि 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लौ 'श्लौ' द्वित्वेऽभ्यासत्वे चुत्वे जश्त्वे गुणे जुहोति इति सिद्धम् ।

**जुह्वति** । हुधातोर्लटो झौ शपः श्लौ द्वित्वेऽभ्यासत्वे चुत्वे जश्त्वे 'अदभ्यस्तात्' इति झस्य अत् इत्यादेशे 'अचिश्नु' इति प्राप्तमुवङ् बाधित्वा 'हुश्नुवोः सार्वधातुके' इति यणि तत्सिद्धिः ।

**जुहवाञ्चकार** । हुधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इति पाक्षिके आमि श्लुवद्भावे च तेन द्वित्वेऽभ्यासत्वे चुत्वेन झकारे 'अभ्यासे चर्च' इति जश्त्वेन जकारे गुणेऽवादेशे 'आमः' इति लिटो लुकि लिट्परकृञोऽनुप्रयोगे लिटस्तिपो णलि द्वित्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे चुत्वे गुणे रपरे उपधावृद्धौ अनुस्वारे परसवर्णे तत्सिद्धिः । आमोऽभावपक्षे लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये वृद्धौ आवादेशे जुहाव इति सिद्ध्यति ।

**जुहुधि** । हुधातोर्लोटः सिपो हौ शपः श्लौ द्वित्वे चुत्वे जश्त्वे 'हुझल्भ्यो हेर्धिः' इति हेर्धौ तत्सिद्धिः ।

**जुहवानि** । हुधातोर्लोटो मिपि शपः श्लौ द्वित्वे चुत्वे जश्त्वे मेर्न्यादेशे आटि 'हुश्नुवोः' इति यणं बाधित्वा परत्वाद् गुणेऽवादेशे तत्सिद्धिः ।

---

६०६. जुहोत्यदिगणपठित जो धातुः उससे परे शप् के स्थान में श्लु होता है ।

६०७. श्लु परे रहते धातु को द्वित्व होता ।

६०८. अभ्यस्त से परे झ के स्थान पर अत् आदेश होता है ।

६०९. भी, ह्री, भृ, हु इनसे आम् प्रत्यय हो विकल्प से लिट् पर रहते और आम् प्रत्यय पर रहते श्लुके सदृश कार्य हो ।

६१०. **जुसि च । ७।३।८३ ॥** इगन्ताङ्गस्य गुणोऽजादौ जुसि । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ।

६११. **भियोऽन्यतरस्याम् ६।४।११५ ॥** इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः । बिभ्यति । बिभयाञ्चकार, बिभाय । भेता । भेष्यति । बिभेतु, बिभितात्, बिभीतात् । अबिभेत् । बिभियात्, बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् ॥ ह्री लज्जायाम् ॥ ३ ॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार, जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥ पॄ पालनपूरणयोः ॥ ४ ॥

६१२. **अर्तिपिपर्त्योश्च ७।४।७७ ॥** अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥

६१३. **उदोष्ठ्यपूर्वस्य ७।१।१०२ ॥** अङ्गावयवौष्ठ्यपूर्वो य ऋत् तदन्तस्याङ्गस्य उत् स्यात् ।

---

**अजुहवुः** । हुधातोर्लङो झौ शपः श्लौ द्वित्वे चुत्वे जश्त्वे 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसि 'हुश्नुवोः' इति यणं बाधित्वा परत्वात् 'जुसि च' इति गुणेऽवादेशे रुत्वे विसर्गे तत्सिद्धिः ।

**बिभेति** । भियो लटस्तिपि शपः श्लौ द्वित्वे जश्त्वे गुणे तत्सिद्धिः ।

**बिभितः** । भियो लटस्तसि शपः श्लौ द्वित्वे जश्त्वे 'भियोऽन्यतरस्याम्' इति पाक्षिके इकारे रुत्वविसर्गयोः बिभितः इति । पक्षे बिभीत इति च सिद्धम् ।

**बिभ्यति** । भियो लटो झौ शपः श्लौ द्वित्वे जश्त्वे 'अदभ्यस्तात्' इति झस्याति 'एरनेकाच' इति यणि तत्सिद्धिः ।

**बिभयाञ्चकार** । भियो लिटि 'भीह्रीभृहुवां श्लुवच्च' इत्यामि श्लुवद्भावे च तेन द्वित्वेऽभ्यासकार्ये गुणे उपधावृद्धौ अनुस्वारे परसवर्णे तत्सिद्धिः । पक्षे द्वित्वादिके बिभाय इति च सिद्धम् ।

**पिपर्ति** । पॄधातोर्लटस्तिपि शपः श्लौ द्वित्वे 'अर्तिपिपर्त्योश्च' इति अभ्यासऋकारस्य इकारे 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वं बाधित्वा परत्वाद् गुणे रपरे तत्सिद्धिः ।

---

६१०. इगन्त को गुण होता है अजादि जुस् परे रहते है ।

६११. हलादि कित् ङित्, सार्वधातुक परे रहते भी धातु को इकार होता है ।

६१२. अभ्याससंज्ञक को इकार अन्तादेश होता है श्लु परे रहते ।

६१३. अङ्ग का अवयव ओष्ठस्थानिकवर्ण पूर्व हो जिससे ऐसा जो ॠ तदन्त अङ्ग को उकार हो ।

६१४. **हलि च ८।२।७७॥** रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि। पिपूर्तः। पिपुरति। पपार।

६१५. **शॄदॄप्रां ह्रस्वो वा ७।४।१२॥** एषां लिटि ह्रस्वो वा स्यात्। पप्रतुः।

६१६. **ऋच्छत्यॄताम् ७।३।११॥** तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणो लिटि। पपरतुः पपरुः।

६१७. **वॄतो वा ७।२।३८॥** वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परीता, परिता। परीष्यति, परिष्यति। पिपर्तु। अपिपः। अपिपूर्ताम्। अपिपरुः। पिपूर्यात्। पूर्यात्। अपारीत्।

---

**पिपूर्त्तः।** पॄधातोर्लटस्तसि शपः श्लौ द्वित्वेऽभ्यासत्वे 'अर्त्तिपिपर्त्योश्च' इति इत्वे 'उदोष्ठ्यपूर्वस्य इति ॠकारस्य उत्वे रपरे 'हलि च', इत्युधादीर्घे रुत्वे विसर्गे तत्सिद्धिः।

**पप्रतुः।** पॄधातोर्लिटस्तस अतुसि द्वित्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे 'ऋच्छत्यॄताम्' इति गुणं बाधित्वा 'शॄदॄप्रां ह्रस्वो वा' इति पाक्षिके ह्रस्वे यणि रुत्वे विसर्गे पप्रतुरिति। ह्रस्वाभावे 'ऋच्छत्यॄताम्' इति गुणे रपरे पपरतुरिति च सिद्धम्।

**परिता।** पॄधातोर्लुटस्तिपि तसि इटि गुणे रपरे तिपो डादेशे डित्वाट्टिलोपे 'वॄतो वा' पाक्षिके दीर्घे परीता इति। पक्षे परिता इति च सिद्धम्।

**अपिपः।** पॄधातोर्लङस्तिप इकारलोपेऽडि शपः श्लौ द्वित्वे 'अर्तिपिपर्त्योश्च' इति इत्वे गुणे रपरे 'हल्ङ्याब्भ्यः' इति तलोपे विसर्गे तत्सिद्धिः।

**पिपूर्यात्।** पॄधातोर्विधिलिङस्तिप इकारलोपे शपः श्लौ द्वित्वे अभ्यासस्य इत्वे यासुटि सलोपे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरे 'हलि च' इति दीर्घे तत्सिद्धिः।

---

६१४. रेफान्त वान्त धातु की उपधा के इक को दीर्घ होता है हल परे रहते।

६१५. शॄ दॄ पॄ धातु को लट् परे रहते ह्रस्व होता है।

६१६. तुदादिगणपठित ऋच्छधातु, ऋधातु और ॠकारान्त धातु को गुण हो लिट् पर रहते।

६१७. वृङ् वृञ् धातु और ॠदन्त धातु से परे इट को दीर्घ होता है, विकल्प से, लिट् परे न रहने पर।

**६१८. सिचि च परस्मैपदेषु ७।२।४०** ॥ अत्र इटो न दीर्घः। अपारिष्टाम्। अपरीष्यत्, अपरिष्यत्। ओहाक् त्यागे। ५। जहाति।

**६१९. जहातेश्च ६।४।११६** ॥ इद्वा स्याद्धलादौ क्ङिति सार्वधातुके। जहितः।

**६२०. ई हल्यघोः ६।४।११३** ॥ श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलादौ, न तु घोः। जहीतः।

**६२१. श्नाभ्यस्तयोरातः ६।४।११२** ॥ अनयोरातो लोपः क्ङिति सर्वधातुके। जहति। जहौ। हाता। हास्यति। जहातु, जहितात्, जहीतात्।

**६२२. आ च हौ ६।४।११७** ॥ जहातेर्हौ परे आ स्याच्चादिदीतौ। जहाहि, जहिहि, जहीहि। अजहात्। अजहुः।

---

**अपारिष्टाम्**। पॄधातोर्लुङस्तसस्तामि अटि च्लेः सिचि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरे षत्वे ष्टुत्वे 'वॄतो वा' इति प्राप्तदीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधे तत्सिद्धिः।

**जहितः**। हाधातोर्लटस्तसि शपः श्लौ द्वित्वेऽभ्यासत्वे ह्रस्वे चुत्वे जश्त्वे 'जहातेश्च' इति इत्वे रुत्वे विसर्गे जहितः इति। इत्वाभावे 'ईहल्यघोः' इति ईत्वे जहीतः इति च सिद्धम्।

**जहति**। हाधातोर्लटो झौ शपः श्लौ द्वित्वेऽभ्यासकार्ये 'अदभ्यस्तात्' इति झस्याति 'श्नाभ्यस्तयोरातः' इत्यालोपे तत्सिद्धिः।

**जहौ**। हाधातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये 'आत औ णलः' इति णल औकारे वृद्धौ तत्सिद्धिः।

**जहाहि**। हाधातोर्लोटः सिपो हौ शपः श्लौ द्वित्वे चुत्वे जश्त्वे 'आ च हौ' इत्यात्वे जहाहि इति। इत्वे जहिहि, इति। ईत्वे जहीहि इति च सिद्धम्।

---

३१८. परस्मैपद सिच परे रहते इट को दीर्घ नहीं होता।

६१९. हा धातु को इत् होता है विकल्प से हलादि कित् ङित् सार्वधातुक परे रहते।

६२०. श्नाप्रत्यय और अभ्यस्तसंज्ञक धातु के आकार को ईकार हो हलादि कित् ङित् सार्वधातुक पर रहते और घुसंज्ञक धातु के आकार को ईकार न हो।

६२१. श्ना प्रत्यय और अभ्यस्तसंज्ञक धातु के आकार का लोप होता है। कित् ङित् सार्वधातुक परे रहते।

६२२. हा धातु के आकार को इत और ईत होते। ही परे रहते।

६२३. **लोपो यि** ६।४।११८ ॥ जहातेरालोपो यादौ सार्वधातुके। जह्यात्। एर्लिङि। हेयात्। अहासीत्। अहास्यत्। माङ् माने शब्दे च। ६।

६२४. **भृञामित्** ७।४।७५ ॥ भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। मिमीते। मिमाते। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत। ओहाङ् गतौ। ७। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत। डुभृञ् धारणपोषणयोः। ८। बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते।

---

**जह्यात्**। हाधातोर्लिङस्तिपि इकारलोपे शपः श्लौ द्वित्वेऽभ्यासकार्ये यासुटि सलोपे 'लोपो यि' इत्यालोपे तत्सिद्धिः।

**हेयात्**। हाधातोराशीर्लिङस्तिप इकारलोपे यासुटि 'स्कोः' इति सलोपे 'एर्लिङि' इति एत्वे तत्सिद्धिः।

**अहासीत्**। हाधातोर्लुङस्तिप इकारलोपेऽटि च्लेः सिचि ईटि 'यमरमनमातां सक् च' इति सकि सिच इटि सलोपे दीर्घे तत्सिद्धिः।

**मिमीते**। माधातोर्लटस्तप्रत्यये टेरेत्वे शपः श्लौ द्वित्वे ह्रस्वे 'भृञामित्' इति इत्वे तस्य ङित्वात् 'ई हल्यघोः' इति ईत्वे तत्सिद्धिः।

**मिमाते**। माधातोर्लट आतामि टेरेत्वे शपः श्लौ द्वित्वेऽभ्यासह्रस्वे 'भृञामित्' इति इत्वे 'श्नाभ्यस्तयोरातः' इत्यालोपे तत्सिद्धिः।

**मिमते**। माधातोर्लटो झप्रत्यये टेरेत्वे शपः श्लौ द्वित्वे ह्रस्वे 'भृञामित्' इति इत्वे 'अदभ्यस्यस्तात्' इति झस्याति 'श्नाभ्यस्तयोरातः' इत्यालोपे तत्सिद्धिः।

**ममे**। माधातोर्लिटस्तस्य एशि द्वित्वेऽभ्यासकार्ये आलोपे तत्सिद्धिः।

**जिहीते**। हाङोलटस्तप्रत्यये टेरेत्वे शपः श्लौ द्वित्वे ह्रस्वे चुत्वे जश्त्वे 'भृञामित्' इति इत्वे 'ई हल्यघोः' इति ईत्वे तत्सिद्धिः।

**बिभर्ति**। भृञो लटस्तिपि शपः श्लौ द्वित्वेऽभ्यासकार्ये 'भृञामित्' इति इत्वे गुणे रपरे तत्सिद्धिः।

---

६२३. हा धातु के आकार का लोप होता है यकारादि सार्वधातुक रहते रहते।

६२४. भृञ् माङ् ओहाङ् इन तीन धातुओं के अभ्यास को इत होता है श्लु परे रहते।

बिभराञ्चकार, बभार। बभर्थ। बभृव। बिभराञ्चक्रे, बभ्रे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्, बिभ्रीत। भ्रियात्, भृषीष्ट। अभार्षीत्, अभृत। अभरिष्यत्, अभरिष्यत]। डुदाञ् दाने। ९। ददाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ, ददे। दातासि, दातासे। दास्यति, दास्यते। ददातु।

६२५. दाधाघ्वदाप् १।१।२०॥ दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। घ्वसोरित्येत्वम्। देहि। दत्तम्। अददात्, अदत्त। दद्यात् ददीत। देयात्, दासीष्ट। अदात्। अदाताम्। अदुः।

६२६. स्थाघ्वोरिच्च १।२।१७॥ अनयोरिदन्तादेशः, सिच्च कित्स्यादात्मनेपदे। अदित। अदास्यत्, अदास्यत। डुधाञ् धारणपोषणयोः। १०। दधाति।

---

**बिभराञ्चकार**। भृञो लिटि 'भीह्रीभृहुवां श्लुवच्च' इति आमि श्लुवद्भावे तेन द्वित्वेऽभ्यासकार्ये 'भृञामित्' इति इत्वे गुणे रपरे लिटो लुकि लिट्परकृञोऽनुप्रयोगे लिटस्तिपो णलि द्वित्वेऽभ्यासकार्ये गुणे रपरे उपधावृद्धौ अनुस्वारे परसवर्णे तत्सिद्धिः।

**दत्तः**। दाधातोर्लटस्तसि शपःश्लौ द्वित्वेऽभ्यासह्रस्वे तसो ङित्त्वात् 'श्नाभ्यस्तयोरातः' इत्यालोपे चर्त्वे रुत्वे विसर्गे तत्सिद्धिः।

**देहि**। दाधातोर्लोटः सिपो हौ 'दाधाघ्वदाप्' इति घुसंज्ञायाम् शपः श्लौ द्वित्वेऽभ्यासह्रस्वे 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येत्वाभ्यासलोपयोस्तत्सिद्धिः।

**अदत्त**। दाधातोर्लङस्तप्रत्यये शपः श्लौ द्वित्वेऽभ्यासह्रस्वे 'श्नाभ्यस्तयोरातः' इत्यालोपे चर्त्वे तत्सिद्धिः।

**अदात्**। दाधातोर्लुङस्तिप इलोपेऽटि च्लेः सिचि 'दाधाघ्वदाप्' इति घुत्वात् 'गातिस्था' इति सिचो लुकि तत्सिद्धिः।

**अदुः**। दाधातोर्लुङो झौ अटि च्लेः सिचो लुकि 'आतः' इति झेर्जुसि 'उस्यपदान्तात्' इति पररूपे रुत्वे विसर्गे तत्सिद्धिः।

**अदित**। दाधातोर्लुङस्तप्रत्ययेऽटि च्लेः सिचि 'दाधाघ्वदाप्' इति घुत्वात्

---

६२५. दारूप और धारूप धातु घु संज्ञक होते हैं दाप दैप को छोड़ कर।

६२६. स्था और घुसंज्ञक धातु को इकार अन्तादेश हो और इनसे परे सिच् प्रत्यय कित हो।

**६२७. दधस्तथोश्च ८।२।३८ ॥** द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । घ्वसोरेद्धावभ्यासलोपश्च । धेहि । अदधात्, अधत्त । दध्यात्, दधीत । धेयात्, धासीष्ट । अधात्, अधित । अधास्यत्, अधास्यत । णिजिर् शौचपोषणयोः । ११ । ( वा. ) इर इत्संज्ञा वाच्या ।

**६२८. णिजां त्रयाणां गुणः श्लौ ७।४।७५ ॥** णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज, निनिजे । नेक्ता । नेक्ष्यति, नेक्ष्यते । नेनेक्तु । नेनिग्धि ।

**६२९. नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७ ॥** लघूपधगुणो न स्यात् । नेनिजानि । नेनिक्ताम् । अनेनेक । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात्, निक्षीष्ट ।

---

'स्थाघ्वोरिच्च' इति इत्वे सिचः कित्त्वे च कित्त्वाद् गुणाभावे 'ह्रस्वादङ्गात्' इति सिचो लोपे तत्सिद्धिः ।

**धत्तः** । धाधातोर्लटस्तसि शपः श्लौ द्वित्वेऽभ्यासह्रस्वे 'श्नाभ्यस्तयोरातः' इत्यालोपे 'दधस्तथोश्च' इति भष्भावे चर्त्वे रुत्वे विसर्गे तत्सिद्धिः ।

**नेनेक्ति** । णिजिर् इत्यस्य 'इर इत्संज्ञा वाच्या' इति इर इत्संज्ञायां लोपे 'णो नः' इति नत्वे धातुत्वाल्लटस्तिपि शपः श्लौ द्वित्वे हलादिशेषे 'निजां त्रयाणां गुणः श्लौ' इत्यभ्यासगुणे 'पुगन्तलघूपधस्य च' इति उपधा गुणे कुत्वे चर्त्वे तत्सिद्धिः ।

**नेनिजति** । इरित्संज्ञकणिजो णस्य नत्वे धातुत्वाल्लटो झौ शपः श्लौ द्वित्वेऽभ्यासकार्ये झस्याति 'निजां त्रयाणाम्' इत्यभ्यासगुणे झेङित्वाल्लघूपधगुणाभावे तत्सिद्धिः ।

**नेनिग्धि** । णिजो णस्य नत्वे लोटः सिपो हौ शपः श्लौ द्वित्वेऽभ्यासकार्ये 'णिजाम्' इत्यभ्यासगुणे हेर्धौ कुत्वे तत्सिद्धिः ।

**नेनिजानि** । णिजो णस्य नत्वे लोटो मेर्नौ शपः श्लौ द्वित्वेऽभ्यासकार्ये आटि 'निजाम्' इत्यभ्यासगुणे आटः पित्वाल्लघूपधगुणे प्राप्ते 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति तन्निषेधे तत्सिद्धिः ।

---

६२७. कृतद्वित्व झषन्त धा धातु सम्बन्धी बश् को भष् हो त. थ. स. ध्व पर रहते ।

६२८. णिज् विज् विष् इन धातुओंके अभ्यासको गुण होता है श्लु परे रहते ।

६२९. अभ्यस्त संज्ञक अजादि पित् सार्वधातुक परे रहते लघूपधगुण नहीं होता ।

६३०. **इरितो वा ३।१।५७ ॥** इरितो धातोश्च्लेरङ् वा परस्मैपदेषु । अनिजत्, अनैक्षीत्, अनिक्त । अनेक्ष्यत्, अनेक्ष्यत ।

॥ इति जुहोत्यादयः ॥



## अथ दिवादयः

६३१. **दिवादिभ्यः श्यन् ३।१।६९ ॥** शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवम्—षिवु तन्तुसन्ताते । २ । नृती गात्रविक्षेपे । ३ । नृत्यति । ननर्त । नर्तिता ।

६३२. **सेऽसिचि कृतचृतछृदतृदनृतः ७।१।५७ ॥** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् ।

---

**अनिजत्** । णिजो णस्य नत्वे लुङस्तिप इकारलोपेऽटि च्लौ 'इरितो वा' इति च्लेरङि ङित्त्वाद्गुणाभावे तत्सिद्धिः । पक्षे च्लेः सिचि ईटि 'वदव्रज' इति वृद्धौ जस्य कुत्वे चर्त्वे षत्वे तत्सिद्धिः ।

॥ इति जुहोत्यादयः ॥



**दीव्यति** । दिव्धातोर्लटस्तिपि शपं बाधित्वा 'दिवादिभ्यः श्यन्' इति श्यन्-प्रत्यये अनुबन्धलोपे 'सार्वधातुकमपित्' इति ङित्त्वाद् गुणाभावे 'हलि च' इति दीर्घे तत्सिद्धिः ।

**दिदेव** । दिवो लिटस्तिपो णलि द्वित्वे हलादिशेषे 'पुगन्त' इतिगुणे तत्सिद्धिः ।

**अदेवीत्** । दिवो लुङस्तिप इकारलोपेऽटि च्लेः सिचि इटि ईटि सलोपे दीर्घे गुणे तत्सिद्धिः ।

**ननर्त्त** । नृत्धातोर्लिटस्तिपो णलि द्वित्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे गुणे रपरे तत्सिद्धिः ।

**नर्तिष्यति** । नृतो लृटस्तिपि स्यप्रत्यये तस्यार्धधातुकत्वे 'सेऽसिचि कृतचृतछृद-

---

६३०. इरित् धातु से परे च्लि को अङ् होता है परस्मैपद परे रहते ।

६३१. दिवादि गण पठित धातु से परे कर्त्ता अर्थ में श्यन् प्रत्यय होता है ।

६३२. कृत, चृत, छृद तृद नृत धातु से परे सिचभिन्न सादि आर्धधातुक से इट आगम होता है, विकल्प से ।

नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत्, अनर्त्स्यत् । त्रसी उद्वेगे । ४ । वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास ।

**६३३. वा जॄभ्रमुत्रसाम् ६।४।१२४ ॥** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता । शो तनूकरणे ॥ ५ ॥

**६३४. ओतः श्यनि ७।३।७१ ॥** लोपः स्यात् । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यसि ।

**६३५. विभाषा घ्राधेट्शाच्छासः २।४।७८ ॥** एभ्यस्सिचो लुग्वा स्यात् परस्मैपदे परे । अशात् । अशाताम् । अशुः । इट्सकौ । अशासीत् । अशासिष्टाम् । छो छेदने । ६ । छ्यति । षोऽन्तकर्मणि । ७ । स्यति । ससौ । दोऽवखण्डने । ८ । द्यति । ददौ । देयात् । अदात् । व्यध ताडने । ९ ।

---

तृदनृतः' इतोटि गुणे रपरे षत्वे नर्त्तिष्यति इति । इडभावे नर्त्स्यति इति च सिद्ध्यति ।

**अनर्तीत्** । नृतो लुङस्तिप इकारलोपेऽटि च्लेः सिचि इटि ईटि सलोपे गुणे रपरे सवर्णदीर्घे तत्सिद्धिः ।

**त्रेसतुः** । त्रस्धातोर्लिटस्तस अतुसि द्वित्वे हलादिशेषे अतुसः कित्त्वाद् 'वा जॄभ्रमुत्रसाम्' इति पाक्षिके एत्वेऽभ्यासलोपे रुत्वे विसर्गे त्रेसतुरिति । एत्वाभावपक्षे तत्रसतुरिति च सिद्धम् ।

**श्यति** । शोधातोर्लटस्तिपि शपं बाधित्वा 'दिवादिभ्यः श्यन्' इति श्यनि 'ओतः श्यनि' इत्योकारलोपे तत्सिद्धिः ।

**शशौ** । शोधातोर्लिटस्तिपो णलि 'आदेच उपदेशेऽशिति' इति आत्वे द्वित्वेऽभ्यासह्रस्वे 'आत औ णलः' इति णल औकारे वृद्धौ तत्सिद्धिः ।

**अशात्** । शोधातोर्लुङस्तिप इकारलोपेऽटि 'आदेच' इत्यात्वे च्लेः सिचि 'विभाषा घ्राधेट्शाच्छासः' इति पाक्षिके सिचो लुकि अशात् इति । सिज्लुगभावपक्षे ईटि 'यमरमनमातां सक् च' इति सकि सिच इटि 'इट ईटि' इति सलोपे सवर्णदीर्घे अशासीत् इति च सिद्धम् ।

---

६३३. जॄ भ्रम त्रष् धातुओं से कित लिट सेट् थल परे रहते एत्व होता है और अभ्यास का लोप होता है विकल्प से ।

६३४. ओकारान्त धातु से श्यन् परे रहते ओकार का लोप होता है ।

६३५. घ्रा गन्धोपादाने, धेट् पाने, शो तनूकरणे, छो छेदने, षो अन्तकर्मणि इन धातु से पर सिच् का लुक् हो विकल्प से परस्मैपदप्रत्यय पर रहते ।

**६३६. ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६ ॥** एषां सम्प्रसारणं स्यात्किति ङिति च। विध्यति। विव्याध। विविधतुः। विविधुः। विव्यधिथ, विव्यद्ध। व्यद्धा। व्यत्स्यति। विध्येत। विध्यात्। अव्यात्सीत्। पुष् पुष्टौ। १०। पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादीत्यङ्। अपुषत। शुष् शोषणे। ११। शुष्यति। शुशोष। अशुषत्। णश् अदर्शने। १२। नश्यति। ननाश। नेशतुः।

**६३७. रधादिभ्यश्च ७।२।४५ ॥** रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्। नेशिथ।

**६३८. मस्जिनशोर्झलि ७।१।६० ॥** नुम् स्यात्। ननंष्ठ। नेशिव, नेश्व।

---

**विध्यति**। व्यध्धातोर्लटस्तिपि शपं बाधित्वा श्यनि तस्य 'सार्वधातुकमपित्' इति ङित्वे 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इति सम्प्रसारणे पूर्वरूपे तत्सिद्धिः।

**विव्याध**। व्यधो लिटस्तिपो णलि द्वित्वे 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे हलादिशेषे उपधावृद्धौ तत्सिद्धिः।

**विविधतुः**। व्यधो लिटस्तस अतुसि तस्य कित्त्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे द्वित्वे हलादिशेषे रुत्वे विसर्गे तत्सिद्धिः।

**विव्यधिथ**। व्यधो लिटः सिपस्थलि द्वित्वे अभ्याससम्प्रसारणे पूर्वरूपे हलादिशेषे भारद्वाजनियमात्पाक्षिके इटि विव्यधिथ इति। इडभावे तु 'झषस्तथोर्धोऽधः' इति थस्य धत्वे जश्त्वे विव्यद्धेति च सिद्धम्।

**अव्यात्सीत्**। व्यधो लुङस्तिप इकारलोपेऽटि च्लेः सिचि ईटि 'वदव्रजहलन्तस्याचः' इति वृद्धौ धस्य चर्त्वेन तकारे तत्सिद्धिः।

**नेशिथ**। णश्धातोर्णस्य नत्वे लिटः सिपस्थलि द्वित्वे हलादिशेषे 'रधादिभ्यश्च' इति वेटि 'थलि च सेटि' इति एत्वेऽभ्यासलोपे च नेशिथेति। इडभावपक्षे 'मस्जिनशोर्झलि' इति नुम्यनुस्वारे 'व्रश्च' इति षत्वे ष्टुत्वे ननंष्ठेति च सिद्धम्।

---

६३६. ग्रह, ज्या, वय, व्यध, वश, विच व्रश्च पृच्छ भृज्ज धातुओं को सम्प्रसारण होता है कित् ङित् परे रहते।

६३७. रध नश तृप दृप द्रुह मुह स्नुह स्निह धातुओं से परे वलादि आर्धधातुक को इट् का आगम होता है।

६३८. मस्ज और नश धातु को नुम् आगम होता है झल परे रहते।

नेशिम्, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् नश्यात् । अनशत् । षूङ् प्राणिप्रसवे । १३ । सूयते । सुषुवे । क्रादि-नियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सविता, सोता । दूङ् परितापे । १४ । दूयते । दीङ् क्षये । १५ । दीयते ।

**६३९. दीङो युडचि क्ङिति ६।४।६३ ॥** दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) । दिदीये ।

**६४०. मीनातिमिनोतिदीङां ल्यपि च ६।१।५० ॥** एषामात्वं स्याल्ल्यपि चादशित्येज्निमित्ते । दाता । दास्यति । ( स्थाघ्वोरित्त्वे दीङः प्रतिषेधः ) । अदास्त । डीङ् विहायसा गतौ । १६ । डीयते । डिड्ये । डयिता । पीङ् पाने । १७ । पीयते । पेता । अपेष्ट । माङ् माने । १८ । मायते । ममे । जनी प्रादुर्भावे । १९ ।

---

**नशिष्यति** । णशो णस्य नत्वे ऌटस्तिपि स्यप्रत्यये तस्यार्धधातुकत्वाद् 'रधादिभ्यश्च' इति वेति नशिष्यति इति । इढभावपक्षे 'मस्जिनशोर्झलि' इति नुम्यनुस्वारे 'व्रश्च' इति शस्य षत्वे 'षढोः कः सि' षस्य कत्वे षत्वे परसवर्णे नङ्क्ष्यतीति च सिद्धम् ।

**अनशत्** । णशो णस्य नत्वे लङस्तिप इलोपेऽटि च्लौ 'पुषादि' इति च्लेरङि तत्सिद्धिः ।

**दिदीये** । दीङो लिटस्तस्य एशि द्वित्वेऽभ्यासह्रस्वे 'दीङो युडचि क्ङिति' इति युटि तस्यासिद्धत्वाद् 'एरनेकाच' इति यणि प्राप्ते 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इति युटः सिद्धत्वाद्यणोऽभावे तत्सिद्धिः ।

**दाता** । दीङो लुटस्तप्रत्यये 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वे तासि तिपो डादेशे डित्वाट्टिलोपे तत्सिद्धिः ।

**अदास्त** । दीङो लुङस्तप्रत्यये 'मीनाति' इत्यात्वे च्लेः सिचि 'दाधाघ्वदाप्' इति घुत्वात् 'स्थाघ्वोरिच्च' इतीत्वं प्राप्ते 'स्थाघ्वोरित्त्वे दीङः प्रतिषेधः' इति तन्निषेधे तत्सिद्धिः ।

---

६३९. दीङ् धातु से परे कित् ङित् आर्धधातुक को युट् आगम होता है ( वा. ) वुक और युट उवङ् और यण के परे सिद्ध रहते हैं ।

६४०. डुमिञ् प्रक्षेपणे, मीञ हिंसायाम्, दीङ् क्षये इन धातुको आत्व हो ल्यप् और शित् प्रत्यय से भिन्न एच्निमित्तक प्रत्यय पर रहते ।

**६४१. ज्ञाजनोर्जा ७।३।७९ ॥** अनयोर्जादेशः स्याच्छिति परे । जायते । जज्ञे । जनिता । जनिष्यते ।

**६४२. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१ ॥** एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ।

**६४३. चिणो लुक् ६।४।१०४ ॥** चिणः परस्य लुक् स्यात् ।

**६४४. जनिवध्योश्च ७।३।३५ ॥** अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट । दीपी दीप्तौ । २० । दीप्यते । दिदीपे । अदीपि, अदीपिष्ट । पद गतौ । २१ । पद्यते । पेदे । पत्ता । पत्सीष्ट ।

**६४५. चिण् ते पदः ३।१।६० ॥** पदेश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि । अपत्साताम् । अपत्सत । विद सत्तायाम् । २२ । विद्यते । वेत्ता । अवित्त । बुध अवगमने । २३ । बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट ।

---

**जायते** । जन्धातोर्लटस्तप्रत्यये टेरेत्वे 'दिवादिभ्यः श्यन्' इति शपं बाधित्वा श्यनि 'ज्ञाजनोर्जा' इति जनो जादेशे तत्सिद्धिः ।

**जज्ञे** । जनो लिटस्तस्य एशि द्वित्वे हलादिशेषे तस्य कित्त्वात् 'गमहन' इत्युपधालोपे श्चुत्वे तत्सिद्धिः ।

**अजनि** । जनो लुङस्तप्रत्ययेऽटि च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेश्चिणि 'चिणो लुक्' इति तस्य लुकि उपधावृद्धौ प्राप्तायाम् 'जनिवध्योश्च' इति तन्निषेधे तत्सिद्धिः । चिणोऽभावपक्षे च्लेस्सिचि इटि षत्वे ष्टुत्वे अजनिष्टेति सिद्ध्यति ।

**अपादि** । पदो लुङस्तप्रत्ययेऽटि च्लौ 'चिण् ते पदः' इति च्लेश्चिणि 'चिणो लुक्' इति तस्य लुकि उपधावृद्धौ तत्सिद्धिः ।

**भोत्स्यते** । बुधधातोर्लृटस्तप्रत्यये टेरेत्वे स्यप्रत्यये लघूपधगुणे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावे चर्त्वे तत्सिद्धिः ।

---

६४१. ज्ञा और जन धातु के स्थान में जा आदेश होता है शिति परे रहते ।

६४२ दीप जन बुध, पूरी, ताय्, प्याय् धातुओं से परे च्लि को चिण् होता है विकल्प में एकवचन में त शब्द परे रहते ।

६४३. चिण् से परे जो कोई उसका लोप होता है ।

६४४. जन और वध धातु के उपधा को वृद्धि नहीं होती चिण् ञित् णित् कृत् परे रहते ।

६४५. पद धातु से परे च्लि को चिण् आदेश होता है त शब्द परे रहते ।

अबोधि, अबुद्ध। अभुत्साताम्। युध संप्रहारे। २४। युध्यते। युयुधे। योद्धा। अयुद्ध। सृज विसर्गे। २५। सृज्यते। ससृजे। ससृजिषे।

६४६. **सृजिदृशोर्झल्यमकिति** ६।१।५८॥ अनयोरमागमः स्याज्झलादावकिति। स्रष्टा। स्रक्ष्यति। सृक्षीष्ट। असृष्ट। असृक्षाताम्। मृष तितिक्षायाम्। २६। मृष्यति, मृष्यते। ममर्ष। मर्मर्षिथ। ममृषिषे। मर्षितासि। मर्षिष्यति, मर्षिष्यते। णह बन्धने। २७। नह्यति, नह्यते। ननाह। नेहिथ, ननद्ध। नेहे। नद्धा। नत्स्यति। अनात्सीत्, अनद्ध।

इति दिवादयः॥ ४॥



---

**अबोधि**। बुधो लुङस्तप्रत्ययेऽटि च्लौ 'दीपजन' इति पाक्षिके च्लेश्चिणि लघूपधगुणे तस्य लुकि अबोधि इति। चिणोऽभावपक्षे च्लेः सिचि 'झलो झलि' इति सलोपे तस्य धकारे जश्त्वे अबुद्ध इति च सिद्धम्।

**स्रष्टा**। सृज्धातोर्लुटस्तिपि तासि डादेशे टिलोपे 'सृजिदृशोर्झल्यमकिति' इत्यमि यणि 'व्रश्च' इति षत्वे ष्टुत्वे तत्सिद्धिः।

**सृक्षीष्ट**। सृज्धातोः आशीर्लिङि तादेशे 'लिङः सीयुट्' इति सीयुटि उटावितौ 'सुट् तिथोः' इति सुटि उटो लोपे 'व्रश्चे' ति जस्य षत्वे जस्य कत्वे सस्य षत्वे 'लिङ् सिचावात्मनेपदेषु' इति कित्वात् अम्गुणयोः निषेधे सृक्षीष्ट इति सिद्धम्।

**नेहिथ**। णहधातोर्णस्य नत्वे लिटः सिपस्थलि द्वित्वे हलादिशेषे भारद्वाजनियमाद्वेटि 'थलि च सेटि' इत्येत्वाभ्यासलोपयोः नेहिथेति। इडभावपक्षे 'नहो धः' इति हस्य धकारे 'झषस्तथोर्धोऽधः' इति थस्य धकारे जश्त्वे ननद्ध इति च सिद्धम्।

**अनात्सीत्**। नहो लङस्तिप इलोपेऽति च्लेः सिचि इटि 'वदव्रज' इति वृद्धौ हस्य धत्वे चर्त्वे तत्सिद्धिः।

॥ इति दिवादयः॥



---

६४६. सृज विसर्गे, दृशिर् प्रेक्षणे इन धातुओं से अम् आगम हो कित्भिन्न झलादिप्रत्यय पर रहते।

## अथ स्वादयः ॥

६४७. **स्वादिभ्यः श्नुः ३।१।७३** ॥ शपोऽपवादः। सुनोति। सुनुतः। हुश्नुवोरिति यण्। सुन्वन्ति। सुन्वः, सुनुवः। सुनुते। सुन्वाते। सुन्वते। सुन्वहे, सुनुवहे। सुषाव, सुषुवे। सोता। सुनु। सुनवानि, सुनवै। सुनुयात्। सूयात्।

६४८. **स्तुसुधूञ्भ्यः परस्मैपदेषु ७।२।७२** ॥ एभ्यस्सिच इट् स्यात्परस्मैपदेषु। असावीत्, असोष्ट। चिञ् चयने। २। चिनोति, चिनुते।

६४९. **विभाषा चेः ७।३।५८** ॥ अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च। चिकाय, चिचाय, चिक्ये, चिच्ये। अचैषीत्, अचेष्ट। स्तृञ् आच्छादने। ३। स्तृणोति, स्तृणुते।

६५०. **शर्पूर्वाः खयः ७।४।६१** ॥ अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते। तस्तार। तस्तरतुः। तस्तरे। गुणोर्तीति गुणः स्तर्यात्।

---

**सुनोति**। षुधातोः षस्य 'धात्वादेः षः सः' इति सत्वे शपं बाधित्वा 'स्वादिभ्यः श्नुः' इति श्नुप्रत्ययेऽनुबन्धलोपे श्नुप्रत्ययस्य ङित्त्वात्सुनोतेर्गुणाभावे सार्षधातुकार्धधातुकयोः' इति नोर्गुणे तत्सिद्धिः।

**सुन्वः**। सुधातोर्लटो वसि श्नुप्रत्यये 'लोपश्चास्यान्यतरस्यां म्वोः' इति पाक्षिके उकारलोपे रुत्व विसर्गे सुन्वः। लोपाभावः सुनुवः इति रूपद्वयं सिद्ध्यति।

**सुनवानि**। सुधातोर्लोटो मेर्नौ श्नुप्रत्यये आटि गुणेऽवादेशे तत्सिद्धिः।

**सुनवै**। सुधातोर्लोट इट टेरेत्वे ऐत्वे श्नुप्रत्यये आटि वृद्धौ गुणेऽवादेशे तत्सिद्धिः।

**असावीत्**। सुधातोर्लुङस्तिप इकारलोपेऽटि च्लेः सिचि 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति इटि ईटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ सलोपे तत्सिद्धिः।

**चिकाय**। चिधातोर्लिटस्तिपो णलि द्वित्वे वृद्धौ आयादेशे 'विभाषा चेः' इति पाक्षिके कुत्वे चिकाय इति। पक्षे चिचाय इति च सिद्धम्।

**तस्तार**। स्तृधातोर्लिटस्तिपो णलि द्वित्वे 'उरत्' इत्यत्वे रपरे 'शर्पूर्वाःखयः' इत्यभ्यासतकारस्य शेषे गुणे रपरे उपधावृद्धौ तत्सिद्धिः।

---

६४७. स्वादि गण पठित धातु से कर्ता अर्थ में सार्वधातुक लकार में श्नु प्रत्यय होता है।

६४८. स्तु सु धूञ् धातु से परे सिच् को इट होता है परस्मैपद परे रहते।

६४९. चि धातु के अभ्यास से परे कुत्व होता है विकल्प से। सन् अथवा लिट् परे रहते।

६५०. अभ्यास के शर्पूर्वक खय् शेष रहते हैं अन्य हल् का लोप होता है।

**६५१. ऋतश्च संयोगादेः ७।२।४३ ॥** ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट, अस्तृत । धूञ् कम्पने । ४ । धुनोति, धुनुते । दुधाव । स्वरतीति वेट् । दुधविथ, दुधोथ ।

**६५२. श्र्युकः किति ७।२।११ ॥** श्रिञ् एकाच उगन्ताच्च गित्कितोरिण् न । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुवे । अधावीत्, अधविष्ट, अधोष्ट । अधविष्यत्, अधोष्यत् । अधविष्यताम्, अधोष्यताम् । अधविष्यत, अधोष्यत ।

इति स्वादयः ॥ ५ ॥



---

**स्तरिषोष्ट** । स्तृधातोराशीर्लिङस्तप्रत्यये सीयुटि यलोपे सुटि 'ऋतश्च संयोयादेः' इति वेटि गुणे रपरे षत्वे ष्टुत्वे स्तरिषीष्ट इति । इडभावपक्षे 'उश्च' इति कित्त्वाद्गुणाभावे स्तृषीष्टेति च सिद्धम् ।

**अस्तरिष्ट** । स्तृधातोर्लुङस्तप्रत्ययेऽटि च्लेः सिचि 'ऋतश्च संयोगादेः' इति वेटि गुणे रपरे षत्वे ष्टुत्वे अस्तरिष्टेति । इडभावे 'ह्रस्वादङ्गात्' इति सिचो लोपे अस्तृत इति सिद्धम् ।

**दुधविथ** । धूञो लिटः सिपस्थलि द्वित्वेऽभ्यासह्रस्वे जश्त्वे 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वेटि गुणेऽवादेशे दुधविथ इति । पक्षे दुधोथेति च सिद्धम् ।

**दुधुविव** । धूञो लिटो वसो वादेशे द्वित्वेऽभ्यासह्रस्वे जश्त्वे परमपि 'स्वरतिसूति' इति इड्विकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किति' इति इण्निषेधे प्राप्ते क्रादिनियमान्नित्यमिटि उवङि तत्सिद्धिः ।

**अधावीत्** । धूञो लुङस्तिप इकारलोपेऽटि च्लेस्सिचि 'स्वरति' इति इड्विकल्पं बाधित्वा 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति नित्ये इटि ईटि सलोपे 'सिचिवृद्धिः परस्मैपदेषु' इति वृद्धौ आवादेशे सवर्णदीर्घे तत्सिद्धिः ।

**अधविष्ट** । धूञो लुङस्तप्रत्ययेऽटि च्लेः सिचि 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वेटि गुणेऽवादेशे अधविष्टेति । इडभावे अधोष्टेति च सिद्धम् ।

॥ इति स्वादयः ॥



---

६५१ ऋदन्त संयोगादि से परे लिङ् और सिच् को इट् होता है विकल्प से तङ् परे रहते ।

६५२. श्रिञ् धातु एकाच और उगन्त से परे गित् कित् को इट् नहीं होता ।

## अथ तुदादयः ।

६५३. **तुदादिभ्यः शः** ३।१।७७ ॥ शपोऽपवादः । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौप्सीत्, अतुत्त । णुद प्रेरणे । २ । नुदति, नुदते नुनोद । नोत्ता । भ्रस्ज पाके । ३ । ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः भृज्जते ।

६५४. **भ्रस्जो रोपधयोरमन्यतरस्याम्** ६।४।४७ ॥ भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बर्भजिथ, बभर्ष्ठ । बभ्रज्ज ।

---

**तुदति** । तुदो लटस्तिपि शपं बाधित्वा 'तुदादिभ्यः श.' इति शप्रत्यये 'सार्वधातुकमपित्' इति तस्य ङित्त्वाद् गुणाभावे तत्सिद्धिः ।

**अतौत्सीत्** । तुदो लुङस्तिप इकारलोपेऽटि च्लेः सिचि ईटि 'वदव्रजहलन्तस्याचः' इति वृद्धौ चर्त्वे तत्सिद्धिः ।

**अतुत्त** । तुदो लुङस्तप्रत्ययेऽटि च्लेः सिचि 'झलो झलि' इति सलोपे चर्त्वे तत्सिद्धिः ।

**भृज्जति** । भ्रस्ज्धातोर्लटस्तिपि शप्रत्यये तस्य ङित्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे सस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे तत्सिद्धिः ।

**बभर्ज** । भ्रस्जो लिटस्तिपो णलि 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति रेफसकारयोः ।स्थाने मित्त्वादन्त्यादचः परे विकल्पेन रमि द्वित्वे हलादिशेषे जश्त्वे बभर्जेति, रमोऽभावपक्षे द्वित्वे 'लिट्यभ्यासस्योभयेषान्' इति सम्प्रसारणे पूर्वरूपे 'उरत्' इत्यत्वे रपरे हलादिशेषे जश्त्वे तस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे बभ्रज्जेति च सिद्धम् ।

**बर्भजिथ** । भ्रस्जो लिटः सिपस्थलि 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति पाक्षिके रमि द्वित्वे हलादिशेषे जश्त्वे भारद्वाजनियमाद्वेटि बर्भजिथेति । इडभावपक्षे 'व्रश्च' इति षत्वे ष्टुत्वे बभर्ष्ठेति । रमोऽभावे द्वित्वे सम्प्रसारणे पूर्वरूपे 'उरत्' इत्यत्वे

---

६५३. तुदादि गण पठत धातुओं से कर्ता अर्थ में सार्वधातुक प्रत्यय परे रहते श आगम होता है ।

६५४. भ्रश्च धातु के रेफ और उपधा के स्थान में रम आगम होता है आर्धधातुक परे रहते ।

बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभ्रजे, बभ्रज्ज । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । ( क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन ) । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट । अभ्रष्ट । कृष विलेखने । ४ । कृषति, कृषते । चकर्ष, चकृषे ।

६५५. **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ६।१।५९ ॥ उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति । क्रष्टा, कर्ष्टा । कृक्षीष्ट । ( स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ) । अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् ।

---

रपरे हलादिशेषे जश्त्वे वेटि सस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे बभ्रज्जिथेति । इड्भोरभावे 'स्कोः' इति सलोपे षत्वे ष्टुत्वे बभ्रष्ठेति च सिद्धम् ।

**भर्ष्टा** । भ्रस्जो लुटस्तिपि तासि डादेशे टिलोपे 'भ्रस्जो रोपधयोः' इति विकल्पेन रमि 'व्रश्च' इति षत्वे ष्टुत्वे भर्ष्टेति । रमोऽभावे 'स्को' इति सलोपे षत्वे ष्टुत्वे भ्रष्टा इति च सिद्धम् ।

**भर्क्ष्यति** । भ्रस्जो लृटस्तिपि स्ये पाक्षिके रमि जस्य षत्वे षस्य कत्वे सस्य षत्वे भर्क्ष्यति इति । रमोऽभावे सलोपे षत्वादिके भ्रक्ष्यति इति च सिद्धम् ।

**भृज्ज्यात्** । भ्रस्ज्धातोराशीर्लिङस्तिप इकारलोपे यासुटः कित्त्वे 'स्कोः' इति, सलोपे 'क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रनिषेधेन' इति रमं बाधित्वा सम्प्रसारणे पूर्वरूपे सस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे तत्सिद्धिः ।

**अभार्क्षीत्** । भ्रस्जो लुङस्तिप इकारलोपेऽडटि च्लेः सिचि ईटि 'भ्रस्जो रोपधयोः' इति पाक्षिके रमि 'वदव्रज' इति वृद्धौ 'व्रश्च' इति जस्य षत्वे षस्य कत्वे सस्य षत्वे अभार्क्षीत् इति । रमभावे सलोपे षत्वादिके अभ्राक्षीदिति च सिद्धम् ।

**क्रष्टा** । कृषो लुटस्तिपि तासि तिपो डादेशे डित्वाट्टिलोपे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति पाक्षिकेऽमि यणि ष्टुत्वे क्रष्टेति । अमोऽभावे गुणे कर्ष्टा इति च सिद्धम् ।

**अक्राक्षीत्** । कृषो लुङस्तिप इकारलोपेऽडटि च्लौ 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशं बाधित्वा 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वावाच्यः' इति पाक्षिके च्लेः सिचि ईटि 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यमि यणि 'वदव्रज' इति वृद्धौ

---

६५५. उपदेश में अनुदात्त जो ऋदुपध धातु उसको आम होता है विकल्प से कित् भिन्न झलादि परे रहते । ( वा० ) स्मृश मृश् कृष तृप् दृप धातु से परे च्लि के स्थान में सिच् होता है विकल्प से ।

अक्रुष्ट। अक्रुक्षाताम्। अक्रुक्षत। अक्रुक्षन्त। मिल संगमे। ५। मिलति, मिलते। मिमेल। मेलिता। अमेलीत्। मुच्लृ मोचने। ६।

६५६. **शे मुचादीनाम् ७।१।५९॥** मुच्लिप्विद्लुप्सिच्कृत्खिद्पिशां नुम् स्यात् शे परे। मुञ्चति, मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्, अमुक्त। अमुक्षाताम्। लुप्लृ छेदने। ७। लुम्पति, लुम्पते। लोप्ता। अलुपत्, अलुप्त। विद्लृ लाभे। ८। विन्दति, विन्दते। विवेद, विविदे। व्याघ्रभूतिमते सेट्। वेदिता। भाष्यमतेऽनिट्। परिवेत्ता। षिच् क्षरणे। ९। सिञ्चति, सिञ्चते।

६५७. **लिपिसिचिह्वश्च ३।१।५३॥** एभ्यश्च्लेरङ् स्यात्। असिचत्।

६५८. **आत्मनेपदेष्वन्यतरस्याम् ३।१।५४॥** लिपिसिचिह्वः परस्य च्लेरङ् वा। असिचत्, असिक्त। लिप उपदेहे। १०। उपदेहो वृद्धिः।

---

षस्य कत्वे सस्य षत्वे अक्राक्षीदिति। अमोऽभावपक्षे वृद्धौ रपरे अकार्क्षीदिति। सिचोऽभावे च्लेः क्सादेशे षस्य कत्वे सस्य षत्वे अक्रुक्षदिति च सिद्धम्।

**अक्रुष्ट।** कृषो लुङस्तप्रत्ययेऽटि 'स्पृशमृश' इति पाक्षिके च्लेः सिचि 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वादमगुणयोरभावे 'झलो झलि' इति सलोपे अक्रुष्टेति। सिजभावपक्षे 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे 'षढोः कः सि' इति षस्य कत्वे सस्य षत्वे अक्रुक्षत इति च सिद्धम्।

**मुञ्चति।** मुचो लटस्तिपि शप्रत्यये 'शे मुचादीनाम्' इति नुमागमे नस्यानुस्वारे परसवर्णे तत्सिद्धिः।

**अमुचत्।** मुचो लुङस्तिप इकारलोपेऽटि च्लौ 'पुषादिद्युतादि' इति च्लेरङि अमुचत् इति सिद्धम्।

**असिचत्।** षिचः षस्य सकारे लुङस्तिप इकारलोपेऽटि 'लिपिसिचि ह्वश्च' इति च्लेरङि तस्य ङित्वाद् गुणाभावे तत्सिद्धिः।

**असिचत।** सिचो लुङस्तप्रत्ययेऽटि च्लौ 'आत्मनेपदेष्वन्यतरस्याम्' इति पाक्षि-

---

६५६. मुच, लिप, विद, लुप, सिच, कृत, खिद, पिश धातुओं से नुम् का आगम होता है श परे रहते।

६५७. लिप, सिच, और ह्व धातुओं से परे च्लि के स्थान में अङ् आदेश होता है।

६५८. लिप, सिच, ह्व धातुओं से परे च्लि के स्थान में अङ् आदेश होता है विकल्प से तङ् परे रहते।

लिम्पति, लिम्पते । लेप्ता । अलिपत्, अलिपत, अलिप्त ।

इत्युभयपदिनः ।

कृती छेदने । ११ । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तीत् । खिद परिघाते । १२ । खिन्दति । चिखेद । खेत्ता । पिश अवयवे । १३ । पिंशति । पेशिता । ओव्रश्चू छेदने । १४ । वृश्चति । वव्रश्च । वव्रश्चिथ, वव्रष्ठ । व्रश्चिता, व्रष्टा । व्रश्चिष्यति, व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्, अव्राक्षीत् । व्यच व्याजीकरणे । १५ । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्यचीत्, अव्या-

---

के च्लेरङि असिचत इति । च्लेरङोऽभावे सिचि 'झलो झलि' इति सलोपे चस्य कुत्वे न ककारे असिक्तेति च सिद्धम् ।

**कर्तिष्यति** । कृत्धातोर्लृटस्तिपि स्यप्रत्यये 'सेऽसिचि कृतचृतच्छृदतृदनृतः' इति वेटि गुणे रपरे षत्वे कर्तिष्यति इति । इडभावे कर्त्स्यतीति च सिद्धम् ।

**वृश्चति** । व्रश्च्धातोर्लटस्तिपि शप्रत्यये तस्य ङित्त्वाद् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे तत्सिद्धिः ।

**वव्रश्च** । व्रश्च्धातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणे पूर्वरूपे 'उरत्' इत्यत्वे रपरे 'अचः परस्मिन् पूर्वविधौ' इति अत्वस्य स्थानिवत्त्वात् 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणनिषेधे हलादिशेषे तत्सिद्धिः ।

**वव्रश्चिथ** । व्रश्चधातोर्लिटः सिपस्थलि द्वित्वेऽभ्यासस्य सम्प्रसारणे पूर्वरूपे 'उरत्' इत्यत्वे तस्य स्थानिवत्त्वात् वस्य सम्प्रसारणनिषेधे हलादिशेषे ,स्वतिसूति' इति वेटि वव्रश्चिथेति । इडभावपक्षे श्चुत्वस्यासिद्धत्वात् 'स्कोः' इति सलोपे 'व्रश्च' इति षत्वे ष्टुत्वे वव्रष्ठ इति च सिद्धम् ।

**अव्रश्चीत्** । व्रश्चो लुङस्तिप इलोपेऽटि च्ले, सिचि ऊदित्वाद्वेटि ईटि सलोपे 'वदव्रज' इति वृद्धेः 'नेटि' इति निषेधे सवर्ण दीर्घे अव्रश्चीदिति । इडभावे वृद्धौ 'स्कोः' इति सलोपे 'व्रश्च' इति षत्वे षस्य कत्वे स्य षत्वे अव्राक्षीदिति च सिद्धम् ।

**विचति** । व्यचोलटस्तिपि शप्रत्यये 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे तत्सिद्धिः ।

**विव्याच** । व्यचो लिटस्तिपो णलि द्वित्वे 'लिट्यभ्यासस्य' इति सम्प्रसारणे पूर्वरूपे उपधावृद्धौ तत्सिद्धिः ।

**विविचतुः** । व्यचो लिटस्तस्य अतुसि तस्य कित्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे द्वित्वे हलादिशेषे रुत्वे विसर्गे तत्सिद्धिः ।

**अव्याचीत्** । व्यचो लुङस्तिप इकारलोपेऽटि च्लेस्सिचि इटि ईटि अनसोति

चीत् । व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् । उछि उञ्छे । १६ । उञ्छति । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम् ।' इति यादवः । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । १७ । ऋच्छति । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता । उज्झ उत्सर्गे । १८ । उज्झति । लुभ विमोहने । १९ । लुभति ।

६५९. **तीषसहलुभरुषरिषः ७।२।४८ ॥** इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । लोभिता, लोब्धा । लोभिष्यति । तृप तृम्फ तृप्तौ । २० । २१ । तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । ( शे तृम्फादीनां नुम् वाच्यः ) । आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् मृड पृड सुखने । २२ । २३ मृडति । पृडति । शुन गतौ । २४ । शुनति । इषु इच्छायाम् । २५ । इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् । कुट कौटिल्ये । २६ । गाङ्कुटादीति ङित्त्वम् ।

---

पर्युदासेन कृन्मात्रविषयत्वात् 'व्यचेः कुटादित्वमनसि' इत्यस्याप्रवृत्त्या 'अतो हलादेर्लघोः' इति पाक्षिकवृद्धौ सलोपे सवर्णदीर्घे अव्याचीत् । वृद्धेरभावपक्षे अव्यचीत् इति रूपद्वयं सिद्धम् ।

**आनर्च्छ** । ऋच्छधातोर्लिटस्तिपोण लि द्वित्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे 'अत आदेः' इति दीर्घे 'ऋच्छत्यॄताम्' इति गुणे रपरे द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वात् 'तस्मान्नुड् द्विहलः' इति नुटि तत्सिद्धिः ।

**लुभति** । लुभधातोः लटस्तिपि शे अपित्वान् ङित्वेन गुणाभावे सिद्धम् ।

**लोभिता** । लुभो लुटस्तिपि तासि 'तीषसहलुभरुषरिषः' इति वेटि गुणे तिपो डादेशे डित्वाट्टिलोपे लोभितेति । इडभावपक्षे तकारस्य धकारे जश्त्वे लोब्धेति च सिद्धम् ।

**तृम्फति** । तृम्फधातोर्लटस्तिपि शप्रत्यये 'अनिदिताम्' इति नलोपे 'शे तृम्फादीनां नुम्वाच्यः' इति नुम्यनुस्वारे परसवर्णे तत्सिद्धिः ।

---

६५९. इष, सह, लुभ रूष, रिष धातुओं से परे तकारादि आर्धधातुक को इट् होता है विकल्प से । ( वा० ) त्रिम्फादि धातुओं से नुम का आगम होता है श परे रहते । त्रिम्फादि में आदि शब्द प्रकार ( सदृश ) अर्थ में है । अतः इस प्रकरण में जितने धातु नकार के साथ हैं वे सब त्रिम्फादि हैं ।

चुकुटिथ। चुकोट, चुकुट। कुटिता। पुट संश्लेषणे। २७। पुटति। पुटिता। स्फुट विकसने। २८। स्फुटति। स्फुटिता। स्फुर स्फुल संचलेन। २९। । ३०। स्फुरति। स्फुलति।

६६०. **स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६॥** षत्वं वा स्यात्। निःष्फुरति, निःस्फुरति। णू स्तवने। ३१। परिणूतगुणोदयः। नुवति। नुनाव। नुविता। टुमस्जेर शुद्धौ। ३२। मज्जति। ममज्ज। ममज्जिथ। मस्जिनशोरिति नुम्। ( मस्जेरन्त्यापूर्वो नुम्बाच्यः )। संयोगादिलोपः। ममङ्क्थ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो भङ्गे। ३३। रुजति। रोक्ता। रोक्ष्यति। अरौक्षीत्। भुजो कौटिल्ये। ३४। रुजिवत्। विश प्रवेशने। ३५। विशति। मृश आमर्शने। ३६। आमर्शनं स्पर्शः। अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्। अम्राक्षीत्, अमा-

---

**चुकुटिथ**। कुटधातोर्लिटः सिपस्थलि द्वित्वे हलादिशेषे चुत्वे 'आर्धधातुकस्येड्वलादेः' इतीटि 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति ङित्वाद् गुणाभावे तत्सिद्धिः।

**निःष्फुरति**। निर्पूर्वात् स्फुरधातोर्लटस्तिपि शप्रत्यये 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति सस्य षत्वे विसर्गे तत्सिद्धिः।

**ममञ्जिथ**। मस्जधातोर्लिटः सिपस्थलि द्वित्वे हलादिशेषे भारद्वाजनियमाद्वेटि सस्य श्चुत्वेन शकारे तस्य जश्त्वेन जकारे ममज्जिथेति। इडभावपक्षे 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' इति वार्तिकबलात् 'मस्जिनशोर्झलि' इति सलोपे जस्य कुत्वेन गकारे तस्य चर्त्वेन ककारे नस्यानुस्वारे परसवर्णे ममङ्क्थेति च सिद्धम्।

**अमाङ्क्षीत्**। मस्जो लुङस्तिप इकारलोपेऽटि च्लेः सिचि ईटि 'मस्जेरन्त्यात्पूर्वोनुम्वाच्यः' इति वार्तिकबलात् 'मस्जिनशोर्झलि' इति सकारात्परे नुमि 'स्को' इति सलोपे 'वदव्रज' इति वृद्धौ झस्य कुत्वेन गकारे तस्य चर्त्वेन ककारे नस्यानुस्वारे परसवर्णे षत्वे तत्सिद्धिः।

**अम्राक्षीत्**। मृशो लुङस्तिप इकारलोपेऽटि क्सादेशं बाधित्वा 'स्पृशमृशकषतृपदृपां च्लेः सिज्वा वाच्यः' इति पाक्षिके सिचि ईटि 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यमि यणि 'वदव्रज' इति वृद्धौ 'व्रश्च' इति षत्वे तस्य कत्वे सस्य षत्वे अम्राक्षीदिति। अमोऽभावपक्षे अमृश् स ई त् इति स्थिते वृद्धौ रपरे षत्वादिके अमार्क्षी-

---

६६०. निर, नि, वि, उपसर्ग से परे स्फुर स्फुल धातुओं को षत्व होता है विकल्प से। ( वा० ) मस्ज धातु के अन्त्य से पूर्व वर्ण को नुम् होता है।

क्षीत्, अमृक्षत् । षद्लृ विशरणगत्यवसादनेषु । ३७ । सीदतीत्यादि । शद्लृ शातने । ३८ ।

६६१. **शदेश्शितः** १।३।६० ॥ शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् । कॄ विक्षेपे । ३९ ।

६६२. **ॠत इद्धातोः** ७।१।१०० ॥ ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । चकार । चकरतुः । चकरुः । करीता, करिता । कीर्यात् ।

६६३. **किरतौ लवने** ६।१।१४०॥ उपात्किरतेः सुट् छेदने । उपस्किरति ।

---

दिति । सिजभावपक्षे 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे शस्य षत्वे वस्य कत्वे सस्य षत्वे अमृक्षदिति च सिद्धम् ।

**सीदति** । षदः षस्य सकारे लटस्तिपि शे 'पाघ्राध्मा' इति सदः सीदादेशे तत्सिद्धिः ।

**शीयते** । शदो लटि 'शदेश्शितः' इति लटस्तप्रत्यये शप्रत्यये टेरेत्वे 'पाघ्राध्मा' इति शदः शीयादेशे तत्सिद्धिः ।

**अशदत्** । शदो लुङस्तिप इकारलोपेऽटि 'पुषादि' इति च्लेरङि तत्सिद्धिः ।

**किरति** । कॄधातोर्लटस्तिपि शप्रत्यये 'ॠत इद्धातोः' इति इत्त्वे रपरे तत्सिद्धिः ।

**करीता** । कॄधातोर्लुटस्तिपि तासि इटि गुणे रपरे डादेशे टिलोपे 'वॄतो वा' इति दीर्घे पाक्षिके करीता, करिता इति च सिद्धम् ।

**कीर्यात्** । कॄधातोर्लिङस्तिप इकारलोपे यासुटि सलोपे 'ॠत इद्धातोः' इतीत्वे रपरे 'हलि च' इति दीर्घे तत्सिद्धिः ।

**उपस्किरति** । उपपूर्वात्कॄधातोर्लटस्तिपि शप्रत्यये इत्वे रपरे 'किरतौ लवने' इति सुटि तत्सिद्धिः ।

---

६६१. शित् प्रत्यय होनेवाला हो जिससे ऐसे शद् धातुसे तङ् और आन प्रत्यय हों ।

६६२. ॠदन्त धातु के अंग को इत होता है अर्थात् ॠदन्त धातु के अवयव ॠ के स्थान में इकार आदेश होता है ।

६६३. उप उपसर्ग से परे कृ धातु से सुट् आगम होता है छेदन अर्थ में । ( वा० ) अट् और अभ्यास के व्यवधान रहने पर भी सुट ककार के पूर्व ही होता है ।

( अडभ्यासव्यवायेऽपि सुट् कात् पूर्व इति वक्तव्यम् । ) उपास्किरत् । उपचस्कार ।

६६४. **हिंसायां प्रतेश्च** ६।१।१४१ ॥ उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ निगरणे । ४० ।

६६५. **अचि विभाषा** ८।२।२१ ॥ गिरते रेफस्य लो वाऽजादौ प्रत्यये । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरीता, गरिता, गलीता, गलिता । प्रच्छ ज्ञीप्सायाम् । ४१ । ग्रहिज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । मृङ् प्राणत्यागे । ४२ ।

६६६. **म्रियतेर्लुङ्लिङोश्च** १।३ ६१ ॥ लुङ्लिङोः शितश्च प्रकृति-

---

**उपास्किरत्** । उपपूर्वात्कॄधातोर्लङस्तिप इकारलोपे अटि शप्रत्यये 'ॠत इद्धातोः' इति इत्वे रपरे 'सुट्कात्पूर्व इति वक्तव्यम्' इति बलाद् अडभ्यासव्यवायेऽपि' इति ककारात्पूर्व सुटि दीर्घे तत्सिद्धिः ।

**गिलति** । गॄधातोर्लटस्तिपि ।शप्रत्यये 'ॠत इद्धातोः' इतीत्वे रपरे 'अचि विभाषा' इति पाक्षिके रेफस्य लत्वे गिलति । गिरति इति रूपद्वयं सिद्धम् ।

**पृच्छति** । प्रच्छधातोर्लटस्तिपि शप्रत्यये 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे तत्सिद्धिः ।

**पप्रच्छ** । प्रच्छो लिटस्तिपो णलि द्वित्वे 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्याससम्प्रसारणे पूर्वरूपे अत्वे रपरे हलादिशेषे तत्सिद्धिः ।

**प्रष्टा** । प्रच्छो लुटस्तिपि तासि डादेशे टिलोपे 'व्रश्च' इति च्छस्य षत्वे ष्टुत्वे तत्सिद्धिः ।

**अप्राक्षीत्** । प्रच्छो लुङस्तिप इलोपेऽटि च्लेः सिचि ईटि 'वदव्रज' इति वृद्धौ 'व्रश्च' इति च्छस्य षत्वे षस्य ककारे सस्य षत्वे तत्सिद्धिः ।

---

६६४. उप और प्रति उपसर्ग से परे कृ धातु से सुट् आगम होता है हिंसा अर्थ में ।

६६५. गृ धातु के रेफ के स्थान में ल आदेश होता है विकल्प से अजादि प्रत्यय परे रहते ।

६६६. लुङ् लिङ् और शित् प्रत्यय के प्रकृतिभूत मृङ्धातु से तङ् प्रत्यय हो अन्यत्र न हो । अर्थात् लट् लोट् लङ् दोनों लिङ् लुङ् इन्हीं लकारों में मृङ् से आत्मनेपद प्रत्यय होता है, दूसरे लकारो में नहीं होता है ।

भूतान्मृङस्तङ् नान्यत्र। रिङ्। इयङ्। म्रियते। ममार। मर्ता। मरिष्यति। मृषीष्ट। अमृत। पृङ् व्यायामे। ४३। प्रायेणायं व्याङ्पूर्वः। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्। जुषी प्रतिसेवनयोः। ४४। जुषते। जुजुषे। ओविजी भयचलनयोः। ४५। प्रायेण उत्पूर्वः। उद्विजते।

६६७. **विज इट् १।२।६२** ॥ विजेः पर इडादिप्रत्ययो ङिद्वत्। उद्विजिता।

इति तुदादयः ॥ ६ ॥



---

**म्रियते**। मृधातोर्लटि 'म्रियतेर्लुङ्लिङोश्च' इत्यात्मनेपदत्वाल्लटस्तप्रत्यये शप्रत्यये 'रिङ् शयग्लिङ्क्षु' इति ऋकारस्य रिङि इयङि टेरेत्वे तत्सिद्धिः।

**मृषीष्ट**। मृधातोराशीर्लिङस्तप्रत्यये सीयुटि यलोपे सुटि 'उश्च' इति कित्त्वाद् गुणाभावे षत्वे तत्सिद्धिः।

**अमृत**। मृङो लुङस्तेऽटि च्लेः सिचि 'ह्रस्वादङ्गात्' इति सलोपे तत्सिद्धिः।

**उद्विजिता**। उत्पूर्वाद्विजधातोर्लुटस्तप्रत्यये तासि इटि डादेशे टिलोपे 'विज इट्' इति ङित्त्वाद् गुणाभावे तत्सिद्धिः।

॥ इति तुदादयः ॥



---

६६७. विज धातु से परे इट् आदि प्रत्यय ङिद्वत् होते हैं।

इति तुदादयः ॥



# अथ रुधादयः ।

रुधिर् आवरणे । १ ।

६६८. **रुधादिभ्यः श्नम् ३।१।७८ ॥** शपोऽपवादः । रुणद्धि । श्नसोरल्लोपः । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध, रुरुधे । रोद्धामि, रोद्धासे । रोत्स्यति, रोत्स्यते । रुणद्धु । रुन्धात् । रुन्धाम् । रुन्धिन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्, अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणः, अरुणत्, अरुणद् । अरुन्ध । अरुन्धाः । रुन्ध्यात् । रुन्धीत । रुध्यात, रुत्सीष्ट । अरुधत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत्,

---

**रुणद्धि** । रुधधातोर्लटस्तिपि नित्यत्वाल्लघूपधगुणं बाधित्वा 'रुधादिभ्यः श्नम्' इति श्नम्यनुबन्धलोपे 'झषस्तथोर्धोऽधः' इति तस्य धकारे जश्त्वे णत्वे तत्सिद्धिः ।

**रुन्ध** । रुधो लटस्तसि श्नमि 'श्नसोरल्लोपः' इत्यल्लोपे णत्वस्यासिद्धत्वादनुस्वारे ररसवर्णे तस्यासिद्धत्वाण्णत्वाभावे तस्य धकारे 'झरो झरि सवर्णे' इति धलोपे रुत्वे विसर्गे रुन्धः इति । धलोपाभावे जश्त्वे रुन्द्धः इति च सिद्धम् ।

**रुन्धि** । रुधो लोटः सिपो हौ श्नमि 'श्नसोरल्लोपः' इत्यल्लोपेऽनुस्वारे परसवर्णे 'हुझल्भ्यो हेर्धिः' इति हेर्धौ 'झरो झरि सवर्णे' इति पाक्षिके धलोपे रुन्धि इति सिद्धम् ।

**अरुणत्** । रुधो लङस्तिप इकारलोपेऽटि श्नमि णत्वे 'हल्ङ्याब्भ्यः' इति तलोपे धस्य जश्त्वेन दकारे तस्य चर्त्वे तत्सिद्धिः ।

**अरुणः** । रुधो लङः सिप इलोपेऽटि श्नमि णत्वे 'हल्ङ्याब्भ्यः' इति सलोपे धस्य जश्त्वेन दकारे 'दश्च' इति पाक्षिके दस्य रुत्वे रस्य विसर्ग अरुणः इति । पक्षे चर्त्वे अरुणत् इति च साधु ।

**अरुधत्** । रुधो लुङस्तिप इलोपेऽटि च्लौ 'इरितोवा' इति च्लेरङि अरुधदिति । अङोऽभावपक्षे च्लेः सिचि ईटि 'वदव्रज' इति वृद्धौ धस्य चर्त्वे अरौत्सीदिति च सिद्धम् ।

**अरुद्ध** । रुधो लुङस्तप्रत्ययेऽटि च्लेः सिचि 'झलो झलि' इति सलोपे धत्वे जश्त्वे तत्सिद्धिः ।

---

६६८. रुधादिगण पठित धातुओ से कर्ता अर्थ में सार्वधातुक लकारों में श्नम् प्रत्यय होता है ।

अरोत्स्यत। भिदिर् विदारणे।२। छिदिर् द्वैधीकरणे।३। युजिर् योगे।४। रिचिर् विरेचने।५। रिणक्ति, रिङ्क्ते। रिरेच। रेक्ता। रेक्ष्यति। अरिणक्। अरिचत्, अरैक्षीत्, अरिक्त। विचिर् पृथग्भावे।६। विनक्ति, विङ्क्ते। क्षुदिर् संपेषणे।७। क्षुणत्ति, क्षुन्ते। क्षोत्ता। अक्षुदत्, अक्षौत्सीत्, अक्षुत्त। उच्छृदिर् दीप्तिदेवनयोः।८। छृणत्ति, छृन्ते। चच्छर्द। से सिचीति वेट्। चच्छृदिषे, चच्छृत्से। छर्दिता। छर्दिष्यति, छर्त्स्यति। अच्छृदत्, अच्छर्दिष्ट। उदितृर् हिंसानादरयोः।९। तृणत्ति, तृन्ते। कृती वेष्टने।१०। कृणत्ति। तृह हिसि हिंसायाम्।११-१२।

६६९. **तृणह इम्** ७।३।९२। तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्।

६७०. **श्नान्नलोपः** ६।४।२३। श्नमः परस्य नस्य लोपः स्यात्। हिनस्ति। जिहिंस। हिंसिता।

६७१. **तिप्यनस्तेः** ८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि, न त्वस्तेः। ससजुषोरुरित्यस्यापवादः। अहिनत्, अहिनद्। अहिंस्ताम्। अहिंसन्।

---

**तृणेढि**। तृह् धातोर्लटस्तिपि श्नमि णत्वे 'तृणह इम्' इति इमागमे गुणे हस्य ढत्वे तकारस्य धकारे ष्टुत्वे 'ढोढे लोपः' इति ढलोपे तत्सिद्धिः।

**तृण्ढः**। तृहो लटस्तसि श्नम्यल्लोपे हस्य ढत्वे तस्य धत्वे ष्टुत्वे ढलोपे नकारस्यानुस्वारे परसवर्णे रुत्वे विसर्गे तत्सिद्धिः।

**हिनस्ति**। हिस्धातोरिदित्वाद् 'इदितो नुम् धातोः' इति नुमि लटस्तिपि श्नमि 'श्नान्नलोपः' इति नलोपे तत्सिद्धिः।

**अहिनत्**। हिस् धातोरिदित्त्वान्नुमि लङस्तिप इकारलोपेऽटि श्नमि 'श्नान्नलोपः' इति नलोपे 'हल्ङ्याब्भ्यः' इति तलोपे 'ससजुषो रुः' इति रुत्वं बाधित्वा 'तिप्यनस्तेः' इति सकारस्य दकारे चर्त्वे तत्सिद्धिः।

---

६६९. तृह धातु से श्नम् प्रत्यय आने के बाद इम् का आगम होता है हलादि पित सार्वधातुक परे रहते।

६७०. श्नम् से परे नकार का लोप होता है।

६७१. पदान्त सकार के स्थान में दकार आदेश होता है तिप परे रहते, अस् धातु को छोड़कर।

**६७२. सिपि धातो रुर्वा ८।२।७४।** पदान्तस्य धातोः सस्य रुर्वा। पक्षे दः। अहिनः, अहिनत्, अहिनद्। उन्दी क्लेदने। १३। उनत्ति। उन्तः। उन्दन्ति। उन्दाञ्चकार। औनत्। औन्ताम्। औन्दन्। औनः, औनत्, औनद्। औनदम्। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। १४। अनक्ति। अङ्क्तः। अञ्जन्ति। आनञ्ज। आनञ्जिथ, आनङ्क्थ। अञ्जिता, अङ्क्ता। अङ्ग्धि। अनजानि। आनक्।

**६७३. अञ्जेः सिचि ७।२।७१।** अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत्। तञ्चू संकोचने। १५। तनक्ति तञ्चिता, तङ्क्ता। ओविजी भयचलनयोः। १६। विनक्ति। विङ्क्तः। विज इडिति ङित्त्वम्। विविजिथ। विजिता।

---

**अहिनः**। हिसो नुमि लङ् सिप इलोपे अटि श्नमि नलोपे हल्ङ्याबिलोपे 'सिपि धातो रुर्वा' इति पाक्षिके रुत्वे विसर्गे अहिनः इति। अत्र वाशब्दस्य समुच्चयार्थकत्वाद् 'वसुस्रंसु' इति दस्यानुवृत्त्या रुत्वाभावपक्षे सस्य दत्वे चर्त्वे अहिनदिति च सिद्धम्।

**उनत्ति**। उन्दधातोर्लटस्तिपि श्नमि 'श्नान्नलोपः' इति नलोपे चर्त्वे तत्सिद्धिः।

**औनः**। उन्दो लङ सिप इकारलोपे आटि वृद्धौ श्नमि नलोपे हल्ङ्याबिलोपे 'दश्च' इति पाक्षिके रुत्वे विसर्गे औनः इति। पक्षे चर्त्वे औनद् इति च सिद्धम्।

**अङ्क्तः**। अञ्जो लटस्तसि श्नमि नलोपेऽल्लोपे जस्य कुत्वेन गकारे तस्य चर्त्वेन ककारेऽनुस्वारे परसवर्णे तत्सिद्धिः।

**आनञ्जिथ**। अञ्जो लिटः सिपस्थलि द्वित्वे हलादिशेषे 'अत आदेः' इति दीर्घे 'तस्मान्नुड् द्विहलः' इति नुटि 'स्वरति' इति वेटि आनञ्जिथेति। इडभावे जस्य कुत्वेन गकारे तस्य चर्त्वेन ककारे निमित्तापायात् ञकारनिवृत्तावनुस्वारे परसवर्णे आनङ्क्थ इति च सिद्धम्।

**अङ्ग्धि**। अञ्जो लोटः सिपो हौ श्नमि हेर्धौ 'श्नान्नलोपः' इति नलोपे 'श्नसोरल्लोपः' इत्यल्लोपे जस्य कुत्वेन गकारे नस्यानुस्वारे परसवर्णे तत्सिद्धिः।

**आनक्**। अञ्जो लङस्तिप इकारलोपे श्नमि आटि वृद्धौ 'श्नान्नलोपः' इति नलोपे हल्ङ्याबिलोपे कुत्वे चर्त्वे तत्सिद्धिः।

**आञ्जीत्**। अञ्जो लुङस्तिप इलोपे आटिवृद्धौ च्लेः सिचि 'स्वरति' इति विकल्पं बाधित्वा 'अञ्जेः सिचि' इति नित्यमिटि ईटि सलोपे दीर्घे तत्सिद्धिः।

---

६७२. धातु के पदान्त सकार को रुत्व होता है विकल्प से। पक्ष में दकार होता है।

६७३. अञ्ज धातु से परे सिच् को नित्य इट् का आगम होता है।

अविनक् । अविजीत् । शिष्लृ विशेषणे । १७ । शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ड्ढि । शिनषाणि । अशिनट् । शिष्यात् । शिष्यात् । अशिषत् । एवम्—पिष्लृ संचूर्णने । १८ । भञ्जो आमर्दने । १९ । श्नान्नलोपः । भनक्ति । बभञ्जिथ, बभङ्क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् । भुज पालनाभ्यवहारयोः । २० । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ।

६७४. **भुजोऽनवने १।३।६६।** तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् । महीं भुनक्ति । ञिइन्धी दीप्तौ । २१ । इन्द्धे । इन्धाते । इन्धते । इन्त्से । इन्ध्वे । इन्धाञ्चक्रे । इन्धिता । इनधाम् । इन्धाताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धाः । विद विचारणे । २२ । विन्ते । वेत्ता ॥

॥ इति रुधादयः ॥ ७ ॥



---

**शिंष्टः** । शिषो लटस्तसि श्नम्यल्लोपेऽनुस्वारे ष्टुत्वे विसर्गे तत्सिद्धिः ।

**शिण्ड्ढि** । शिषो लोटः सिपो हौ श्नम्यल्लोपे 'हुझल्भ्यो हेर्धिः' इति हेर्धौ षस्य 'झलां जश् झशि' इति जश्त्वेन डकारे ष्टुत्वेन धकारस्य ढकारे 'झरो झरि सवर्णे' इति पाक्षिके डलोपेऽनुस्वारे परसवर्णे शिण्ढीति पक्षे शिण्ड्ढीति च सिद्धम् ।

**अशिनट्** । शिषो लङस्तिप इलोपेऽटि श्नमि हल्ङ्यादिलोपे ढस्य जश्त्वेन डकारे तस्य चर्त्वे तत्सिद्धिः ।

**अशिषत्** । शिषो लुङस्तिप इकारलोपेऽटि च्लौ 'पुषादि' इति च्लेरङि तत्सिद्धिः ।

**भुङ्क्ते** । भुजो लटः 'भुजोऽनवने' इति तप्रत्यये श्नमि टेरेत्वे 'श्नसोरल्लोपः' इत्यल्लोपे कुत्वे चर्त्वेऽनुस्वारे परसवर्णे तत्सिद्धिः ।

**इन्धे** । इन्धधातोर्लटस्तप्रत्यये टेरेत्वे श्नमि 'श्नान्नलोपः' इति नलोपे 'श्नसोरल्लोपः' इत्यल्लोपे 'झषस्तथोः' इति तस्य धत्वे 'झरो झरि' इति पाक्षिके धलोपे इन्धे इन्द्धे इति रूपद्वयं साधु ।

**इनधै** । इन्धो लोट इट एत्वे श्नमि नलोपे 'एत ऐ' इति ऐत्वे आटि वृद्धौ तत्सिद्धिः ।

इति रुधादयः ।

---

६७४. रक्षण से भिन्न अर्थ में भुज धातु से तङ् और आन् प्रत्यय होते हैं । अर्थात् आत्मनेपद होता है ।

इति रुधादयः ॥

## अथ तनादयः ।

तनु विस्तारे । १ ।

६७५. **तनादिकृञ्भ्य उः ६।१।७९ ॥** शपोऽपवादः । तनोति, तनुते । ततान, तेने । तनितासि, तनितासे । तनिष्यति, तनिष्यते । तनोतु । तनुताम् । अतनोत्, अतनुत । तनुयात्, तन्वीत । तन्यात्, तनिषीष्ट । अतानीत्, अतनीत् ।

६७६. **तनादिभ्यस्तथासोः २।४।७९ ॥** तनादेः सिचो वा लुक् स्यात्तथासोः । अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । अतनिष्यत्, अतनिष्यत ।

षणु दाने । २ । सनोति, सनुते ।

६७७. **ये विभाषा ६।४।४३ ॥** जनसनखनामात्वं वा यादौ क्ङिति । सायात्, सन्यात् ।

६७८. **जनसनखनां सञ्झलोः ६।४।४२ ॥** एषामाकारोऽन्तादेशः स्यात्

---

**तनोति** । तन्धातोर्लटस्तिपि शपं बाधित्वा 'तनादिकृञ्भ्य उः' इति उप्रत्यये तस्य गुणे तत्सिद्धिः ।

**अतानीत्** । तनो लुङस्तिप्रत्ययेऽटि इकारलोपे च्लेः सिचि इटि ईटि 'अतो हलादेर्लघोः' इति वृद्धौ सलोपे सवर्णदीर्घे अतानीदिति । वृद्ध्यभावपक्षे अतनीदिति च सिद्धम् ।

**अतत** । तनो लुङस्तप्रत्ययेऽटि च्लेः सिचि 'तनादिभ्यस्तथासोः' इति सिचः पाक्षिके लुकि 'अनुदात्तोपदेश' इति नलोपे अतत इति । लुगभावे इटि षत्वे ष्टुत्वे अतनिष्टेति च सिद्धम् ।

**सायात्** । षणः षस्य सत्वे निमित्तापायात् नैमित्तिकस्य णत्वस्यापि निवृत्तौ आशीर्लिङस्तिप इकारलोपे यासुटि 'स्कोः' इति सलोपे 'ये विभाषा' इति पाक्षिके आत्वे सवर्णदीर्घे सायात् इति । सन्यादिति च सिद्धम् ।

---

६७५. तनादि गण पठित धातुओं और कृञ धातु से कर्ता अर्थ में सार्वधातुक लकार में उ प्रत्यय होता है ।

६७६. तनादि धातुओं से परे सिच् का लोप होता है त और थास परे रहते ।

६७७. जन, सन, खन, धातुओं के अन्त को आकार आदेश होता है, विकल्प से, यकारादि कित् ङित् प्रत्यय परे रहते ।

६७८. जन, सन, खन धातुओं को अकार अन्तादेश होता है सन परे और झलादि कित् ङित् परे रहते ।

सनि झलादौ क्ङिति । असात, असनिष्ट । असाथाः, असनिष्ठाः ॥ क्षणु हिंसायाम् । ३ । क्षणोति, क्षणुते । ह्म्यन्तेति न वृद्धिः । अक्षणीत्, अक्षत, अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः । क्षिणु च । ४ । उप्रत्यये लघूपधस्य गुणो वा । क्षेणोति, क्षिणोति । क्षेणिता । अक्षेणीत । अक्षित, अक्षेणिष्ट । तृणु अदने । ५ । तृणोति, तर्णोति । तृणुते, तर्णुते । डुकृञ् करणे । ६ । करोति । अत उत्सार्वधातुके । कुरुतः ।

**६७९. न भकुर्छुराम्** ८।२।७९ ॥ भस्य कुर्छुरोश्चोपधाया न दीर्घः । कुर्वन्ति ।

**६८०. नित्यं करोतेः** । ६।४।१०८ ॥ करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । चकार, चक्रे । कर्तासि, कर्तासे । करिष्यति, करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत ।

**६८१. ये च** ६।४।१०९ ॥ कृञ उलोपो यादौ प्रत्यये परे । कुर्यात्, कुर्वीत । क्रियात्, कृषीष्ट । अकार्षीत्, अकृत । अकरिष्यत्, अकरिष्यत ।

---

**असात** । सनो लुङ्स्तप्रत्ययेऽटि च्लेः सिचि 'तनादिभ्यस्तथासोः' इति पाक्षिके सिचो लुकि 'जनसनखनां सञ्झलोः' इत्यात्वे दार्घे असात इति । लुगभावे इटि षत्वे ष्टुत्वे असनिष्टेति च सिद्धम् ।

**कुरुतः** । कृधातोर्लटस्तसि 'तनादिकृञ्भ्य उः' इत्युप्रत्यये गुणे रपरे 'अत उत्सार्वधातुके' इत्युत्वे रुत्वे विसर्गे तत्सिद्धिः ।

**कुर्वन्ति** । कृञो लटो झौ उप्रत्यये गुणे रपरे 'अत उत्सार्वधातुके' इत्युत्वे झस्यान्तादेशे यणि 'हलि च' इति दीर्घे प्राप्ते 'न भकुर्छुराम्' इति तन्निषेधे तत्सिद्धिः ।

**कुर्वः** । कृञो लटो वसि उप्रत्यये गुणे रपरे उत्वे 'लोपश्चास्यान्यतरस्यांम्वोः' इति विकल्पं बाधित्वा 'नित्यं करोतेः' इति नित्ये प्रत्ययोकारस्य लोपे रुत्वे विसर्गे तत्सिद्धिः ।

**कुर्यात्** । कृञो लिङस्तिप इकारलोपे उप्रत्यये गुणे रपरे यासुटि सलोपे उत्वे 'ये च' इति उप्रत्ययस्य लोपे 'न भकुर्छुराम्' इति निषेधाद्दीर्घाभावे तत्सिद्धिः ।

---

६७९. रेफान्त वान्त और भसंज्ञक कुर तथा छुर की उपधा को दीर्घ आदेश नहीं होता ।

६८०. कृ धातु से परे प्रत्यय के उकार का नित्य लोप है मकार वकार परे रहते ।

६८१. कृञ् के उकार का लोप होता है यकारादि प्रत्यय परे रहते ।

**६८२. सम्परिभ्यां करोतौ भूषणे** ६।१।१३७ ॥

**६८३. समवाये च** ६।१।१३८ ॥ सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे सङ्घाते चार्थे। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। सम्पूर्वस्य क्वचिदभूषणेऽपि सुट्। संस्कृतं भक्षा इति ज्ञापकात्।

**६८४. उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** ६।१।१३९ ॥ उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः। प्रतियत्नो गुणाधानम्। विकृतमेव वैकृतं विकारः। वाक्याध्याहार आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते। वनु याचने। ७। वनुते। ववने। मनु अवबोधने। ८। मनुते। मेने। मनिता। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट। अमत, अमनिष्यत।

इति तनादयः ॥ ८ ॥



---

**संस्करोति**। सम्पूर्वात्कृञो तटस्तिपि उप्रत्यये गुणे रपरे गुणे 'सम्परिभ्यां करोतौ भूषणे' इति 'समवाये च' इति वा सुटि सस्य रुत्वेऽनुनासिके विसर्गे सत्वे तत्सिद्धिः।

**उपस्कृता कन्या**। उपपूर्वात्कृञः क्तप्रत्यये टापि 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च' इति सुटि तत्सिद्धिः।

**अमत**। मनो लुङस्तप्रत्ययेऽटि च्लेः सिचि 'तनादिभ्यस्तथासोः' इति पाक्षिके सिचो लुकि 'अनुदात्तोपदेश' इति नलोपे अमत इति। लुगभावे इटि षत्वे ष्टुत्वे च सिद्धम्।

इति तनादयः।



---

६८२. ६८३. सम और परि पूर्वक कृञ धातु से सुट् का आगम होता है भूषण और संघात अर्थ में।

६८४. उप पूर्वक कृञ धातु को सुट् का आगम होता है प्रतियत्न (गुणाधान) वैकृत ( विकार ) वाक्याध्याहार अर्थो में।

इति तनादयः ॥



## अथ क्रयादयः ॥

डुक्रीञ् द्रव्यविनिमये । १ ।

**६८५. क्र्यादिभ्यः श्ना ३।१।८१ ॥** शपोऽपवादः । क्रीणाति । ई हल्यघोः । क्रीणीतः । श्नाभ्यस्तयोरातः । क्रीणन्ति । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ, चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति, क्रेष्यते । क्रीणातु, क्रीणीतात् । क्रीणीताम् । अक्रीणात् अक्रीणीत । क्रीणीयात्, क्रीणीत । क्रीयात्, क्रेषीष्ट । अक्रैषीत्, अक्रेष्ट । अक्रेष्यत, अक्रेष्यत । प्रीञ् तर्पणे कान्तौ च । २ । प्रीणाति, प्रीणीते । श्रीञ् पाके । ३ । श्रीणाति, श्रीणीते । मीङ् हिंसायाम् । ४ ।

**६८६. हिनुमीना ८।४।१५ ॥** उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात् । प्रमीणाति, प्रमीणीते । मीनातीत्यात्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्ये । माता । मास्यति मीयात्, मासीष्ट । अमासीत् । अमा-

---

**क्रीणाति** । क्रीधातोर्लटस्तिपि शपं बाधित्वा 'क्र्यादिभ्यः श्ना, इति श्नाप्रत्यये णत्वे तत्सिद्धिः ।

**क्रीणीतः** । क्रीधातोर्लटस्तसि श्नाप्रत्यये 'ई हल्यघोः' इति ईत्वे णत्वे रुत्वे विसर्गे तत्सिद्धिः ।

**क्रीणन्ति** । क्रीधातोर्लटो झौ झस्यान्तादेशे श्नाप्रत्यये णत्वे 'श्नाभ्यस्तयोरातः' इत्यालोपे तत्सिद्धिः ।

**चिक्रयिथ** । क्रीञो लिटस्तिपस्थलि द्वित्वे ह्रस्वे चुत्वे भारद्वाजनियमाद्वेटि गुणेऽयादेशे चिक्रयिथेति । इडभावपक्षे चिक्रेथेति च सिद्धम् ।

**प्रमीणीते** । प्रपूर्वात् मीधातोर्लटस्तप्रत्यये टेरेत्वे श्नाप्रत्यये 'ई हल्यघोः' इति ईत्वे 'हिनुमीना' इति णत्वे तत्सिद्धिः ।

**ममौ** । मीञो लिटस्तिपो णलि 'मीनातिमिनोतिदीङां ल्यपि च' इति आत्वे द्वित्वेऽभ्यासह्रस्वे 'आत औ णलः' इति णल औकारे वृद्धौ तत्सिद्धिः ।

---

६८५. कर्ता अर्थ में सार्वधातुक की विवक्षा में क्रयादि गण पठित धातु से श्ना प्रत्यय होता है ।

६८६. उपसर्ग में स्थित निमित्त (र ष) परे रहते श्नुप्रत्ययान्त हि धातु से और श्ना प्रत्ययान्त मि धातु के नकार के स्थान में णकार होता है ।

सिष्टाम् अमास्त । षिञ् बन्धने । ५ । सिनाति, सिनीते । सिषाय, सिष्ये । सेता । स्कुञ् आप्लवने । ६ ।

**६८७. स्तन्भुस्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३।१।८२ ॥** चात् श्ना । स्कुनोति, स्कुनाति । स्कुनुते, स्कुनीते । चुस्काव, चुस्कुवे । स्कोता । अस्कौषीत्, अस्कोष्ट । स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्थाः परस्मैपदिनः ।

**६८८. हल श्नः शानज्झौ ३।१।८३ ॥** हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान ।

**६८९. जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१।५८ ॥** च्लेरङ् वा स्यात् ।

**६९०. स्तन्भेः ८।३।६७ ॥** स्तन्भेः सौत्रस्य सस्य षः स्यात् । व्यष्टभत् । अस्तम्भीत् । युञ् बन्धने । ७ । युनाति, युनीते । योता । क्नूञ् शब्दे । ८

---

**स्कुनोति** । स्कुधातोर्लटस्तिपि शपं बाधित्वा 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च' इति श्नुप्रत्यये तस्य ङित्त्वाद्धातोर्गुणाभावे प्रत्ययोकारस्य गुणे स्कुनोति इति । चकारात् श्नाप्रत्यये स्कुनाति च सिद्धम् ।

**चुस्काव** । स्कुधातोर्लिटस्तिपो णलि द्वित्वेऽभ्यासत्वे 'शर्पूर्वाः खयः' इति 'अभ्यासककारस्य शेषे चुत्वे वृद्धौ आवादेशे तत्सिद्धिः ।

**स्तभान** । स्तम्भधातोर्लोटः सिपो हौ श्नाप्रत्यये तस्य ङित्त्वाद् 'अनिदिताम्' इति नलोपे 'हलः श्नः शानज्झौ' इति श्नः शानजादेशेऽनुबन्धलोपे हेर्लुकि तत्सिद्धिः ।

**व्यष्टभत्** । विपूर्वात्स्तम्भधातोर्लुङस्तिप इकारलोपेऽटि च्लौ 'जॄस्तम्भूम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च' इति च्लेरङि 'अनिदिताम्' इति नलोपे यणि 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे व्यष्टभीदिति । अङोऽभावपक्षे च्लेः सिचि इटि ईटि सलोपे सवर्णदीर्घे अस्तम्भदिति च सिद्धम् ।

---

६८७. स्तम्भु, स्तुन्भु, स्कन्भु, स्कुन्भु, स्कुञ् धातुओं से कर्ता अर्थ में सार्वधातुक से श्नु प्रत्यय होता है । और चकारात् श्ना प्रत्यय भी होता है ।

६८८. हल् से परे श्ना के स्थान में शानच् आदेश होता है हि परे रहते ।

६८९. जॄष् वयोहानौ, स्तम्भ, म्रुचुम्लुचु गतौ, ग्रुचु ग्लुचु स्तेयकरणे, ग्लुञ्चु गतौ, टुओश्वि गतिवृद्धयोः, इन से पर च्लि को अङ् हो विकल्प से ।

६९०. सौत्रस्तन्भ धातु के सकार को षत्व होता है ।

क्नूनाति क्नूनीते । क्नविता । दृञ् हिंसायाम् । १० । दृणाति, दृणीते । द्रूञ् हींसायाम् । १० । द्रूणाति । द्रुणीते । पूञ् पवने । ११ ।

६९१. **प्वादीनां ह्रस्वः ७।३।८०॥** पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्लीनां चतुर्विशतेः शिति ह्रस्वः । पुनाति । पुनीते । पविता । लूञ् छेदने । १२ । लुनाति, लुनीते । स्तॄञ् आच्छादने । १३ । स्तृणाति । शर्पूर्वाः खयः । तस्तार । तस्तरतुः । तस्तरे । स्तरीता, स्तरिता । स्तृणीयात्, स्तृणीत । स्तीर्यात् ।

६९२. **लिङ्सिचोरात्मनेपदेषु ७।२।४२॥** वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ।

६९३. **न लिङि ७।२।३९॥** वॄत इटो लिङि न दीर्घः । स्तरिषीष्ट । उश्चेत्यनेन कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेषु । अस्तारीत् ।

---

**पुनाति** । पूञोलटस्तिपि श्नाप्रत्यये 'प्वादीनां ह्रस्वः' इति ह्रस्वे तत्सिद्धिः ।

**तस्तरतुः** । स्तॄधातोर्लिटस्तस अतुसि 'उरत्' इत्यत्वे रपरे 'शर्पूर्वाः खयः' इत्यभ्यासतकारस्य शेषे 'ऋच्छत्यॄताम्' इति गुणे रपरे रुत्वे विसर्गे तत्सिद्धिः ।

**स्तीर्यात्** । स्तॄञो लिङस्तिप इलोपे यासुटि सलोपे 'ॠत इद्धातोः' इति इत्वे रपरे 'हलि च' इति दीर्घे तत्सिद्धिः ।

**स्तरिषीष्ट** । स्तॄधातोर्लिङस्तप्रत्यये सीयुटि यलोपे सुटि 'लिङ्सिचोरात्मनेपदेषु' इति वेटि गुणे रपरे 'वॄतो वा' इति दीर्घे प्राप्ते 'न लिङि' इति तन्निषेधे षत्वे ष्टुत्वे स्तरिषीष्ट इति । इडभावपक्षे 'उश्च' इति कित्त्वाद् गुणाभावे इत्वे रपरे 'हलि च' इति दीर्घे स्तीर्षीष्टेति च सिद्धम् ।

---

६९१. पूङ् पवने, लूञ् छेदने, स्तॄञ् आच्छादने, कॄञ् हिंसायाम् वॄञ् वरणे, धूञ् कम्पने, शॄ हिंसायाम्, पॄ पालनपूरणयोः, वॄ वरणे, भॄ भर्त्सने, मॄ हिंसायाम्, दॄ विदारणे, जॄ झॄ धॄ वयोहानौ, नॄ नये, कॄ हिंसायाम्, ॠ गतौ, गॄ शब्दे, ज्या वयोहानौ; री गतिरेषणयोः, ली श्लेषणे, व्ली वरणे, प्ली गतौ । इन चौबिस धातुओं को शित् परे रहते ह्रस्व होता है ।

६९२. वृङ, वृञ, धातुओं तथा ॠदन्त से परे लिङ् और सिच को इट् होता है विकल्प से तङ परे रहते ।

६९३. वॄत धातु से लिङ् परे रहते इट को दीर्घ नहीं होता ।

अस्तारिष्टाम् । अस्तारिषुः । अस्तरीष्ट, अस्तरिष्ट, अस्तीर्ष्ट । कॄञ् हिंसायाम् । १४ । कृणाति, कृणीते । चकार, चकरे । वॄञ् वरणे । १५ । वृणाति, वृणीते । ववार, ववरे । वरिता, वरीता । उदोष्ठ्येत्युत्त्वम् । वूर्यात् । वरिषीष्ट, वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट, अवरीष्ट, अवूर्ष्ट । धूञ् कम्पने । १६ । धुनाति, धुनीते । धविता, धोता । अधावीत् । अधविष्ट, अधोष्ट । ग्रह उपादाने । १७ । गृह्णाति, गृह्णीते । जग्राह, जगृहे ।

६९४. **ग्रहोऽलिटि दीर्घः** ७।२।३७ ॥ एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । हलः श्नः शानज्झौ । गृहाण । गृह्यात्, ग्रही-

---

**अस्तारिष्टाम्** । स्तॄधातोर्लुङस्तसस्तामि अटि च्लेः सिचि इटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरे षत्वे ष्टुत्वे 'वॄतो वा' इति प्राप्तदीर्घस्य 'सिचि च परस्मैपदेषु' इति निषेधे तत्सिद्धिः ।

**अस्तरीष्ट** । स्तॄधातोर्लुङस्तप्रत्ययेऽटि च्लेः सिचि 'लिङ्सिचोरात्मनेपदेषु' इति वेटि गुणे रपरे षत्वे ष्टुत्वे 'वॄतो वा' इति दीर्घे अस्तरीष्टेति । दीर्घाभावे अस्तरिष्टेति । इडभावे 'उश्च' इति कित्त्वाद् गुणाभावे 'ॠत इद्धातोः' इति इत्वे रपरे 'हलि च' इति दीर्घे षत्वे ष्टुत्वे अस्तीर्ष्टेति च सिद्धम् ।

**वरिषीष्ट** । वॄञो लिङस्ते सीयुटि सलोपे सुटि 'लिङ्सिचोरात्मनेपदेषु' इति वेटि गुणे रपरे षत्वे ष्टुत्वे 'न लिङि' इति दीर्घनिषेधे वरिषीष्टेति । इडभावपक्षे 'उदोष्ठ्यपूर्वस्य' इति उत्वे रपरे दीर्घे षत्वे ष्टुत्वे वूर्षीष्टेति च सिद्धम् ।

**गृह्णाति** । ग्रहो लिटस्तिपि श्नाप्रत्यये 'ग्रहिज्या' इति सम्प्रसारणे णत्वे तत्सिद्धिः ।

**जग्राह** । ग्रहो लिटस्तिपो णलि द्वित्वे 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्याससम्प्रसारणे पूर्वरूपे 'उरत्' इत्यत्वे रपरे हलादिशेषे चुत्वे उपधावृद्धौ तत्सिद्धिः ।

**जगृहे** । ग्रहो लिटस्तस्य एशि 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपेऽत्वे रपरे हलादिशेषे चुत्वे तत्सिद्धिः ।

**ग्रहीता** । ग्रहो लुटस्तिपि तासि इटि तिपो डादेशे टिलोपे 'ग्रहोऽलिटि दीर्घः' इति दीर्घे तत्सिद्धिः ।

**गृहाण** । ग्रहो लोटः सिपो हौ श्नाप्रत्यये 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे 'हलः श्नः शानज्झौ' इति श्नः शानजादेशेऽनुबन्धलोपे हेर्लुकि तत्सिद्धिः ।

---

६९४. एकाच ग्रह धातु से विहित इट् को दीर्घ होता है लिट् को छोड़कर ।

**इति क्र्यादयः ॥**

षीष्ट । ह्मयन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् अग्रहीष्ट। अग्रहीषाताम् । कुष निष्कर्षे । १८ । कुष्णाति । कोषिता ॥ अश भोजने । १९ । अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । मुष स्तेये । २० । मोषिता । मुषाण । ज्ञा अवबोधने । २१ । जज्ञौ । वृङ् संभक्तौ । २२ । वृणीते । वबृषे । ववृढ्वे । वरिता, वरीता । अवरीष्ट, अवरिष्ट, अवृत ।

इति क्र्यादयः ॥ ९ ॥



## अथ चुरादयः ।

चुर स्तेये । १ ।

६९५. **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५॥** एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । पुगन्तेति गुणः । सनाद्यन्ता इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति ।

६९६. **णिचश्च १।३।७४॥** णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात्, चोरयिषीष्ट । णिश्रीति

---

**अग्रहीत्** । ग्रहो लुङस्तिप इलोपेऽटि च्लेः सिचि इटि ईटि 'वदव्रज' इति वृद्धेः 'नेटि इति निषेधे 'अतो हलादेर्लघोः' इति प्राप्तवृद्धेः 'ह्म्यन्तक्षण' इति निषेधे 'ग्रहोऽलिटि दीर्घः' इति इटो दीर्घे स्थानिवद्भावादिट्त्वमाश्रित्य 'इट ईटि' इति सलोपे सवर्णदीर्घे तत्सिद्धिः ।

॥ इति क्र्यादयः ॥



**चोरयति** । चुर् इत्यस्मात् 'सत्यापपाश' इति णिच्यनुबन्धलोपे लघूपधगुणे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटस्तिपि शपि गुणायादेशयोः चोरयति इति 'णिचश्च' इत्यात्मनेपदपक्षे तप्रत्यये टेरेत्वे शपि गुणायादेशयोश्चोरयते इति ।

**चोर्यात्** । चुर् इत्यस्मात् 'सत्यापपाश' इति णिचि लघूपधगुणे 'सनाद्यन्ता' इति

---

६९५. सत्याप पाश रूप वीणा तूल श्लोक सेना लोम त्वच वर्म वर्ण चूर्ण इन से और चुरादिगण में पठित धातु से णिच् प्रत्यय हो स्वार्थ में ।

६९६. णिजन्तधातु से आत्मनेपद होता है । यदि क्रिया फलकर्तृगामी हो तो ।

चङ्। णौ चङीति ह्रस्वः। चङीति द्वित्वम्। हलादिः शेषः। दीर्घो लघोरित्यभ्यासस्य दीर्घः। अचूचुरत्, अचूचुरत। कथ वाक्यप्रबन्धे। २। अल्लोपः। अचः परस्मिन्पूर्वविधौ। इति स्थानिवत्त्वान्नोपधावृद्धिः। कथयति। अग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचकथत्। गण संख्याने। ३। गणयति।

६९७. **ई च गणः ७।४।९७॥** गणयतेरभ्यासस्य ई स्याच्चङ्परे णौ चादत्। अजीगणत्, अजगणत्।

इति चुरादयः॥ १०॥



---

धातुत्वाल्लिङस्तिप इकारलोपे यासुटि सलोपे आर्धधातुकत्वात् 'णेरनिटि' इति णेर्लोपे चोर्यादिति।

**अचूचुरत्**। चुर् इत्यस्मात् 'सत्यापपास' इति णिचि गुणे 'सनाद्यन्ता' इति धातुत्वाल्लुङस्तिप इकारलोपेऽटि च्लौ 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' इति च्लेश्चङि 'णेरनिटि' इति णेर्लोपे णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'चङि' इति द्वित्वे हलादिशेषे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'दीर्घो लघोः' इत्यभ्यास-दीर्घे तत्सिद्धिः।

**कथयति**। कथ इत्यस्माण्णिचि तत्यार्धधातुकत्वात् 'अतो लोपः' इत्यल्लोपे उपधावृद्धौ प्राप्तायाम् 'अचः परस्मिन्पूर्वविधौ' इत्यल्लोपस्य स्थानिवद्भावात्तदभावे धातुत्वाल्लटस्तिपि शपि गुणायादेशयोस्तत्सिद्धिः।

**अचकथत्**। कथ इत्यस्माण्णिचि अल्लोपे तस्य स्थानिवद्भावाद्वृद्ध्यभावे धातुत्वाल्लुङस्तिप इलोपेऽटि च्लेश्चङि द्वित्वे हलादिशेषे चुत्वेऽग्लोपित्वात्सन्वद्भावा-भावेन दीर्घाभावे तत्सिद्धिः।

**अजीगणत्**। गण इत्यस्मात् णिचि अल्लोपे तस्य स्थानिवत्त्वाद् वृद्ध्यभावे लुङस्तिप इकारलोपेऽटि च्लेश्चङि द्वित्वे हलादिशेषे चुत्वे अगेलपित्वाद्दीर्घसन्वद्भाव-योरभावे 'ई च गणः' इति ईत्वे अजीगणदिति। पक्षे अजगणदिति।

॥ इति चुरादयः॥



---

६९७. गणधातु के अभ्यास को ई और अ हो चङ् पर णि पर रहते।

॥ इति चुरादयः॥



## अथ ण्यन्तप्रक्रिया

६९८. **स्वतन्त्रः कर्ता १।४।५४** ॥ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

६९९. **तत्प्रयोजको हेतुश्च १।४।५५** ॥ कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ।

---

६९८. क्रिया की सिद्धि मे स्वातन्त्र्येण-प्राधान्येन विवक्षित अर्थ को कर्तृ संज्ञा होती है ।

६९९. कर्ता के प्रयोजक-प्रेरक को हेतुसंज्ञा और कर्तृ संज्ञा होती है ।

जिस अर्थ में प्रत्यय होता है वह अर्थ उक्त होता है, उससे भिन्न अनुक्त है । जैसे कर्त्ता अर्थ में यदि प्रत्यय हो तो कर्त्ता उक्त होता है उससे भिन्न कर्म्मादि अनुक्त है । उक्त कर्त्ताकर्मादि में प्रथमा विभक्ति होती है । अनुक्त कर्ता में तृतीया होती है। अनुक्त कर्म में द्वितीया होती है । ण्यन्त में प्रयोज्य और प्रयोजक दो कर्त्ता होते हैं । प्रयोजक कर्त्ता में णिच् प्रत्यय होता है । इससे प्रयोजक उक्त होता है। उसमें प्रथमा विभक्ति होती है । प्रयोज्य अनुक्त हुआ उसमें सबजगह ( सकर्मकधातु और अकर्मकधातु दोनों स्थलों में' तृतीया प्राप्त होती है परन्तु **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ'** इस सूत्रसे गत्यर्थक बुद्धचर्थक भक्षणार्थक शब्दकर्मक अकर्मक धातु के प्रयोज्य कर्त्ता को णिच्प्रत्ययस्थल में कर्मसंज्ञा होती है । जिस अर्थ में प्रत्यय हो उसके अधीन क्रिया होती है । अर्थात् यदि युष्मद् अस्मद् शब्द से भिन्न प्रयोजककर्त्ता हो तो प्रथम पुरुष होता है । युष्मत् प्रयोजककर्त्ता हो तो मध्यम पुरुष होता है । अस्मद् प्रयोजककर्त्ता हो तो उत्तम पुरुष होता है । इसमें भी एकवचन कर्त्ता हो तो एकवचन क्रिया, द्विवचनकर्त्ता हो तो द्विवचन क्रिया, बहुवचन र्त्ता हो तो बहुवचन क्रिया होती है । **उदाहरण**—देवदत्तः भवति यज्ञदत्तः प्रेरयति इस अर्थ में यज्ञदत्तः देवदत्तं भावयति, यह प्रयोग होता है । देवदत्तो भवति यज्ञदत्तौ प्रेरयतः, यहां यज्ञदत्तौ देवदत्तं भावयतः, यह होता है । देवदत्तो भवति यज्ञदत्ताः प्रेरयन्ति, यहां यज्ञदत्ताः देवदत्तं भावयन्ति । देवदत्तो भवति त्वं प्रेरयसि, इति त्वं देवदत्तं भावयसि, देवदत्तो भवति युवां प्रेरयथः, इति युवां देवदत्तं भावयथः, देवदत्तो भवति यूयं प्रेरयथ, इति यूयम् देवदत्तम्भावयथ, देवदत्तो भवति अहम्प्रेरयामि, इति अहं देवदत्तम्भावयामि, देवदत्तो भवति आवाम्प्रे-

७००. **हेतुमति च** ३।१।२६॥ प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति । भावयते ।

७०१. **ओः पुयण्ज्यपरे** ७।४।८० ॥ सनि परे यदङ्गं तदवयवाभ्यासो·

---

**भावयति** । भू इत्यस्मात् 'हेतुमति च' इति णिच्प्रत्ययेऽनुबन्धलोपे 'अचोऽञ्णिति' इति वृद्धौ आवादेशे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटस्तिपि शपि गुणेऽयादेशे तत्सिद्धिः ।

---

रयावः, इति आवां देवदत्तम्भावयावः देवदत्तो भवति वयम्प्रेरयामः, इति वयं देवदत्तम्भावयामः । इन स्थलों में प्रयोजक कर्त्ता के अधीन ही क्रियायें हुई । यदि प्रयोजककर्त्ता का दूसरा प्रयोजक होजाय तो प्रधान प्रयोजक के अधीन ही क्रिया होगी और प्रधान प्रयोजक के उक्त होने से उसमें प्रथमा होगी । अप्रधान प्रयोजक के अनुक्त होने से उसमें तृतीया ही विभक्ति होगी । **उदाहरण**—देवदत्तो भवति यज्ञदत्तः प्रेरयति प्रेरयन्तं यज्ञदत्तं विष्णुमित्रः प्रेरयति, इति विष्णुमित्रो यज्ञदत्तेन देवदत्तं भावयति, यहां प्रधानप्रयोजक के आधीन क्रिया हुई । इसी तरह अन्यवचनों में भी समझना । युष्मद् शब्द प्रधानप्रयोजक कर्त्ता रहने पर ही यहां मध्यम पुरुष होगा और अस्मद्शब्दप्रधान प्रयोजक कर्त्ता रहने पर ही उत्तमपुरुष होगा यह पूरा ध्यान रहना चाहिये । गत्याद्यर्थक से भिन्न सकर्मकधातुस्थल में प्रयोजककर्त्ता उक्त होने से उसमें प्रथमा प्रयोज्यकर्त्ता अनुक्त होने से उसमें तृतीया विभक्ति होगी । देवदत्तस्तण्डुलं पचति यज्ञदत्तः प्रेरयति, यहां यज्ञदत्तो देवदत्तेन तण्डुलं पाचयति यह होगा ' यहां पर भी प्रयोजक का दूसरा प्रयोजक रहने पर प्रधानप्रयोजक में प्रथमा अप्रधानप्रयोजक कर्त्ता और प्रयोज्य कर्ता दोनों में तृतीया होगी । जैसे देवदत्तस्तण्डुलं पचति, यज्ञदतः प्रेरयति, प्रेरयन्तं यज्ञदत्तं विष्णुमित्रः प्रेरयति । यहां पर विष्णुमित्रो यज्ञदत्तेन देवदत्तेन तण्डुलं पाचयति यह होगा । विशेष विवरण विस्तारभयसे नहीं लिखा जा रहा है । पूर्वोक्तरीति से सब धातुओं के सब लकारों में विचार लेना चाहिये ।

७००. प्रेषणादि ( आज्ञा प्रार्थना अनुमति ) रूप प्रयोजकव्यापार वाच्यत्वेन विवक्षित रहते धातु से णिच् प्रत्यय होता है ।

७०१. सन् पर रहते जो अङ्ग उसका अवयव जो अभ्यास उकार उसको इकार हो अवर्ण पर हो जिससे ऐसे पवर्ग यण् जकार पर रहते ।

कारस्य इत्स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः। अबीभवत्। ष्ठा गतिनिवृत्तौ।

७०२. **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ** ७।३।३६ ॥ स्थापयति।

७०३. **तिष्ठतेरित्** ७।४।५ ॥ उपधाया इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्। घट चेष्टायाम्।

---

**अबीभवत्**। भूइत्यस्मात् णिचि 'णिच्यच आदेशो न द्वित्वे कर्त्तव्ये' इति निषेधात्पूर्वं वृद्ध्यभावे धातुत्वाल्लुङस्तिप इकारलोपेऽटि च्लौ 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' इति च्लेश्चङि णिलोपे 'चङि' इति द्वित्वे प्रत्ययलक्षणत्वाद् वृद्धौ आवादेशे णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे जश्त्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'ओः पुयण्ज्यपरे' इति अभ्यासोकारस्य इत्वे 'दीर्घो लघोः' इति दीर्घे तत्सिद्धिः।

**स्थापयति**। ष्ठा इत्यत्र 'धात्वादेः षः सः' इति षस्य सत्वे ष्टुत्वनिवृत्तौ स्था इत्यस्माण्णिच्यनुबन्धलोपे 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इति पुगागमे धातुत्वाल्लटस्तिपि शपि गुणेऽयादेशे तत्सिद्धिः।

**अतिष्ठिपत्**। स्थाइत्यस्मात् णिचि 'अर्तिह्रीव्लीरीक्पुयीक्ष्माय्यातां पुङ् णौ' इति पुकि धातुत्वाल्लुङस्तिप इकारलोपेऽटि च्लेश्चङि 'णिच्यच आदेशो न द्वित्वे कार्ये' इति निषेधात् इत्वापेक्षया पूर्वं द्वित्वेऽभ्यासत्वे 'शर्पूर्वाः खयः' इति सलोपेऽभ्यासह्रस्वे चर्त्वे उपधाह्रस्वे णिलोपे सन्वद्भावे 'सन्यत' इतीत्वे षत्वे ष्टुत्वे 'तिष्ठतेरित्' इतीत्वे तत्सिद्धिः।

**अत्र केचित्**। ओणृ अपनयने इत्यत्र ऋदित्करणाल्लिङ्गात् 'उपधाकार्यं द्वित्वात्प्रबलम्' इति कल्पनया पूर्वं 'तिष्ठतेरित्' इतीत्वं ततो द्वित्वम् इति तन्न समीचीनम्। उक्तकल्पनाया उपधाकार्यमात्रविषयकत्वम्। ओः पययोरिति वक्तव्ये पुयण्जीतिवचनाल्लिङ्गात् 'णिच्यच आदेशो न' इति कल्पनायास्तु यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तन्मात्रविषयकत्वम् इति विशेषेणानेन सामान्यस्य तस्य बाधात् इति शम्।

---

७०२. ऋ गतिप्रापणयोः, ऋ गतौ, ह्री लज्जायम्, व्ली वरणे, री गतिरेषणयोः रीङ् श्रवणे' क्नूयी शब्दे उन्दे च, क्ष्मायी विधूनने, इनको और आकारान्तधातु को पुक् हो णि पर रहते।

७०३. स्था धातु के उपधा को इत् आदेश होता है चङ् परक णि परे रहते।

७०४. **मितां ह्रस्वः** ६।४।९२ ॥ णौ घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः । घटयति । ज्ञप ज्ञाने ज्ञापने च । ज्ञापयति । अजिज्ञपत् ।

इति ण्यन्तप्रक्रिया ॥ १ ॥



---

**घटयति** । घट इत्यस्माण्णिचि 'अत उपधायाः' इति उपधावृद्धौ घटादेर्मित्त्वात् 'मितां ह्रस्वः' इति ह्रस्वे धातुत्वाल्लटस्तिपि शपि गुणेऽयादेशे तत्सिद्धिः ।

**अजिज्ञपत्** । ज्ञपइत्यस्मात् णिचि धातुत्वाल्लुङस्तिप इकारलोपेऽटि च्लेश्चङि द्वित्वेऽभ्यासकार्ये उपधावृद्धौ ह्रस्वे णिलोपे सन्वद्भावे 'सन्यतः' इतीत्वे तत्सिद्धिः ।

॥ इति ण्यन्तप्रक्रिया ॥



---

७०४. घटादि और ज्ञपादि मित धातुओं की उपधा को ह्रस्व होता है णि परे रहते ।

## अथ सन्नन्तप्रक्रिया

**७०५. धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७॥** इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् । पठ व्यक्तायां वाचि ।

**७०६. सन्यङोः ६।१।९॥** सन्नन्तस्य यङन्तस्य धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम्—गमनेनेच्छति । समानकर्तृकात्किम्—शिष्याः पठन्त्वितीच्छति गुरुः । वा ग्रहणाद्वाक्यमपि । लुङ्सनोर्घस्लृ ।

**७०७. सः स्यार्धधातुके ७।४।४९॥** सस्य तः स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति । एकाच इति नेट् ।

**७०८. अज्झनगमां सनि ६।४।१६॥** अजन्तानां हन्तेरजादेशगमेश्च दीर्घो झलादौ सनि ।

---

**पिपठिषति ।** पठ इत्यस्मात् 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सन्प्रत्यये इटि 'सन्यङोः' इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'सन्यतः' इतीत्वे षत्वे' 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि पररूपे तत्सिद्धिः ।

**जिघत्सति ।** अद् इत्यस्माद् 'धातोः कर्मणः' इति सन्प्रत्यये 'लुङ्सनोर्घस्लृ' इत्यदो घस्लादेशेऽनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इतीटो निषेधे द्वित्वेऽभ्यासकार्ये 'सन्यतः' इतीत्वे 'सःस्यार्धधातुके' इति सस्य तकारे धातुत्वाल्लडादिकार्ये तत्सिद्धिः ।

---

७०५. इष्धातु का जो कर्म तद्बोधक और इष्धातु के समानकर्तृक अर्थात् इष्धातु का जो कर्ता वही कर्ता हो जिसका ऐसे धातु से इच्छा अर्थ में सन् प्रत्यय होता है विकल्पसे । जैसे 'देवदत्तः पठितुमिच्छति पिपठिषति' यहाँ पर इष्धातु का कर्त्ता देवदत्त है वही पठधातु का भी ( पठितुम् इसका ) कर्त्ता है और इष्धातु का पठधातु ( पठितुम् यह ) कर्म भी है इसलिये पठधातु से सन् प्रत्यय हुआ ।

७०६. सन्नन्त और यङन्त धातु के अनभ्यास प्रथम एकाच को द्वित्व होता है और अजादि धातु के द्वितीय एकाच को द्वित्व होता है ।

७०७. सकार के स्थान में तकार होता है सादि आर्धधातुक परे रहते ।

७०८. अजन्त धातु, हन्धातु और इण् इक् इङ् इनके स्थान में आदेश जो गम् इन सबको दीर्घ होता है झलादि सन् पर रहते ।

७०९. **इको झल् १।२।९॥** इगन्ताज्झलादिः सन् कित्स्यात्। ऋत इद्धतोः। कर्तुमिच्छति चिकीर्षति।

७१०. **सनिग्रहगुहोश्च ७।२।१२॥** ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात्। बुभूषति।

॥ इति सन्नन्तप्रक्रिया ॥ २॥



## अथ यङन्तप्रक्रिया।

७११. **धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२॥** पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात्।

७१२. **गुणो यङ्लुकोः ७।४।८२॥** अभ्यासस्य गुणो यङि यङ्लुकि च। ङिदन्तत्वादात्मनेपदम्। पुनःपुनरतिशयेन वा भवति बोभूयते। बोभू-

---

**चिकीर्षति**। कृधातोः सनि 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे 'अज्झनगमां सनि' इति दीर्घे 'इको झल्' इति कित्त्वाद् गुणाभावे 'ऋत इद्धातोः' इति इत्त्वे रपरे द्वित्वेऽभ्यासकार्ये 'हलि च' इति दीर्घे षत्वे धातुत्वाल्लडादिकार्ये तत्सिद्धिः।

**बुभूषति**। भूधातोः सनि 'इको झल्' इति कित्त्वाद् गुणाभावे 'सनि ग्रहगुहोश्च' इतीण्निषेधे द्वित्वे ह्रस्वे षत्वे धातुत्वाल्लटस्तिपि शपि पररूपे तत्सिद्धिः।

इति सन्नन्ताः॥



**बोभूयते**। भूधातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङ्प्रत्यये 'सन्यङोः' इति द्वित्वे 'गुणो यङ्लुकोः' इस्यभ्यासगुणे जश्त्वे बोभूय् इत्यस्य 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि ङित्त्वादात्मनेपदे तप्रत्यये शपि पररूपे टेरेत्वे तत्सिद्धिः।

---

७०९. इगन्त झलादि से परे जो सन् वह कित् होता है।

७१०. ग्रह, गुह और उगन्त से परे सन् को इट नहीं होता।

७११. पौनःपुन्य (बारम्बार) और भृश (अत्यन्त) अर्थ द्योत्य रहते एकाच् हलादिधातु से यङ् प्रत्यय हो।

७१२ अभ्यास को गुण होता है यङ् अथवा यङ्लुक् परे रहते।

याञ्चक्रे । अबोभूयिष्ट ।

७१३. **नित्यं कौटिल्ये गतौ ३।१।२३ ॥** गत्यर्थात्कौटिल्य एव एङ स्यान्न तु क्रियासमभिहारे ।

७१४. **दीर्घोऽकितः ७।४।८३ ॥** अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ।

७१५. **यस्य हलः ६।४।४९ ॥** यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य लोप आर्धधातुके । आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे । वाव्रजिता ।

७१६. **रीगृदुपधस्य च ७।४।९० ॥** ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्लुङ्लुकोः । वरीवृताञ्चक्रे । वरीवर्तिता ।

---

**अबोभूयिष्ट** । भूइत्यस्माद् यङि द्वित्वेऽभ्यासगुणे जश्त्वे बोभूय इत्यस्य धातुत्वाल्लुङस्तप्रत्ययेऽटि च्लेःसिचि इटि 'अतो लोपः' इत्यल्लोपे षत्वे ष्टुत्वे तत्सिद्धिः ।

**वाव्रज्यते** । व्रज्धातोः 'नित्यं कौटिल्ये गतौ' इति यङि द्वित्वेऽभ्यासकार्ये 'दीर्घोऽकितः' इत्यभ्यासदीर्घे धातुत्वाल्लडादिकार्ये तत्सिद्धिः ।

**वाव्रजाञ्चक्रे** । व्रज्धातोर्यङि द्वित्वेऽभ्यासकार्ये 'दीर्घोऽकितः' इत्यभ्यासदीर्घे धातुत्वाल्लिटि अनेकाच्त्वादाम्प्रत्यये 'आदेः परस्य' इति सूत्रबलात् 'यस्य हलः' इति यलोपे 'अतो लोपः' इत्यल्लोपे 'आमः' इति लिटो लुकि लिट्परकृञोऽनुप्रयोगे तप्रत्यये तस्य एशि द्वित्वेऽभ्यासकार्ये तत्सिद्धिः ।

**वरीवृत्यते** । वृत्धातोर्यङि द्वित्वे 'उरत्' इत्यत्त्वे रपरे हलादिशेषे 'रीगृदुपधस्य च' इति अभ्यासस्य रीगागमे वरीवृत्य इत्यस्य धातुत्वाल्लडादिके तत्सिद्धिः ।

---

७१३. गत्यर्थक धातु से कुटिल गति अर्थ में ही यङ् होता है क्रिया समभिहार में नहीं ।

७१४. कित् भिन्न अभ्यास को दीर्घ होता है यङ् अथवा यङ्लुक् परे रहते ।

७१५. हल से परे य शब्द का लोप होता है आर्धधातुक परे रहते । यहाँ यकार और अकार के समुदाय को यस्य कहा गया है ।

७१६. ऋकार है उपधा में जिसके उस धातु के अभ्यास को रीक् आगम होता है यङ् अथवा यङ्लुक परे रहते ।

७१७. **क्षुम्नादिषु च ८।४।३९** ॥ णत्वं न। नरीनृत्यते जरीगृह्यते।

इति यङन्तप्रक्रिया ॥ ३ ॥



## अथ यङ्लुक्प्रक्रिया।

७१८. **यङोऽचि च २।४।७४** ॥ यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनापि क्वचित्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। शेषात्कर्तरीति परस्मैपदम्। चर्करीतं चेत्यादादौ पाठाच्छपो लुक्।

७१९. **यङो वा ७।३।९४** ॥ यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड्वा स्यात्। भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न। बोभूतु तेतिक्ते इति छन्दसि निपातनात्। बोभवीति, बोभोति। बोभूतः। अदभ्यस्तात्। बोभुवति। बोभवाञ्चकार, बोभवामास। बोभविता। बोभविष्यति।

---

**नरीनृत्यते**। नृत्धातोर्यङि द्वित्वेऽभ्यासकार्ये रीगागमे धातुत्वाल्लटस्तत्प्रत्यये एशि शपि पररूपे 'क्षुम्नादिषु च' इति णत्वनिषेधे तत्सिद्धिः।

इति यङन्तप्रक्रिया ॥



**बोभवीति**। भूधातोर्यङि 'यङोऽचि च' इति द्वित्वापेक्षया आदौ यङो लुकि ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वेऽभ्यासगुणे जश्त्वे धातुत्वाल्लटस्तिपि शपि 'चर्करीतं च' इति यङ्लुगन्तस्य अदादौ पाठाच्छपो लुकि बोभू ति इति स्थिते 'यङो वा' इति पाक्षिक ईडागमे बोभूतुतेत्तिक्ते इति छन्दसि निपातनात् 'भूसुवोस्तिङि' इति गुणनिषेधस्य यङ्लुकि भाषायामप्रवृत्त्या गुणेऽवादेशे तत्सिद्धिः। ईडभावपक्षे गुणे बोभोति इति सिद्ध्यति।

**बोभुवति**। भूइत्यस्माद् यङि यङो लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वेऽभ्यासगुणे जश्त्वे धातुत्वाल्लटो झौ 'अदभ्यस्तात्' इति झस्याति उवङि तत्सिद्धिः।

---

७१७. क्षुम्नादि गण पठित शब्दों के नकार को णत्व नहीं होता।

७१८. अजादि प्रत्यय परे रहते यङ् का लोप होता है कहीं-कहीं निमित्त के अभाव में भी लोप होता है। यह लोप विना किसी निमित्त के होता। अतः निमित्त निर्पेक्ष होने से अन्तरङ्ग है और आदि में होता है।

७१९. यङ्लुगन्त से परे हलादिपित सार्वधातुक को विकल्प से इट् का आगम होता है।

बोभवीतु, बोभोतु, बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत्, अबोभोत्, अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । बोभूयासुः । गतिस्थेति सिचो लुक् । यङो वेतीट् पक्षे गुणं बाधित्वा नित्यत्वाद् वुक् । अबोभूवीत्, अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ।

इति यङ्लुक्प्रक्रिया ॥ ४ ॥



## अथ नामधातवः

७२०. **सुप आत्मनः क्यच् ३।१।८ ॥** इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच् प्रत्ययो वा स्यात् ।

७२१. **सुपो धातुप्रातिपदिकयोः २।४।७१ ॥** एतयोरवयवस्य सुपो लुक् ।

७२२. **क्यचि च ७।४।३३ ॥** अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति ।

७२३. **नः क्ये १।४।१५ ॥** क्यचि क्यङि च नान्तमेव पदं नान्यत् ।

---

**अबोभूवीत्** । भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वेऽभ्यासगुणे जश्त्वे धातुत्वाल्लुङस्तिप इकारलोपेऽटि 'यङो वा' इति पाक्षिके ईटि गुणं बाधित्वा नित्यत्वाद् वुकि अबोभूवीत् इति । ईडभावपक्षे गुणे अबोभोत् इति च सिद्धम् ।

इति यङ्लुगन्ताः ।



**पुत्रीयति** । पुत्रमिच्छतीतिविग्रहे पुत्रअम् इति सुबन्तात् 'सुप आत्मनः क्यच्' इति क्यच् प्रत्ययेऽनुबन्धलोपे 'सनाद्यन्ता धातवः' इति पुत्रअम् य इत्यस्य धातु-

---

७२०. इष्धातु का कर्मभूत और एषिता अर्थात् 'इच्छा करनेवाला' का सम्बन्धी जो अर्थ तद्वाचकत्वेन विवक्षित सुबन्त से इच्छा अर्थ में क्यच् प्रत्यय होता है विकल्प से । जैसे—देवदत्तः आत्मनः पुत्रमिच्छति पुत्रीयति यहांपर पुत्र इष्धातु का कर्म है और इच्छा करनेवाले देवदत्त का सम्बन्धी भी है तद्वाचकत्वेन विवक्षित पुत्रअम् इस सुबन्त से क्यच् प्रत्यय हुआ ।

७२१. धातु और प्रातिपादिक के अवयवभूत सुप का लोप होता है ।

७२२. अवर्ण के स्थान में ईकार आदेश होता है क्यच् प्रत्यय परे रहते ।

७२३. क्यच् और क्यङ् परे रहते नान्त ही पद होता है अन्य नहीं ।

नलोपः राजीयति। नान्तमेवेति किम्—वाच्यति। हलि च। गीर्यति। पूर्यति। धातोरित्येव। नेह—दिवमिच्छति दिव्यति।

७२४. **क्यस्य विभाषा** ६।४।५० ॥ हलः परयोः क्यच्क्यङोर्लोपो वार्धधातुके। आदेः परस्य। अतो लोपः। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। समिधिता, समिध्यिता।

७२५ **काम्यच्च** ३।१।९ ॥ उक्तविषये काम्यच् स्यात्। पुत्रमात्मन इच्छति पुत्रकाम्यति। पुत्रकाम्यिता।

७२६. **उपमानादाचारे** ३।१।१० ॥ उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच्। पुत्रमिवाचरति पुत्रीयति छात्रम्। विष्णूयति द्विजम्। ( सर्वप्राति-

---

संज्ञायाम् 'सुपो धातुप्रातिपदिकयोः' इति अमो लुकि 'क्यचि च' इति अकारस्य ईत्वे धातुत्वाल्लटस्तिपि शपि पररूपे तत्सिद्धिः।

**राजीयति**। द्वितीयान्त राजन्शब्दात् इच्छायामर्थे क्यचि धातुत्वात् सुपो लुकि 'नः क्ये' इति राजन्-इत्यस्य पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'क्यचि च' इतीत्त्वे लडादिकार्ये तत्सिद्धिः।

**वाच्यति**। द्वितीयान्तवाच्शब्दात् क्यचि धातुत्वात्सुपो लुकि 'नः क्ये' इति नियमाद् वाच् इत्यस्य पदत्वाभावात्कुत्वाभावे लडादिकार्ये तत्सिद्धिः।

**समिधिता**। समिधमिच्छतीतिविग्रहे अमन्तसमिध्शब्दात्क्यचि धातुत्त्वात्सुपो लुकि 'नः क्ये' इति नियमात्पदत्वाभावेन जश्त्वाभावे लुटस्तिबादिकार्ये समिध्य ता स्थिते इटि 'आदेः परस्य' इति सहकारेण 'क्यस्य विभाषा' इति यलोपेऽलोपे इति तस्य स्थानिवत्त्वाल्लघूपधगुणाभावे तत्सिद्धिः।

**पुत्रकाम्यति**। अमन्तपुत्रशब्दात् 'काम्यच्च' इति काम्यचि धातुत्वात्सुपो लुकि लडादिकार्ये तत्सिद्धिः।

**पुत्रीयति छात्रम्**। पुत्रमिवाचरतीतिविग्रहे पुत्रशब्दादमन्तात् 'उपमानादाचारे' इति क्यचि धातुत्वात्सुपो लुकि 'क्यचि च' इतीत्वे लडादिके तत्सिद्धिः।

---

७२३. हल से परे क्यच् और क्यङ् का लोप होता है विकल्प से, आर्धधातुक परे रहते।

७२४. इच्छा अर्थ में स्वसम्बन्धी इच्छा के सुवन्त कर्म से परे काम्यच् प्रत्यय होता है विकल्प से।

७२५. उपमान के कर्म से परे सुवन्त से क्यच् प्रत्यय होता हैं आचार अर्थ में। ( वा० ) समस्त प्रातिपदिकों से क्विप् प्रत्यय होता है विकल्प से।

पदिकेभ्यः क्विब्वा वक्तव्यः )। अतो गुणे। कृष्ण इवाचरति कृष्णति। स्व इवाचरति स्वति। सस्वौ।

**७२७. अनुनासिकस्य क्विझलोः क्ङिति** ६।४।१५॥ अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति। इदमिवाचरति इदामति। राजेव राजानति। पन्था इव पथीनति।

**७२८. कष्टाय क्रमणे** ३।१।१४॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः।

**७२९. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** ३।१।१७॥ एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। ( ग ) तत्करोति तदाचष्टे। इति णिच्। ( ग ) प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदि-

---

**कृष्णति**। कृष्णइवाचरतीतिविग्रहे कृष्ण शब्दात्, 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि तल्लोपे धातुत्वाल्लटस्तिपि शपि, 'अतो गुणे' इति पररूपे तत्सिद्धिः।

**सस्वौ**। स्व इवाचचारतीतिविग्रहे स्वशब्दात् 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि तल्लोपे धातुत्वाल्लिटस्तिपो णलि द्वित्वे हलादिशेषे सस्व अ इति स्थिते ,अचो ञ्णिति' इति वृद्धौ 'आत औ णलः' इति णल औकारे 'वृद्धिरेचि' इति वृद्धौ तत्सिद्धिः।

**इदामति**। इदमशब्दात् क्विपि तल्लोपे धातुत्वाल्लटस्तिपि शपि 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घे तत्सिद्धिः।

**कष्टायते**। कष्टाय क्रमते इति विग्रहे चतुर्थ्यन्तकष्टशब्दात् क्यङि धातुत्वात्प्रातिपदिकत्वेन सुपो लुकि ङित्त्वादात्मनेपदे लटस्तप्रत्यये टेरेत्वे शपि पररूपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे तत्सिद्धिः।

**शब्दायते**। शब्दं करोतीति विग्रहे अमन्तशब्दशब्दात् 'शब्दवैरकलहाभ्रकण्व-

---

७२७. अनुनासिकान्त पद की उपधा को दीर्घ होता है क्विप् अथवा झलादि कित् ङित् परे रहते।

७२८. चतुर्थ्यन्त कष्ट शब्द से उत्साह अर्थ में क्यङ् प्रत्यय होता है।

७२९. शब्द, बैर, कलह, अभ्र, कण्व और मेघ इन कर्म रूप शब्दो से क्यङ् प्रत्यय आता है कर्ता अर्थ में। ( ग० ) प्रातिपादिक से परे धात्वर्थ मे णिच प्रत्यय होता है जैसे पुंवद्भाव रभाव टिलोप विन् मतुप लुक् यणादि पर लोप प्रस्थ स्फादि आदेश भ संज्ञा होते हैं। वैसे णिच परे रहते भी इष्टवद्भाव होने के कारण णिच् परे भी हों।

काद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लुग्यणादिपरलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। इत्यल्लोपः। घटं करोत्याचष्टे वा घटयति।

इति नामधातवः ॥ ५ ॥



## अथ कण्ड्वादयः।

७३०. **कण्ड्वादिभ्यो यक्** ३।१।२७ ॥ एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे। कण्डूञ् गात्रविघर्षणे ॥ १ ॥ कण्डूयति। कण्डूयत इत्यादि।

इति कण्डूवादयः ॥ ६ ॥



अथ पदव्यवस्था

## आत्मनेपदक्रिया

७३१. **कर्तरि कर्मव्यतिहारे** १।३।१४ ॥ क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम्। व्यतिलुनीते। अन्यस्य योग्यं लवनं अन्यः करोतीत्यर्थः।

---

मेघेभ्यः करणे' इति क्यङि धातुत्वादमो लुकि ङित्त्वाल्लटस्तप्रत्यये टेरेत्वे शपि पररूपे दीर्घे तत्सिद्धिः।

**घटयति**। घटं करोति आचष्टे वा इति विग्रहे घटशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिचि इष्ठवद्भावाट्टिलोपे च तस्य स्थानिवद्भावादुपधावृद्ध्यभावे धातुत्वाल्लटस्तिपि शपि गुणेऽयादेशे तत्सिद्धिः।

इति नामधातवः ॥



**व्यतिलुनीते**। वि अतिपूर्वात् लूञ् धातोर्ञित्वादात्मनेपदे परस्मैपदे च प्राप्ते 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदत्वाल्लटस्तप्रत्ययादिके तत्सिद्धिः। **अन्यस्येति**। शूद्रस्य योग्यं सस्यादिलवनं ब्राह्मणः करोतीत्यर्थः।

---

७३०. कण्वादि गण पठित धातुओं से स्वार्थ में यक् प्रत्यय होता है जो नित्य होता है।

७३१. क्रिया का विनिमय अर्थात् 'अन्य से करने योग्य क्रिया का अन्य से करना' द्योत्य रहते कर्ता अर्थ में धातु से आत्मनेपदसंज्ञक प्रत्यय होते हैं।

७३२. **न गतिहिंसार्थेभ्यः** १।३।१५ ॥ व्यतिगच्छन्ति । व्यतिघ्नन्ति ।

७३३. **नेर्विशः** १।३।१७ ॥ निविशते ।

७३४. **परिव्यवेभ्यः क्रियः** १।३।१८ ॥ परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

७३५. **विपराभ्यां जेः** १।३।१९ ॥ विजयते । पराजयते ।

७३६. **समवप्रविभ्यः स्थः** १।३।२२ ॥ संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ।

७३७. **अपह्नवे ज्ञः** १।३।४४ ॥ शतमपजानीते । अपलपतीत्यर्थः ।

७३८. **अकर्मकाच्च** १।३।४५ ॥ सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ।

७३९. **उदश्चरः सकर्मकात्** १।३।५३ ॥ धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ।

७४०. **समस्तृतीयायुक्तात्** १।३।५४ ॥ रथेन सञ्चरते ।

---

व्यतिगच्छन्ति । व्यतिपूर्वाद् गमधातोः क्रियाविनिमयेऽर्थे 'कर्तरि कर्मव्यतिहारे' इति आत्मनेपदत्वे प्राप्ते 'न गतिहिंसार्थेभ्यः' इति तन्निषेधे लटस्तिबादिके तत्सिद्धिः ।

---

७३२. क्रिया का विनिमय द्योतित करने के लिए गत्यर्थक और हिंसार्थक धातुओं से कर्ता अर्थ में आत्मनेपद नहीं होता ।

७३३. नि उपसर्ग से परे विश धातु को आत्मनेपद होता है ।

७३४. परि, वि और अव उपसर्गं से परे क्री धातु को आत्मनेपद होता है ।

७३५. वि और परा उपसर्ग से परे जि धातु को आत्मनेपद होता है ।

७३६. सम् अव, प्र, वि उपसर्गो से परे स्था धातु को आत्मनेपद होता है ।

७३७. अपह्नव ( छिपाने ) अर्थ में ज्ञा धातु से आत्मनेपद होता है ।

७३८. अकर्मक ज्ञाधातु से आत्मनेपद होता है । धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया । धातु का दूसरा अर्थ होने से, कर्म का धातु के अर्थ में सङ्गृहीत होने से, कर्म की प्रसिद्धि से, कर्म की अविवक्षा से, इन चार कारणों से सकर्मक भी धातु अकर्मक होते हैं ।

७३९. सकर्मक उत् उपसर्गक चर धातु से आत्मनेपद होता है ।

७४०. तृतीयान्त पद से युक्त सम् उपसर्गक चर धातु से आत्मनेपद होता है ।

७४१. **दाणश्च सा चेच्चतुर्थ्यर्थे** १।३।५५ ॥ सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी।

७४२. **पूर्ववत्सनः** १।३।६२ ॥ सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिषते।

७४३. **हलन्ताच्च** १।२।१० ॥ इक्समीपाद्धलः परो झलादिः सन् कित्। निविविक्षते।

७४४. **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः** १।३।३२। गन्धनं सूचनम्। उत्कुरुते। सूचयतीत्यर्थः। अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुत्कुरुते। भर्त्सयतीत्यर्थः। हरिमुपकुरुते। सेवत इत्यर्थः। परदारान्प्रकुरुते। तेषु सहसा प्रवर्तते। एधोदकस्योपस्कुरुते। गुणमाधत्ते। कथाः

---

**दास्या संयच्छते कामी।** 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकेन दास्या इत्यत्र चतुर्थ्यर्थे तृतीया। ततश्च दास्या इति तृतीयान्तयुक्तात्सम्पूर्वाद्दाण्धातोर्लटि 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यात्मनेपदत्वात्तप्रत्यये 'पाघ्राध्मा' इति दाणो यच्छादेशादिकार्ये तत्सिद्धिः

**एदिधिषते :** एध्धातोः सनि इटि द्वित्वे षत्वे जश्त्वे धातुत्वाल्लटि 'पूर्ववत्सनः' इत्यात्मनेपदत्वाल्लटस्तप्रत्यये शपि पररूपे तत्सिद्धिः।

**निविविक्षते।** निपूर्वाद्विश्धातोः सनि 'हलन्ताच्च' इति सनः कित्वाद्गुणाभावे द्वित्वेऽभ्यासकार्ये 'व्रश्च' इति शस्य षत्वे षस्य कत्वे धातुत्वाल्लटि 'पूर्ववत्सनः' इत्यात्मनेपदत्वाल्लटस्तप्रत्यययादिके तत्सिद्धिः।

इत्यात्मनेपदप्रक्रिया ॥



---

७४१. सम् पूर्वक दाण धातु तृतीयान्त से युक्त हो तो आत्मनेपद होता है यदि वह तृतीया चतुर्थी के अर्थ में ही।

७४२. सन् से पूर्व जो धातु उसके तुल्य सन्नन्त से भी आत्मनेपद होता है। अर्थात् जिस धातु से सन् प्रत्यय किया हो उस धातु से यदि आत्मनेपद होता रहा हो तो उस धातु से सन्नन्त भी आत्मनेपद हो।

७४३. इक् समीप जो हल् उससे परे झलादि सन् को कित् होता है।

७४४. गन्धन ( सूचन ) अवक्षेपण ( भर्त्सना ) सेवन साहसिक्य प्रतियत्न, प्रकथन और उपयोग अर्थों में उत् उपसर्ग से युक्त कृञ् धातु से आत्मनेपद होता है।

प्रकुरुते। कथयतीत्यर्थः। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते। एषु किम्—कटं करोति। भुजोऽनवने। ओदनं भुङ्क्ते। अनवने किम्—महीं भुनक्ति ॥ ८ ॥

इत्यात्मनेपदप्रक्रिया ॥



## अथ परस्मैपदप्रक्रिया।

७४५. **अनुपराभ्यां कृञः** १।३।७९ ॥ कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात्। अनुकरोति। पराकरोति।

७४६ **अभिप्रत्यतिभ्यः क्षिपः** १।३।८० ॥ क्षिप प्रेरणे। स्वरितेत्। अभिक्षिपति।

७४७. **प्राद्वहः** १।३।८१ ॥ प्रवहति।

७४८. **परेर्मृषः** १।२।८२ ॥ परिमृषति। परिमृष्यति।

७४९. **व्याङ्परिभ्यो रमः** १।३।८३ ॥ रमु क्रीडायाम्। विरमति।

७५०. **उपाच्च** १।३।८४ ॥ यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः। अन्तर्भावितण्यर्थोयम्। इति परस्मैपदप्रक्रिया।

इति पदव्यवस्था ॥ ७ ॥



## अथ भावकर्मप्रक्रिया।

७५१. **भावकर्मणोः** १।३।१३ ॥ लस्यात्मनेपदम्।

७५२. **सार्वधातुके यक्** ३।१।६७ ॥ धातोर्यक् भावकर्मवाचिनि सार्वधातुके। भावः क्रिया। सा च भावार्थकलकारेणनूद्यते। युष्मदस्मद्भ्यां

---

७४५. कर्तृगामी क्रियाफल होने पर गन्धन आदि अर्थों में परस्मैपद होता है।

७४६. अभि, प्रति, अति, उपसर्गों से परे क्षिप धातु को परस्मैपद होता है।

७४७. प्र उपसर्ग से परे वह धातु को परस्मैपद होता है।

७४८. परि उपसर्ग से परे मृष धातु से परस्मैपद होता है।

७४९. वि, आङ्, परि, उपसर्गों से परे रम् धातु को परस्मैपद होता है।

७५०. उप उपसर्ग से परे भी रम धातु को परस्मैपद होता है।

७५१. भाव अथवा कर्म अर्थ में जो लकार उनसे आत्मनेपद होता है।

७५२. भावकर्म वाची सार्वधातुक परे रहते धातु से यक् प्रत्यय होता है।

सामानाधिकरण्याभावात्प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किं त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ।

---

भूयते । भूधातोर्भावे लटि 'भावकर्मणोः' इत्यात्मनेपदत्त्वात्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि तत्सिद्धिः ।

---

भाव क्रिया को कहते हैं । उसका भावार्थक लकार से अनुवाद होता है । कर्ता में लकार करने पर तिङ् और युष्मद् अस्मद् शब्द कर्तारूप एक अर्थ के वाचक होते हैं तो मध्यम और उत्तम पुरुष धातु से होता है । भाव में लकार करने पर तिङ् के साथ युष्मद् अस्मद् एकार्थवाचक नहीं होते इससे मध्यम उत्तम पुरुष नहीं होता किन्तु प्रथमपुरुष ही होता है । तिङर्थ क्रिया के द्रव्यरूप न होने से द्वित्व बहुत्व सङ्ख्या की प्रतीति नहीं होती अतः द्विवचन नहीं होते किन्तु स्वाभाविक एकवचन हीं होता है ।

भू धातु अकर्मक है उससे भाव में प्रत्यय होता है । अनुक्त होने से कर्ता में तृतीया होती है । जैसे देवदत्तो भवति इस अर्थ में देवदत्तेन भूयते यह होता है । त्वं भवसि इति त्वया भूयते । असं भवामि इति मया भूयते ।

अकर्मक भी धातु उपसर्गवश सकर्मक होता है । अनुपूर्वक भूधातु अनुभवार्थक होने से सकर्मक हुआ । अत एव उससे कर्म में प्रत्यय होता है कर्म उक्त होने से उसमें प्रथमा कर्त्ता अनुक्त होने से उसमें तृतीया होती है । युष्मद् कर्म रहने पर मध्यमपुरुष, अस्मद् कर्म रहने पर उत्तमपुरुष, इनसे भिन्न कर्म रहने पर प्रथमपुरुष होता है । कर्म के एकवचन रहने पर एकवचन 'द्विवचन रहने पर द्विवचन' बहुवचन रहने पर बहुवचन क्रिया होती है । जैसे—चैत्रः आनन्दमनुभवति इति चैत्रेण आनन्दः अनुभूयते । चैत्रः आनन्दौ अनुभवति इति चैत्रेण आनन्दौ अनुभूयेते । चैत्रः आनन्दान् अनुभवति इति चैत्रेण आनन्दाः अनुभूयन्ते । चैत्रस्त्वामनुभवति इति चैत्रेण त्वमनुभूयसे । चैत्रो युवामनुभवति इति चैत्रेण युवामनुभूयेथे । चैत्रो युष्माननुभवति इति चैत्रेण यूयमनुभूयध्वे । चैत्रो मामनुभवति इति चैत्रेण अहमनुभूये । चैत्रः आवामनुभवति इति चैत्रेण आवामनुभूयावहे । चैत्रोऽस्माननुभवति इति चैत्रेण वयमनुभूयामहे इति । इसी प्रकार अन्य लकार में भी विचारना चाहिये । अकर्मक भी धातु णिच्प्रत्ययान्त होने पर सकर्मक होता है । उससे कर्म में प्रत्यय होता है । कर्म के अनुसार ही क्रिया होती है । जैसे—देवदत्तो भवति यज्ञदत्तः प्रेरयति यज्ञदत्तो देवदत्तं भावयति इति यज्ञदत्तेन देवदत्तो भाव्यते । यज्ञदत्तो देवदत्तौ भावयति

७५३. **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ६।४।६२** ॥ उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्वात्स्यादिषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च । चिण्वद्भावपक्षेऽयमिट् । चिण्वद्भावाद् वृद्धिः । भाविता, भविता । भाविष्यते, भविष्यते । भूयतास् । अभूयत । भाविषीष्ट, भविषीष्ट ।

७५४. **चिण् भावकर्मणोः ३।१।६६** ॥ च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि, अभाविष्यत । अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्, अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे । चिण्वदिट् ।

---

**भाविता** । भूधातोर्भावे लुटि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लुटस्तप्रत्यये तासि डादेशे टिलोपे 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वद्भावे इटि च चिण्वद्भावाद् वृद्धौ आवादेशे भावितेति । चिण्वदभावे इटि गुणे भवितेति च सिद्धम् ।

**अभावि** । भूधातोर्भावे लुङि आत्मनेपदे तप्रत्ययेऽटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि वृद्धौ आवादेशे 'चिणो लुक्' इति तस्य लुकि तत्सिद्धिः ।

**भाव्यते** । भूधातोर्णिचि वृद्धयावादेशयोः भावि इत्यस्य धातुत्वात्कर्मणि लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'णेरनिटि' इति णिलोपे तत्सिद्धिः ।

**भावयाञ्चक्रे** । भावि इत्यस्माल्लिटि आमि णिलोपं बाधित्वा 'अयामन्ता-

---

इति यज्ञदत्तेन देवदत्तौ भाव्येते । यज्ञदत्तो देवदत्तान्भावयति इति यज्ञदत्तेन देवदत्ता भाव्यन्ते । यज्ञदत्तस्त्वां भावयति इति यज्ञदत्तेन त्वं भाव्यसे । यज्ञदत्तो युवां भावयति इति यज्ञदत्तेन युवां भाव्येथे । यज्ञदत्तो युष्मान् भावयति इति यज्ञदत्तेन यूयं भाव्यध्वे । यज्ञदत्तो मां भावयति इति यज्ञदत्तेन अहं भाव्ये । यज्ञप्रत्तः आवाम्भावयति इति यज्ञदत्तेनावाम्भाव्यावहे । यज्ञदत्तोऽस्मान् भावयति इति यज्ञदत्तेन वयं भाव्यामहे ।

७५३. उपदेश में जो अच् तदन्त जो हन्, ग्रह, दृश धातु उनसे चिण प्रत्यय की तरह अङ्ग कार्य हो विकल्प से स्य, सिच्, सीयुट् भाव कर्म प्रतीत होने पर और स्य, सिच सीयुट्, तास परे रहते इट् का आगम भी होता है ।

७५४. भाव कर्म वाचक त शब्द परे रहते च्लि के स्थान में चिण आदेश होता है ।

आभीयत्वेनासिद्धत्वाण्णिलोपः। भाविता, भावयिता। भाविष्यते, भावयिष्यते। अभाव्यत। भाव्यते। भाविषीष्ट, भावयिषीष्ट। अभावि। अभाविषाताम्, अभावयिषाताम्। बुभूष्यते। बुभूषाञ्चक्रे। बुभूषिता। बुभूषिष्यते। बोभूय्यते, बोभूयते। अकृत्सार्वधातुकयोर्दीर्घः। स्तूयते विष्णुः। स्ताविता, स्तोता। स्ताविष्यते, स्तोष्यते। अस्तावि। अस्ताविषाताम्, अस्तोषाताम्। ऋ गतौ। गुणोर्तीति गुणः। अर्यते। स्मृ स्मरणे। स्मर्यते। सस्मरे। उपदेशग्रहणाच्चिण्वदिट्। आरिता, अर्ता। स्मारिता, स्मर्ता। अनिदितामिति नलोपः। स्रस्यते। इदितस्तु नन्द्यते। संप्रसारणम्। इज्यते।

---

ल्वाय्येत्विष्णुषु' इति णेरयादेशे लिटो लुकि लिट्परकृञोऽनुप्रयोगे लिटस्तस्य एशि द्वित्वेऽभ्यासकार्येऽनुस्वारे परसवर्णे यणि तत्सिद्धिः।

**भाविता**। भावि इत्यस्माल्लुटस्तप्रत्यये तासि 'स्यसिच्' इत्यादिना चिण्वद्भावे इटि च कृते तस्याभीयत्वेनासिद्धत्वाण्णिलोपे डादेशे टिलोपे भावितेति। चिण्वद्भावाभावपक्षे 'आर्धधातुकस्येड्वलादेः' इतीटि गुणेऽयादेशे भावयितेति च सिद्धम्।

**बुभूष्यते**। भूधातोः सनि द्वित्वे ह्रस्वत्वे जश्त्वे षत्वे धातुत्वाल्लटस्तप्रत्यये टेरेत्वे यकि अल्लोपे तत्सिद्धिः।

**बोभूय्यते**। भूधातोर्यङि द्वित्वे जश्त्वे 'गुणो यङ्लुकोः' इत्यभ्यासगुणे बोभूय इत्यस्य धातुत्वाल्लडादौ 'सार्वधातुके यक्' इति यकि 'अतो लोपः' इत्यल्लोपे तत्सिद्धिः।

**स्तूयते**। ष्टु इत्यत्र षस्य सत्वे ष्टुत्वनिवृत्तौ स्तु इत्यस्माल्लटस्तप्रत्यये यकि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे तत्सिद्धिः।

**स्ताविता**। स्तु इत्यस्माल्लुटस्तप्रत्यये तासि 'स्यसिच्' इति चिण्वद्भावे इटि चिण्वद्भावाद् वृद्धौ डादेशे टिलोपे स्तावितेति। चिण्वदभावपक्षे गुणे स्तोतेति।

**अर्यते**। ऋधातोर्लटस्तप्रत्यये एत्वे यकि 'गुणोर्त्तिसंयोगाद्योः' इति गुणे रपरे तत्सिद्धिः।

**सस्मरे**। स्मृधातोर्लिटस्तस्यैशि द्वित्वे 'उरत्' इत्यत्वे रपरे 'शर्पूर्वाः खयः' इत्यभ्यासमकारस्य शेषे गुणे रपरे तत्सिद्धिः।

**आरिता**। ऋधातोर्लुटस्तप्रत्यये तासि 'स्यसिच्' इति चिण्वदिटि चिण्वद्भावाद् वृद्धौ रपरे आरितेति। चिण्वदिडभावपक्षे गुणे अर्तेति।

**स्रस्यते**। स्रंस्धातोर्लटस्तप्रत्यये एत्वे यकि 'अनिदिताम्' इति नलोपे तत्सिद्धिः।

**नन्द्यते**। नदो लटस्तप्रत्यये एत्वे यकि 'इदितो नुम् धातोः' इति नुम्।

**इज्यते**। यजो लटस्ते एत्वे यकि 'वचिस्वपियजादीनां किति' इति सम्प्रसारणम्।

७५५. **तनोतेर्यकि**, ६।४।४४ ॥ आकारोन्तादेशो वा स्यात् । तायते, तन्यते ।

७५६. **तपोऽनुतापे च** ३।१।६५ ॥ तपश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्वम् । दीयते । धीयते । ददे ।

७५७. **आतो युक् चिण्कृतोः** ७।३।३३ ॥ आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च । दायिता दाता । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम् । भज्यते ।

७५८. **भञ्जेश्च चिणि** ६।४।३३ ॥ नलोपो वा स्यात् । अभाजि, अभञ्जि । लभ्यते ।

---

**तायते** । तन्धातोर्लटस्तप्रत्यये एत्वे यकि 'तनोतेर्यकि' इत्यात्वे दीर्घे तायते इति पक्षे तन्यते इति ।

**अन्वतप्त** । अनुपूर्वात्तपो लुङस्तप्रत्ययेऽटि यणि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि प्राप्ते 'तपोऽनुतापे च' इति तन्निषेधे च्लेः सिचि 'झलो झलि' इति सलोपः ।

**दीयते** । दाधातोर्लटस्तप्रत्यये एत्वे यकि 'घुमास्थागापाजहातिसां हलि' इतीत्वम् ।

**दायिता** । दाधातोर्लुटस्तप्रत्यये तासि 'स्यसिच्' इति चिण्वदिटि 'आतो युक् चिण्कृतोः' इति युकि डादेशे टिलोपे दायितेति । चिण्वदिटोऽभावपक्षे दातेति ।

**अदायि** । दाधातोर्लुङस्तप्रत्ययेऽटि च्लेश्चिणि 'आतो युक् चिण्कृतोः' इति युकि तलोपः ।

**अभाजि** । भञ्जधातोर्लुङस्तप्रत्ययेऽटि च्लेश्चिणि 'चिणो लुक्' इति तस्य लुकि 'भञ्जेश्च चिणि' इति पाक्षिकनलोपे उपधावृद्धौ अभाजि इति । नलोपाभावे अभञ्जीति ।

---

७५५. तन धातु को यक प्रत्यय परे रहते आकार अन्तादेश होता है विकल्प से ।

७५६. तप धातु से परे च्लि को चिण् नहीं होता कर्म कर्ता में अनुताप गम्यमान होने पर ।

७५७. आदन्त धातु से युक् का आगम होता है चिण्, ञित्, णित्, कृत् परे रहते ।

७५८. भञ्ज धातु के नकार का लोप होता है विकल्प से चिण परे रहते हैं ।

७५९. **विभाषा चिण्णमुलोः** ७।१।६९ ॥ लभेर्नुमागमो वा स्यात् । अलम्भि, अलाभि ।

इति भावकर्मप्रक्रिया ॥ ८ ॥



## अथ कर्मकर्तृप्रक्रिया ।

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ।

७६०. **कर्मवत्कर्मणा तुल्यक्रियः** ३।१।८७ ॥ कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । पच्यते फलम् ।

---

अलम्भि । लभो लुङस्तप्रत्ययेऽटि च्लेश्चिणि तलुकि 'विभाषा चिण्णमुलोः' इति नुमि अनुस्वारे परसवर्णे च अलम्भीति । नुमोऽभावे उपधावृद्धौ अलाभीति ।

इति भावकर्मप्रक्रिया ॥



**पच्यते फलम्** । देवदत्तः फलम्पचतीत्यत्र देवदत्तस्य कर्तृत्वेनाविवक्षायां फलरूपस्य कर्मण एव कर्तृत्वेन विवक्षायां पच्धातोरकर्मकत्वाकर्त्तरि लटि लटा कर्त्तुरुक्तत्वात् प्रथमायाम् 'कर्मवत्कर्मणा तुल्यक्रियः' इति फलस्य कर्त्तुः कर्मवद्भावात् 'भावकर्मणोः' इति आत्मनेपदे लटस्तप्रत्यये एत्वे 'सार्वधातुके यक्' इति यकि तत्सिद्धिः ।

---

७५९. लभ धातु को नुमागम होता है विकल्प से चिण् और णमुल् परे रहते हैं ।

७६०. कर्मस्थ क्रिया के तुल्य क्रिया वाला कर्त्ता कर्मवत् होता है ।

जब कर्म को ही कर्तृत्वेन विवक्षा की जाय तब सकर्मक भी धातु अकर्मक हो जाते हैं । उनसे भाव और कर्ता में लकार होता है । भाव में लकार होने पर अनुक्त होने से कर्ता में तृतीया, कर्ता में लकार होने पर उक्त होने से कर्ता में प्रथमा होती है ।

कर्मस्था क्रिया के तुल्य है क्रिया जिसकी ऐसा कर्ता कर्मवत् होता है । इससे यगादि होते है । जहाँ पर कर्म में क्रियाकृत विलक्षणता दीख पड़े वहां कर्मस्था क्रिया होती है । जैसे पके चावल ।

भिद्यते काष्ठम् । अपाचि । अभेदि । भावे । भिद्यते काष्ठेन ।

इति कर्मकर्तृप्रक्रिया ॥ ९ ॥



## अथ लकारार्थप्रक्रिया ।

७६१. **अभिज्ञावचने लृट् ३।२।११२ ॥** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् । लङोऽपवादः । वस निवासे । स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे, चेतयसे इत्यादिप्रयोगेऽपि ।

७६२. **न यदि ३।२।११३ ॥** यद्योगे उक्तं न । अभिजानासि कृष्ण यद्वने अभुञ्ज्महि ।

७६३. **लट् स्मे ३।२।११८ ॥** लिटोऽपवादः । यजतिस्म युधिष्ठिरः ।

७६४. **वर्तमानसामीप्ये वर्तमानवद्वा ३।३। १३१ ॥** वर्तमाने ये प्रत्यया

---

**भिद्यते काष्ठेन ।** काष्ठरूपस्य कर्मणः कर्तृत्वविवक्षया भावे लट आत्मनेपदे तप्रत्यये टेरेत्वे यकि काष्ठस्य कर्तुरनुक्तत्वात्तत्र तृतीया ।

इति कर्मकर्तृप्रक्रिया ॥



**स्मरसीति ।** स्मरसीत्युपपदाद् वस्धातोर्भूतानद्यतने लङि प्राप्ते तं बाधित्वा 'अभिज्ञावचने लृट्' इति लृटि तत्स्थाने मस्प्रत्यये स्ये 'सः स्यार्धधातुके' इति सस्य तकारे 'अतो दीर्घो यञि' इति दीर्घे रुत्वे विसर्गे तत्सिद्धिः ।

**अभीति ।** अभिजानासीत्युपपदाद् भुज्धातोः 'अभिज्ञावचने लृट्' इति लृटि प्राप्ते तस्य 'न यदि' इति निषेधाल्लुङादयः ।

**यजतिस्म ।** स्मोपपदाद् यज्धातोर्लिटं बाधित्वा 'लट् स्मे' इति लट् ।

---

७६१. स्मृति बोधक शब्द उपपद रहते भूत अनद्यतन अर्थ में धातु से लृट लकार होता है ।

७६२ यदि शब्द् के योग में स्मृति बोधि उपपद रहते भूत अनद्यतन अर्थ में धातु से लृट नहीं होता ।

७६३. भूत अनद्यतन परोक्ष अर्थ में वर्तमान धातु से लट् लकार आता है स्म के योग में ।

७६४. वर्तमान काल की क्रिया के बोध के लिए जो प्रत्यय कहे गये हैं वे वर्तमान सामीप्य में भूत तथा भविष्यत लकार में भी विकल्प से होते हैं ।

उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः। कदा आगतोऽसि। अयमागच्छामि, अयमागमं वा। कदा गमिष्यसि। एष गच्छामि, गमिष्यामि वा।

७६५. **हेतुहेतुमतोर्लिङ्** ३।३।१५६॥ वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नस्यति चेत्सुखं यास्यति। ( भविष्यत्येवेष्यते )। नेह। हन्तीति पलायते। विधिनिमन्त्रणेति लिङ्। विधिः—प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम्। यजेत। निमन्त्रणं—नियोगकरणम्, अवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। इह भुञ्जीत। आमन्त्रणं—कामचाराऽनुज्ञा। इहासीत। अधीष्टं—सत्कारपूर्वको व्यापारः। पुत्रमध्यापयेद्भवान्। संप्रश्नः संप्रधारणम्। किं भो वेदमधीयीय उत तर्कम्। प्रार्थनं-याच्ञा। भो भोजनं लभेय। एवं लोट्। इति लकारार्थप्रक्रिया॥ १०॥

इति तिङन्तं समाप्तम्॥



---

**अयमिति**। कदा आगतोऽसि इति प्रश्ने अयमागच्छामीत्युत्तरम्। अत्र गम्धातोर्भूते लुङि प्राप्ते वर्तमानसामीप्यात्तं बाधित्वा 'वर्त्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानवद्भावात् लटि ततोमिबादयः। लटोऽभावपक्षे लुङि अयम् आगममिति।

**एषेति**। कदा गमिष्यसीति प्रश्ने एष गच्छामीत्युत्तरम्। अत्र गम्धातोः भविष्यति लृटि प्राप्ते तं बाधित्वा वर्तमानसामीप्यात् 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानवद्भावाल्लटो मिबादयः।

**कृष्णमिति**। अत्र कृष्णप्रणामः सुखहेतुरिति हेतु हेतुमद्भावसत्त्वात् नम्धातोः याधातोश्च लृटं बाधित्वा 'हेतुहेतुमतोर्लिङ्' इति लिङि तिबादयः।

इति लकारार्थप्रक्रिया॥



---

७६५. हेतु ( कारण ) और हेतुमान ( फल ) अर्थ में भविष्यत काल में धातु से लिङ् लकार होता है विकल्प से। पक्ष में यथा प्राप्त प्रत्यय होते हैं।

## अथ कृदन्तकृत्यप्रक्रिया

७६६. **धातोः** ३।१।९१ ॥ आतृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः। कृदतिङिति कृत्संज्ञा।

७६७. **वासरूपोऽस्त्रियाम्** ३।१।९४ ॥ अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकरोक्तं विना।

७६८. **कृत्याः** ३।१।९५ ॥ ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः।

७६९. **कर्तरि कृत्** ३।४।६७ ॥ कृत्प्रत्ययः कर्तरि स्यात्। इति प्राप्ते।

७७०. **तयोरेव कृत्यक्तखलर्थाः** ३।४।७० ॥ एते भावकर्मणोरेव स्युः।

७७१. **तव्यत्तव्यानीयरः** ३।१।९६ ॥ धातोरेते प्रत्ययाः स्युः। एधितव्यम्, एधनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चय-

---

**एधितव्यम्**। एध्धातोः 'कर्तरि कृत्' इतिसूत्रं बाधित्वा 'तयोरेव कृत्यक्तखलर्थाः' इतिनियमाद्भावे 'तव्यत्तव्यानीयरः' इति तव्यत्प्रत्यये इटि प्रातिपदिककार्यम्। अत्र कर्त्तुरनुक्तत्वात्तृतीया।

**चेतव्यः**। त्वया धर्मश्चीयताम् इति विग्रहे चिधातोः कर्मणि 'तव्यत्तव्यानीयरः' इति तव्यप्रत्यये प्रातिपदिककार्यम्। अत्र धर्मरूपकर्मण उक्तत्वात्तत्र प्रथमा त्वमितिकर्त्तुरनुक्तत्वात्तत्र तृतीया।

---

७६६. इस सूत्र से लेकर तृतीय अध्याय की समाप्ति तक जो प्रत्यय कहे गये हैं वे धातु से परे हों।

७६७. इस धातोः सूत्र के अधिकार में असरूप अपवाद प्रत्यय उत्सर्गशास्त्र के बाधक होते हैं बिकल्प से।

७६८. णवुल् तृचौ इस सूत्र के पहले जो प्रत्यय कहे गये हैं उनकी कृत्य संज्ञा होती है।

७६९. कृत् प्रत्यय कर्ता अर्थ में होते हैं।

७७०. कृत्यक्त और खलर्थ प्रत्यय भाव कर्म में ही होते हैं।

७७१. तव्यत्, तव्य और अनीयर प्रत्यय धातु से होते हैं।

नीयो वा धर्मस्त्वया । (वा०) केलिमर उपसंख्यानम् । पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या इत्यर्थः । कर्मणि प्रत्ययः ।

७७२ **कृत्यल्युटो बहुलम्** ३।३।९८ ॥ क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति । १ । स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ।

७७३ **अचो यत्** ३।१।९७ ॥ अजन्ताद्धातोर्यत् स्यात् । चेयम् ।

७७४ **ईद्यति** ६।४।६५ ॥ यति परे आत ईत्स्यात् । देयम् । ग्लेयम् ।

७७५ **पोरदुपधात्** ३।१।९८ ॥ पवर्गान्ताददुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् ।

---

**भिदेलिमाः** । भिद्धातोः 'केलिमर उपसंख्यानम्' इति कर्मणि केलिमरप्रत्ययेऽनुबन्धलोपे प्रातिपदिककार्यम् ।

**स्नानीयम्** । स्नात्यनेनेतिविग्रहे स्नाधातोः 'कृत्यल्युटो बहुलम्' इति करणे अनीयर्प्रत्यये प्रातिपदिककार्यम् ।

**दानीयः** । दीयतेऽस्मै इतिविग्रहे दाधातोः 'कृत्यल्युटो बहुलम्' इति सम्प्रदाने अनीयर्प्रत्यये प्रातिपदिककार्ये तत्सिद्धिः ।

**चेयम्** । चेतुं योग्यमिति विग्रहे चिधातोः 'अचो यत्' इति यत् प्रत्यये 'सार्वधातुकार्ध' इति गुणे प्रातिपदिककार्यम् ।

**देयम्** । दाधातोः 'अचो यत्' इति यत्प्रत्यये 'ईद्यति' इति आकारस्य ईकारे सार्वधातुकगुणे प्रातिपदिककार्यम् ।

**शप्यम्** । शप्धातोः 'ऋहलोर्ण्यत्' इति ण्यतं बाधित्वा 'पोरदुपधात्' इतियत्प्रत्यये प्रातिपदिकत्वात्स्वाद्युत्पत्तिः ।

---

( वा ) केलिमर् प्रत्यय भी होता है ।

७७२. कृत्य और ल्युट् प्रत्यय भाव कर्म से अतिरिक्त कारकों में भी बहुधा होते हैं । बहुल शब्द का अर्थ है कि कहीं प्रवृत्ति हो, कहीं न हो, कहीं विकल्प से हो और कहीं दूसरे हो प्रत्यय हो जाँय । आचार्य पाणिनि ने विधि शास्त्रों के विधान को ध्यान में रखकर बहुलं का चार भेद माना है ।

७७३. अजन्त धातु से यत् प्रत्यय होता है ।

७७४. यत् प्रत्यय परे रहते दीर्घाकार के स्थान में ईत होता है ।

७७५. यदि उपधा में ह्रस्व अकार हो तो पवर्गान्त धातु से यत् प्रत्यय होता है ।

७७६. **एतिस्तुशास्वृदृजुषः क्यप् ३।१।१०९** ॥ एभ्यः क्यप् स्यात् ।

७७७. **ह्रस्वस्य पिति कृति तुक्** ६।१।७१ ॥ इत्यः । स्तुत्यः । शासु अनुशिष्टौ ।

७७८. **शास इदङ्हलोः** ६।४।३४ ॥ शास उपधाया इत्स्यादङि हलादौ क्ङिति । शिष्यः । वृत्यः । आदृत्यः । जुष्यः ।

७७९. **मृजेर्विभाषा** ३।१।११३ ॥ मृजेः क्यब्वा । मृज्यः ।

७८०. **ऋहलोर्ण्यत्** ३।१।१२४ ॥ ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । कार्यम् । हार्यम् । धार्यम् ।

७८१ **चजोः कु घिण्ण्यतोः** ७।३।५२ ॥ चजोः कुत्वं स्यात् घिति ण्यति च परे ।

७८२ **मृजेर्वृद्धिः** ७।२।११४ ॥ मृजेरिको वृद्धिः सार्वधातुकार्धधातुकयोः । मार्ग्यः ।

---

**इत्यः** । इण्धातोः 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यप्प्रत्ययेऽनुबन्धलोपे 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमे कित्त्वाद् गुणाभावे प्रातिपदिककार्यम् ।

**शिष्यः** । शास्धातोः 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यप्यनुबन्धलोपे 'शास इदङ् हलोः' इत्युपधाया इत्त्वे 'शासिवसिघसीनां च' इति षत्वे प्रातिपदिककार्यम् ।

**मृज्यः** । मृज्धातोः 'मृजेर्विभाषा' इति क्यपि प्रातिपदककार्यम् ।

**कार्यम्** । कृधातोः 'ऋहलोर्ण्यत्' इति ण्यति वृद्धौ रपरे प्रातिपदिककार्यम् ।

**मार्ग्यः** । मृज्धातोः क्यपोऽभावपक्षे 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययेऽनुबन्धलोपे

---

७७६. इण, स्तु, शास, वृ, दृ और जुष धातु से क्यप् प्रत्यय होता है ।

७७७. यदि कृत प्रत्यय का पकार इत्संज्ञक हो तो उसके ह्रस्व अकार को तुक् आगम होता है ।

७७८. अङ् और हलादि कित् ङित् परे रहते शास धातु की उपधा के स्थान में ह्रस्व इकार आदेश होता है ।

७७९. मृज धातु से क्यप् प्रत्यय होता है विकल्प से ।

७८० ऋवर्णान्त और हलन्त धातु से ण्यत् प्रत्यय होता है ।

७८१. च ज को कुत्व होता है घित और ण्यत प्रत्यय परे रहते ।

७८२. सार्वधातुक और आर्धधातुक परे रहते मृज के इक् को वृद्धि होती है ।

७८३. **भोज्यं भक्ष्ये ७।३।६९ ॥** भोग्यमन्यत् ।

इति कृदन्ते कृत्यप्रक्रिया ॥



## अथ पूर्वकृदन्तम् ।

७८४. **ण्वुल्तृचौ ७।१।१३३॥** धातोरेतौ स्तः कर्तरि कृदिति कर्त्रर्थे ।

७८५. **युवोरनाकौ ७।१।१ ॥** यु वु एतयोरनाकौ स्तः । कारकः । कर्त्ता ।

७८६. **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३।१।१३४ ॥** नन्द्यादेर्ल्युः,

---

'चजोः कु घिण्यतोः' इति जकारस्य कुत्वेन गकारे 'मृजेर्वृद्धिः' इति वृद्धौ रपरे प्रातिपदिककार्ये तत्सिद्धिः ।

**भोग्यम्** । भुज्धातोर्ण्यति लघूपधगुणे 'भोज्यं भक्ष्ये' इति भक्ष्येऽर्थे निपातनात्कुत्वाभावे भोज्यमिति भक्ष्यभिन्नेऽर्थे 'चजोः' इति कुत्वे भोग्यमिति ।

इति कृत्यप्रक्रिया ।



**कारकः** । करोतीतिविग्रहे कृधातोः 'ण्वुल्तृचौ' इति कर्तरि अर्थे ण्वुल्प्रत्ययेऽनुबन्धलोपे 'युवोरनाकौ' इति वु इत्यस्य अक इत्यादेशे 'अचो ञ्णिति' इति वृद्धौ रपरे प्रातिपदिककार्ये तत्सिद्धिः ।

**कर्ता** । कृधातोः 'ण्वुल्तृचौ' इति तृचि गुणे रपरे निष्पन्नकर्तृ इत्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सौ 'ऋदुशनस्' इत्यनङि 'अप्तृन्' इति दीर्घ सुलोपे नलोपः ।

---

७८३. भक्ष अर्थ में भुज धातु से ण्यत् प्रत्यय होता है और चजोः कु घिण्यतोः सूत्र से ज को कुत्व नहीं होता ।

७८४. धातु से कर्ता अर्थ में ण्वुल् तृच् प्रत्यय होते हैं ।

७८५. यु और वु के स्थान में क्रम से अन और अक आदेश होते हैं ।

७८६. नन्द ग्रह और पचादि से ल्यु, णिनि और अच प्रत्यय होते हैं क्रम से । तात्पर्य यह है कि नन्द्यादि से ल्यु, ग्रह्यादि से णिनि और पचादि से अच प्रत्यय होते हैं ।

ग्रह्यादेर्णिनिः, पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही । स्थायी । मन्त्री । पचः । पचादिराकृतिगणः ।

**७८७. इगुपधज्ञाप्रीकिरः कः ३।१।१३५ ॥** एभ्यः कः स्यात् । बुधः । कृशः । ज्ञः । प्रियः । किरः ।

**७८८. आतश्चोपसर्गे ३।१।१३६ ॥** उपसर्गे उपपदे आदन्ताद्धातोः कः स्यात् । प्रज्ञः । सुग्लः ।

---

**नन्दनः** । नन्दयतीतिविग्रहे 'नद्धातोरिदित्वान्नुमि णिच्प्रत्यये नन्दि इत्यस्मात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्युप्रत्ययेऽनुबन्धलोपे 'युवोरनाकौ' इति योरनादेशे णिलोपे प्रातिपदिककार्यम् ।

**जनार्दनः** । जनमर्दयतीति विग्रहे अर्दधातोर्णिचि 'नन्दिग्रहि' इति ल्युप्रत्यये योरनादेशे णिलोपे प्रातिपदिकत्वात्सौ 'कर्तृकर्मणोः कृति' इति जनमिति कर्मणि षष्ठीविभक्तौ षष्ठीसमासे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'एकदेशविकृतमनन्यवत्' इति प्रातिपदिकत्वात्स्वाद्युत्पत्तिः ।

**लवणः** । लुनातीतिविग्रहे लूधातोः 'नन्दिग्रहि' इति ल्युप्रत्यये योरनादेशे निपातनात् णत्वे प्रातिपदिककार्यम् ।

**ग्राही** । ग्रह् धातोर्णिनिप्रत्ययेऽनुबन्धलोपे उपधावृद्धौ प्रातिपदिककार्यम् ।

**स्थायी** । ष्ठाइत्यत्र षस्य सत्वे स्था इत्यस्माण्णिनिप्रत्यये 'आतो युक् चिण्कृतोः' इति युकि प्रातिपदिकत्वात्स्वादिः ।

**मन्त्री** । मत्रधातोरिदित्वान्नुमि णिचि णिनिप्रत्यये णिलोपे प्रातिपदिककार्यम् ।

**पचः** । पचतीति विग्रहे पच्धातोः 'नन्दिग्रहि' इत्यचि प्रातिपदिकत्वम् ।

**प्रियः** । प्रीणातीतिविग्रहे प्रीधातोः 'आतोऽनुपसर्गे कः' इति कप्रत्यये इयङि सुः ।

**किरः** । किरतीतिविग्रहे कॄधातोः के 'ॠत इद्धातोः' इतीत्वे रपरत्वम् ।

**प्रज्ञः** । प्रपूर्वात् ज्ञाधातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे स्वादिः ।

**सुग्लः** । सुपूर्वाद् ग्लैधातोः के 'आदेच उपदेशेऽशिति' इत्यात्वे आलोपः ।

---

७८७. इक है उपधा में जिनके ऐसे धातु और ज्ञा प्री किर धातु से क प्रत्यय होता है ।

७८८. उपसर्ग उपपद रहते आदन्त धातु से क प्रत्यय होता है ।

**७८९. गेहे कः ३।१।१३४ ॥** गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् ।

**७९०. कर्मण्यण् ३।२।१ ॥** कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । कुम्भं करोतीति कुम्भकारः ।

**७९१. आतोऽनुपसर्गे कः ३।२।२। ॥** आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । आतो लोप इटि च । गोदः । धनदः । कम्बलदः। अनुपसर्गे किम्–गोसन्दायः । (ग.) मूलविभुजादिभ्यः कः । मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोयम् । महीध्रः । कुध्रः ।

**७९.२ चरेष्टः ॥ ३।२।१६ ॥** अधिकरणे उपपदे । कुरुचरः ।

---

**गृहम्** । गृह्णाति धान्यादिकमिति विग्रहे ग्रह धातोः के 'ग्रहिज्या' इति सम्प्रसारणम् ।

**कुम्भकारः** । कुम्भं करोतीतिविग्रहे 'तत्रोपपदं सप्तमीस्थम्' इति कुम्भशब्दस्योपपदसंज्ञा तथा च कुम्भमित्युपपदात् कृधातोः 'कर्मण्यण्' इत्यणि वृद्धौ रपरे 'कर्तृकर्मणोः कृति' इति कुम्भमिति कर्मणि षष्ठ्यां 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया कारशब्दात्सुबुत्पत्तेः पूर्वमेव कुम्भ अस् कार इत्यलौकिके विग्रहे 'उपपदमतिङ्' इति समासत्वात्प्रातिपदिकत्वेन सुपो लुकि एकदेश विकृतस्यानन्यत्वात्प्रातिपदिकत्वेन सौ तत्सिद्धिः।

**गोदः** । गां ददातीतिविग्रहे गामित्युपपदात् दाधातोः 'आतोऽनुपसर्गे कः' इति कप्रत्यये आलोपे कर्मणि षष्ठी ततः पूर्ववत्समासः ।

**गोसन्दायः** । गामित्युपपदात्सम्पूर्वाद् दाधातोः 'कर्मण्यण्' इत्यणि 'आतो युक् चिण्कृतोः' इति युकि कर्मणि षष्ठी ततः पूर्ववत्समासः । अनुपसर्गग्रहणाभावेऽत्रापि कप्रत्यये गोसन्दः इति स्यादतस्तदावश्यकम् ।

**महीध्रः** । महीं धरतीति विग्रहे महोमित्युपपदाद् धृधातोः के कर्मणि षष्ठी ततः समासादि ।

**कुरुचरः** । कुरुषु चरतीति विग्रहे 'चरेष्टः' इति टप्रत्यये उपपदसमासे प्रातिपदिककार्यम् ।

---

७८९. गेह अर्थ में कर्ता में ग्रह धातु से क प्रत्यय होता है ।

७९०. कर्म उपपद रहते धातु से अण् प्रत्यय होता है ।

७९१. रहित आदन्त उपसर्ग धातु से कर्म उपपद रहते क प्रत्यय होता है ।

(ग) मूल विभु जादि गण पठित धातुओं से क प्रत्यय होता है ।

७९२. अधिकरण उपपद रहते चर धातु से ट प्रत्यय होता है ।

**७९३. भिक्षासेनादायेषु च ३।२।१७ ॥** भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ।

**७९४. कृञो हेतुताच्छील्यानुलोम्येषु ३।२।२० ॥** एषु द्योत्येषु करोतेष्टः स्यात् ।

**७९५. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८।३।४६ ॥** - आदुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सादेशः करोत्यादिषु परेषु । यशस्करी विद्या । श्राद्धकरः । वचनकरः ।

**७९६. एजेः खश् ३।२।२८ ॥** ण्यन्तादेजेः खश् स्यात् ।

**७९७. अरुर्द्विषदजन्तस्य मुम् ६।३।६७ ॥** अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य । शित्त्वाच्छबादिः । जनमेजयतीति जनमेजयः ।

---

**भिक्षाचरः** । भिक्षां चरतीति विग्रहे 'भिक्षासेनादायेषु च' इति टप्रत्यये 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठ्याम् भिक्षा अस् कार इति विग्रहे 'उपपदमतिङ्' इतिसमासे प्रातिपदिककार्यम् ।

**यशस्करी विद्या** । विद्याया यशोहेतुत्वात् यशः करोतीतिविग्रहे कृधातोः 'कृञो हेतु' इति टप्रत्यये गुणे रपरे कर्मणि षष्ठ्यां यशस् अस् कर इति विग्रहे उपपदसमासे सुपो लुकि रुत्वे विसर्गे 'अतः कृकमि' इति सत्वे टित्त्वात्' टिड्ढाणञ्' इति ङीबादि ।

**जनमेजयः** । जनमेजयतीतिविग्रहे ण्यान्तादेज्धातोः 'एजेः खश्' इति खश्प्रत्ययेऽनुबन्धलोपे शित्त्वात् शपि गुणेऽयादेशे पररूपे कर्मषष्ठ्यां जन अस् एजय इति विग्रहे सुबुत्पत्तेः पूर्वमुपपदसमासे सुपो लुकि जन एजय इति स्थिते 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि स्वादयः ।

---

७९३. भिक्षा सेना, आदाय, शब्द पूर्व पद हो जिसके उस चर धातु से ट प्रत्यय होता है ।

७९४. हेतु ताच्छल्य आनुलोम्य अर्थो में कृ धातु से ट प्रत्यय होता है ।

७९५. अकार से उत्तर अनव्यय विसर्ग को समास में नित्य सादेश होता है कृ कम, कंस, कुम्भ, पात्र, कुशा, कर्णी परे रहते ।

७९६, ण्यन्त एज धातु से खश् प्रत्यय होता है ।

७९७ अरुष, द्विषत् और अजन्त धातुओं से मुम का आगम होता है खिदन्त परे रहते अव्यय को छोड़कर ।

**७९८. प्रियवशे वदः खच् ३।२।३८ ॥** प्रियंवदः । वशंवदः ।

**७९९. अन्येभ्योपि दृश्यन्ते ३।२।७५ ॥** मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ।

**८००. नेड्वशि कृति ७।२।८ ॥** वशादेः कृत इण् न स्यात् । शॄ हिंसायाम् । सुशर्मा । प्रातरित्वा ।

**८०१. विड्वनोरनुनासिकस्याऽऽत् ६।४।४१ ॥** अनुनासिकस्याऽऽत्स्यात् । विजायत इति विजावा । ओणृ अपनयने । अबावा । विच् । रुष रिष हिंसायाम् । रोट् । रेट् । सुगण् ।

**८०२. क्विप् च ३।२।७६ ॥** अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् ।

---

**प्रियंवदः ।** प्रियं वदतीतिविग्रहे वदधातोः 'प्रियवशे' इति खचि कर्मषष्ठ्यामुपपदसमासे सुपो लुकि मुम् ।

**सुशर्मा ।** सुष्ठु शृणातीतिविग्रहे सुपूर्वात् शॄधातोः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्प्रत्ययेऽनुबन्धलोपे गुणे रपरे प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपः ।

**प्रातरित्वा ।** प्रातः एतीतिविग्रहे इणः क्वनिपि 'ह्रस्वस्य पिति कृति तुक्' इति तुकि प्रातिपदिककार्यम् ।

**विजावा ।** विपूर्वाज्जनधातोर्वनिपि 'विड्वनोः' इत्यात्वे दीर्घे विजावन्शब्दात्सौ दीर्घे सुलोपे नलोपः ।

**अवावा ।** ओण्धातोर्वनिपि 'विड्वनोः' इति णस्यात्वे अवादेशे अवावन् शब्दात्सौ दीर्घे सुलोपे नलोपः ।

**रोट् ।** रुषधातोर्विच्यनुबन्धलोपे 'वेरपृक्तस्य' इति वलोपे लघूपधगुणे जश्त्वचर्त्वे ।

**सुगण् ।** सुष्ठु गणयतीतिविग्रहे सुपूर्वाद् गणेर्विचि णिलोपे विचो लोपः ।

**उखास्रत् ।** उखायाः स्रंसत इतिविग्रहे स्रंसधातोः क्विपि तल्लोपे 'अनिदिताम्'

---

७९८. प्रिय और वश उपपद रहते वद् धातु से खच् प्रत्यय होता है ।

७९९. मनिन्, क्वनिप्, वनिप और विच् प्रत्यय अन्य धातुओं से भी होते हैं ।

८००. वशादि कृत परे रहते इट् नहीं होता ।

८०१. विड् और वन के अनुनासिक को आकार आदेश होता है ।

८०२. क्विप् प्रत्यय भी धातुओं से देखा जाता है ।

८०३. **सुप्यजातौ णिनिस्ताच्छील्ये** ३।२।७८ ॥ अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी ।

८०४. **मनः** ३।२।८२ ॥ सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ।

८०५. **आत्ममाने खश्च** ३।२।८३ ॥ स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात् चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः । पण्डितमानी ।

८०६. **खित्यनव्ययस्य** ६।३।६३ ॥ खिदन्ते परे पूर्वपदस्य ह्रस्वः । ततो मुम् । कालिम्मन्या ।

८०७. **करणे यजः** ३।२।८५ ॥ करणे उपपदे भूतार्थे यजेर्णिनिः कर्तरि ।

---

इति नलोपे प्रातिपदिकत्वात्सौ पञ्चमीसमासत्वात्सुपो लुकि एकदेशविकृतस्यानन्यत्वात्सौ तस्य लोपे 'वसुस्रंसु' इति दत्वे चर्त्वम् ।

**उष्णभोजी** । उष्णं भुङ्क्ते तच्छील इति विग्रहे उष्णोपपदात् भुजधातोः 'सुप्यजातौ' इति णिनिप्रत्यये लघूपधगुणे कर्मणि षष्ठ्यामुपपदसामासे प्रातिपदिककार्यम् ।

**दर्शनीयमानी** । दर्शनीयं मन्यते इति विग्रहे दर्शनीयोपपदात् मनधातोः 'मनः' इति णिनिप्रत्यये कर्मणि षष्ठ्यामुपपदसमासः ।

**पण्डितम्मन्यः** । पण्डितमात्मानं मन्यते इति विग्रहे पण्डितोपपदान्मन्धातोः 'आत्ममाने खश्च' इति खशि शित्त्वात् शपं बाधित्वा 'दिवादिभ्यः श्यन्' इति श्यनि पररूपे कर्मषष्ठ्यामुपपदसमासे प्रातिपदिककार्ये पण्डितम्मन्य इति, णिनिप्रत्यये तु पण्डितमानीति ।

**कालिम्मन्या** । कालीमात्मानं मन्यत इति विग्रहे खशि श्यनि पररूपे उपपदसमासे 'स्त्रियाः पुंवद्भाषित' इति पुंवद्भावं बाधित्वा परत्वात् 'खित्यनव्ययस्य' इति ह्रस्वे 'अरुर्द्विषद्' इति मुमि टाबादि ।

---

८०३. अजाति अर्थ में सुवन्त धातु से णिनि प्रत्यय होता है ताच्छील्य अर्थ में ।

८०४. सुबन्त मन धातु से णिनि होता है ।

८०५. स्व कर्मक मनन अर्थ में वर्तमान अन्य धातु से खश् प्रत्यय होता है सुप् अथवा णिनि परे रहते ।

८०६. अनव्यय खिदन्त प्रत्यय परे रहते पूर्व पद को ह्रस्व होता है ।

८०७. करण उपपद रहते भूत अर्थ में यज धातु से णिनि होता कर्ता में ।

सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ।

८०८. **दृशेः क्वनिप्** ३।२।९४ ॥ कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ।

८०९. **राजनि युधि कृञः** ३।२।९५ ॥ क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ।

८१०. **सहे च** ३।२।९६ ॥ कर्मणीति निवृत्तम् । सह योधितवान् सहयुध्वा । सहकृत्वा ।

८११. **सप्तम्यां जनेर्डः** ३।२।९७ ॥

८१२. **तत्पुरुषे कृति बहुलम्** ६।३।१४ ॥ ङेरलुक् । सरसिजम्, सरोजम् ।

८१३. **उपसर्गे च संज्ञायाम्** ३।२।९९ ॥ प्रजा स्यात्संततौ जने ।

८१४. **क्तक्तवतू निष्ठा** १।१।२६ ॥ एतौ निष्ठासंज्ञौ स्तः ।

---

**सोमयाजी** । सोमेनेष्टवान् इति विग्रहे सोमोपपदाद् यजधातोर्णिनिप्रत्यये उपधावृद्धौ उपपदसमासः ।

**पारदृश्वा** । पारोपपदाद् दृश्धातोः क्वनिप्प्रत्यये कर्मषष्ठ्यामुपपदसमासः ।

**राजयुध्वा** । राजन्शब्दोपपदात् युधधातोः क्वनिपि कर्मषष्ठ्यामुपपदसमासः ।

**सरसिजम्** । सरसि जातमिति विग्रहे सप्तम्यन्तसरस्शब्दोपपदाज्जन्धातोः 'सप्तम्यां जनेर्डः' इति डप्रत्यये डित्त्वाट्टिलोपे उपपदसमासत्वात्सप्तम्या लुकि प्राप्ते 'तत्पुरुषे कृति बहुलम्' इति तन्निषेधे सरसिजमिति, लुकि तु रुत्वे उत्वे गुणे सरोजमिति ।

**प्रजा** । प्रपूर्वाज्जनः 'उपसर्गे च संज्ञायाम्' इति डप्रत्यये टिलोपे समासे टाप् ।

---

८०८. दृश धातु से क्वनिप् प्रत्यय होता है भूत अर्थ में ।

८०९. राजन् उपपद जुध, और कृञ् धातु से क्वविप प्रत्यय होता है ।

८१०. सह उपपद युध् और कृञ धातु से क्वनिप् प्रत्यय होता है ।

८११. सप्तम्यन्त पद परे रहते जन धातु से ड प्रत्यय होता है ।

८१२. तत्पुरुष समास मे कृति परे रहते बहुलम् ङि का लोप नहीं होता अर्थात् अलुक् होता है ।

८१३. संज्ञा अर्थ में उपसर्ग परे रहते भी कृति से ङि का अलुक् होता है ।

८१४. क्त, क्तवतु की निष्ठा संज्ञा होती है ।

८१५. **निष्ठा ३।२।१०२** ॥ भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ।

८१६. **रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२** ॥ रदाभ्यां परस्य निष्ठा तस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ हिंसायाम् । ॠत इत् । रपरः । णत्वम् । शीर्णः । भिन्न । छिन्नः ।

८१७. **संयोगादेरातो धातोर्यण्वतः ८।२।४३** ॥ निष्ठातस्य नः स्यात् । द्राणः । ग्लानः ।

८१८. **ल्वादिभ्यः ८।२।४४** ॥ एकविंशतेर्लूञादिभ्यः प्राग्वत् । लूनः । ज्या धातुः । ग्रहिज्येति संप्रसारणम् ।

---

**स्नातं मया** । अहमस्नासिषमिति विग्रहे स्नाधातोर्भावे 'निष्ठा' इति क्तप्रत्यये कृदन्तत्वात्प्रातिपदिककार्ये कर्तुरनुक्तत्वात्तृतीया ।

**स्तुतः** । त्वं विष्णुमस्तौषीरितिविग्रहे ष्टुधातोः षस्य सत्वे कर्मणि क्ते प्रातिपदिककार्यम् । अत्र कर्मण उक्तत्वात्तत्र प्रथमा । कर्त्तुरनुक्तत्वात्तत्र तृतीया ।

**विश्वमिति** । विष्णुर्विश्वमकार्षीदिति विग्रहे कृधातोः कर्तरि क्तवतुप्रत्ययेऽनुबन्धलोपे प्रातिपदिकत्वात् कृतवत् शब्दात्सौ 'उगिदचाम्' इति नुमि 'अत्वसन्तस्य' इति दीर्घे सुलोपे संयोगान्तलोपः । अत्र कर्त्तुरुक्तत्वात्तत्र प्रथमा । कर्मण अनुक्तत्वाद् द्वितीया ।

**शीर्णः** । शॄधातोः क्ते 'ॠत इद्धातोः' इतीत्वे रपरे 'हलि च' इति दीर्घे 'रदाभ्याम्' इति तस्य नत्वे णत्वम् ।

**भिन्नः** । भिदः क्ते 'रदाभ्याम्' इति तकारस्य दकारस्य च नकारे प्रातिपदिककार्यम् ।

**द्राणः** । द्राधातोः क्ते 'संयोगादेः' इति तस्य नत्वे णत्वे प्रातिपदिकत्त्वात्सुः ।

---

८१५. भूतार्थ वृत्ति धातु से निष्ठा ( क्त क्तवतु ) प्रत्यय होते हैं । अर्थात् भाव कर्म में क्त और कर्तरिकृत् सूत्र से बिहित कर्ता में क्तवतु प्रत्यय होते हैं ।

८१६. र और द से परे निष्ठा तकार के स्थान में न होता है और निष्ठा प्रत्यय की अपेक्षा पूर्व में स्थित धातु के दकार के स्थान में भी नकार होता हैं ।

८१७, यणवान और संयोगादि आदन्त धातु से परे निष्ठा तकार के स्थान में नकार होता है ।

८१८. इक्कीश लूञादि गण पठित धातुओं से परे निष्ठा तकार के स्थान में नकार होता है ।

८१९. **हलः ६।४।२ ॥** अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः । जीनः ।

८२०. **ओदितश्च ८।२।४५ ॥** भुजो भुग्नः । टुओश्वि उच्छूनः ।

८२१. **शुषः कः ८।२।५१ ॥** निष्ठातस्य कः । शुष्कः ।

८२२. **पचो वः ८।२।५२ ॥** पक्वः । क्षै क्षये ।

८२३. **क्षायो मः ८।२।५३ ॥** क्षामः ।

८२४. **निष्ठायां सेटि ६।४।५२ ॥** णेर्लोपः । भावितः । भावितवान् । दृह हिंसायाम् ।

८२५. **दृढः स्थूलबलयोः ७।२।२० ॥** स्थूले बलवति च निपात्यते ।

---

**जीनः** । ज्याधातोः क्ते 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे 'हलः' इति दीर्घे 'ल्वादिभ्यश्च' इति तस्य नत्वे सौ रुत्वे विसर्गः ।

**भुग्नः** । भुज्धातोः क्ते नत्वस्यासिद्धत्वात्पूर्वं 'चोः कुः' इति कुत्वे ततः 'ओदितश्च' इति तस्य नत्वे सौ रुत्वे विसर्गे तत्सिद्धिः ।

**उच्छूनः** । उत्पूर्वात् श्वधातोः क्ते 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे पूर्वरूपे 'श्वीदितो निष्ठायाम्' इतीण्निषेधे 'हलः' इति दीर्घे 'ओदितश्च' इति तकारस्य नकारे चुत्वे छत्वम् ।

**शुष्कः** । शुष्धातोः क्ते 'शुषः कः' इति तकारस्य ककारः ।

**पक्वः** । पचः क्ते 'चोः कुः' इति कुत्वे 'पचो वः' इति तस्य वत्वे सौ रुत्वे विसर्गः ।

**क्षामः** । क्षैधातोः क्ते 'आदेच' इत्यात्वे 'क्षायो मः' इति तस्य मत्वे सुः ।

**दृढः** । दृह्धातोः क्ते 'दृढः स्थूलबलयोः' इति निपातनात् क्तस्य इडभावे तकारस्य ढत्वे हकारस्य लोपे च कृते सौ रुत्वे विसर्गः ।

---

८१९, अङ्गावयव हल से परे जो सम्प्रसारण तदन्त को दीर्घ होता है ।

८२०. ओदित धातुओं से परे निष्ठातकार के स्थान में नकार होता है ।

८२१. शुष धातु से परे निष्ठा तकार के स्थान में ककार होता है ।

८२२. पच धातु से परे निष्ठा तकार के स्थान में व प्रत्यय होता है ।

८२३. ण्यन्त क्षि धातु से म प्रत्यय होता है ।

८२४. सेट धातु से परे निष्ठा में णि का लोप होता है ।

८२५. स्थूल और बलवान अर्थ में दृढः का निपातन करते हैं ।

८२६. **दधातेर्हिः ७।४।४२** ॥ तादौ किति । हितम् ।

८२७. **दो दद् घोः ७।४।४६** ॥ घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति । चर्त्वम् । दत्तः ।

८२८. **लिटः कानज्वा ३।२।१०६** ॥

८२९, **क्वसुश्च ३।२।१०७** ॥ लिटः कानच् क्वसुश्च वा स्तः । तङानावात्मनेपदम् । चक्राणः ।

८३०. **म्वोश्च ८।२।६५** ॥ मान्तस्य धातोर्नत्वं म्वोः परतः । जगन्वान् ।

८३१. **लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४** ॥ अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः । शबादिः । पचन्तं चैत्रं पश्य ।

८३२. **आने मुक् ७।२।८२** ॥ अदन्ताङ्गस्य मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकर-

---

**चक्राणः** । कृधातोर्लिटि 'लिटः कानज्वा' इति लिटः कानच्यनुबन्धलोपे द्वित्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे यणि चुत्वे णत्वे सुः ।

**जगन्वान्** । गमो लिटि 'क्वसुश्च' इति लिटः क्वसौ द्वित्वे हलादिशेषे चुत्वे 'म्वोश्च' इति मस्य नत्वे प्रातिपदिकत्वात्सौ उगित्त्वान्नुमि 'सान्तमहतः' इति दीर्घे सुलोपे संयोगान्तलोपः ।

**पचन्तम्** । पचो लटि 'लटः शतृ' इति लटः शत्रादेशेऽनुबन्धलोपे शपि पररूपे प्रातिपदिकत्वादमि नुम् ।

**पचमानम्** । पचो लटः शानच्यनुबन्धलोपे शपि दीर्घे 'आने मुक्' इति मुगागमं प्रातिपदिकत्वादम् ।

---

८२६. धा धातु से तादि कित परे रहते हि आदेश होता है ।

८२७. घु संज्ञक दा धातु के स्थान में दथ आदेश होता है तादिकित परे रहते ।

८२८. लिट् परे रहते कानच प्रत्यय होता है विकल्प से ।

८२९. लिट् परे रहते क्वसु प्रत्यय होता है विकल्प से ।

८३०. मान्त धातु के नकार आदेश होता है म व परे रहते ।

८३१. अप्रथमान्त समानाधिकरण में लट् लकार में धातु से शतृ और शानच् प्रत्यय होते हैं विकल्प से ।

८३२. अदन्त अङ्ग से मुम् का आगम होता है आन् प्रत्यय परे रहते ।

ण्येऽपि क्वचित् । सन् द्विजः ।

८३३ **विदेः शतुर्वसुः ७।१।३६ ॥** वेत्तेः परस्य शतुर्वसुरादेशो वा । विदन् । विद्वान् ।

८३४. **तौ सत् ३।१।१२७ ॥** तौ शतृशानचौ सत्संज्ञौ स्तः ।

८३५ **ऌटः सद्वा ३।३।१४ ॥** व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः संबोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य ।

८३६. **आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३।२।१३२ ॥** क्विमपभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ।

८३७. **तृन् ३।२।१३५ ॥** कर्ता कटान् ।

८३८. **जल्पभिक्षकुट्टलुण्ठवृङः षाकन् ३।२।१५५ ॥**

८३९. **षः प्रत्ययस्य १।३।६ ॥** प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्ठाकः । वराकः, वराकी ।

---

**सन् द्विजः** । 'वर्तमाने लट्' इत्यतो लडित्यनुवर्तमाने 'लटः शतृ' इति सूत्रे पुनर्लड्ग्रहणात् प्रथमासामानाधिकरण्येऽपि क्वचित् शतृशानचोर्विधानात् अस्धातोर्लटः शतृप्रत्यये शपो लुकि 'श्नसोरल्लोपः' इत्यल्लोपे सौ नुमि सुलोपे संयोगान्तलोपः ।

**करिष्यन्तम्** । कृधातोर्ऌटः शत्रादेशे स्ये इटि गुणे रपरे षत्वे पररूपे प्रातिपदिकत्वादमि नुम् ।

**कर्ता कटान्** । कटान् करोति तच्छील इति विग्रहे कृधातोस्तृनि गुणे रपरे सुः । अत्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति कर्मणि षष्ठीनिषेधः ।

---

८३३. बिद् धातु से परे शतृ प्रत्यय के स्थान में वश आदेश होता है विकल्प से ।

८३४. शतृ और शानच सत् संज्ञक होते है ।

४३५. ऌट लकार में शत् प्रत्यय विकल्प से होते हैं । यह विकल्प व्यवस्थित है । इसलिए अ प्रथमा सामानाधिकरण्य में प्रत्ययोत्तर पद में, सम्बोधन में, लक्षण और हेतु में नित्य शत् आदेश होता है ।

८३६. यहाँ से लेकर क्विप प्रत्यय तक कहे जाने वाले प्रत्यय तच्छील तद्धर्म तत् साधुकारी अर्थो में कर्ता में होते हैं ।

८३७. तृन् प्रत्यय कर्ता अर्थ में होता है ।

८३८. जल्प, भिक्ष, कुट्ट, लुण्ठ् वृङ् धातु से षाकन् प्रत्यय होता है ।

८३९. प्रत्यय के आदि षकार की इत् संज्ञा होती हूँ ।

८४०. **सनाशंसभिक्ष उः ३।२।१६८ ॥** चिकीर्षुः । आशंसुः । भिक्षुः ।

८४१. **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३।२।१७७ ॥** विभ्राट् । भाः ।

८४२. **राल्लोपः ६।४।२१ ॥** रेफाच्छ्वोर्लोपःक्वौ झलादौ क्ङिति । धूः । विद्युत् । उर्क् । पूः । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः जूः । ग्रावस्तुत् । ( क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च ) । वक्तीति वाक् ।

८४३. **च्छ्वोः शूडनुनासिके च ६।४।१९ ॥** सतुक्कस्य च्छस्य वस्य च क्रमात् श् ऊठ् इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । पृच्छतीति

---

**चिकीर्षुः** । कृधातोः सनि निष्पन्नचिकीर्षधातोः 'सनाशंसः' इति उप्रत्यये सुः ।

**विभ्राट्** । विपूर्वाद्भ्राजः 'भ्राजभास' इति क्विपि तल्लोपे सुलोपे ,व्रश्च' इति षत्वे जशत्वचर्त्वे ।

**धूः** । धुर्वीधातोः क्विपो लोपे 'राल्लोपः' इति वलोपे सुलोपे 'र्वोरुपधाया' इति दीर्घः ।

**ऊर्क्** । ऊर्जः क्विपो लोपे सुलोपे 'रात्सस्य' इति नियमात्संयोगान्तलोपाभावे चुत्वम् ।

**पूः** । पॄधातोः क्विपो लोपे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरे सुलोपे 'र्वोः' इति दीर्घः ।

**जूः** । जुधातोः क्विपो लोपे 'भ्राजभास' इत्यत्र 'अन्येभ्योऽपि दृश्यते' इत्यतो दृशिग्रहणस्यापकर्षाद्दीर्घः ।

**वाक्** । वच्धातोः 'क्विब्वचि' इतिवार्तिकेन क्विपि उपधादीर्घे 'वचिस्वपि' इतिसूत्रप्राप्तसम्प्रसारणाभावे सुलोपे कुत्वम् ।

---

८४०. सनन्त, आशस और भिक्ष धातु से उ प्रत्यय होता है ।

८४१. भ्राज, भास, घुर्वि, द्युत, उर्ज, पॄजु और ग्राव पूर्वक स्तु धातु से क्विष् प्रत्यय होता हैं ।

८४२. रेफ से परे छ व का लोप होता है क्वि झलादि कित ङित परे रहते ( बा० ) क्विप, वच प्रच्छ और आयतस्तु, कट, प्रु, जु और श्रि, इन छ धातुओं से क्विप प्रत्यय होता है और दीर्घ तथा असम्प्रसारण भी होता है ।

८४३. तुक् सहित छ और व के स्थान मैं क्रम से श ऊठ आदेश होते हैं अनुनासिक क्विवन्त झलादि कित् ङित परे रहते ।

प्राट् । आयतं स्तौतीति आयतस्तुः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ।

८४४. **दाम्नीशसयुयुजस्तुदसिसिचमिहपतदशनहः करणे** ३।२।१८२ ॥ दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम् ।

८४५. **तितुत्रतथसिसुसवकसेषु च** ७।२।९ ॥ एषां दशानां कृत्प्रत्ययानामिण् न । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम । सेत्रम् । सेक्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । नद्घ्री ।

८४६. **अर्तिलूधूसूखनसहचर इत्रः** ३।२।१८४ ॥ अरित्रम् । लवित्रम् । धुवित्रम् । सवित्रम् । खनित्रम् । चरित्रम् ।

८४७. **पुवः संज्ञायाम्** ३।२।१८५ ॥ पवित्रम् ।

इति पूर्वकृदन्तम् ॥



---

**प्राट्** । प्रच्छधातोः 'क्विव्वचि' इति क्विपि दीर्घे 'ग्रहिज्या' इतिप्राप्तसम्प्रसारणाभावे 'च्छ्वोः' इति च्छस्य शादेशे क्विपो लोपे सुलोपे 'व्रश्च' इति षत्वे जश्त्वचर्त्वे ।

**आयतस्तूः** । अत्र स्तुधातोः 'क्विव्वचि' इति क्विपि दीर्घे कर्मषष्ठ्या समासः ।

इति पूर्वकृदन्तम् ।



---

८४४. दाप, णीञ और शस, यु, युज, ष्टुञ्, तुद, षिञ् षिच्, मिह, पत, दंश, नह इन धातुओं से ष्ट्रन् प्रत्यय होता है करण अर्थ में ।

८४५. ति, तु, त्र, त, थ और सि, सु, सर, क, स इन दश धातुओं से कृत् प्रत्ययान्त को इट् नहीं होता ।

८४६. लूञ्, धु, षु, खन्, षह, चर धातुओं से इत्र प्रत्यय होता है ।

८४७. संज्ञा अर्थ में पु धातु से इत्र प्रत्यय होता है ।

## अथोणादयः ।

कृवापाजिमिस्वदिसाध्वशुभ्य उण् ॥ १ ॥ करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् । स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ।

८४८. **उणादयो बहुलम्** ३।३।१ ॥ एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

॥ इत्युणादयः ॥



## अथोत्तरकृदन्तम् ।

८४९. **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** ३।३।१० ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं

---

**कारुः** । कृधातोः 'कृवापा' इत्युणि 'अचो ञ्णिति' इति वृद्धौ रपरत्वे सुः ।

**वायुः** । वाधातोरुणि 'आतो युक् चिण्कृतोः' इति युक ।

**पायुः** । पाधातोरुणि युक् ।

**जायुः** । जिधातोरुणि वृद्धौ आयादेशः ।

**मायुः** । मिधातोरुणि बृद्धि बाधित्वा 'मीनातिमिनोति' इत्यात्वे 'आतो युक् चिण्कृतोः' इति युक् ।

**स्वादुः** । स्वद्धातोरुणि 'अत उपधायाः' इति वृद्धिः ।

**आशु** । अश्धातोरुणि उपधावृद्धिः । आशु इति विलम्बाभावमात्रपरत्वे क्लीबम् ।

इत्युणादयः ॥



---

८४८. उणादि गण पठित प्रत्यय वर्तमान काल में संज्ञा में विकल्प से होते हैं ।

**संज्ञासु**—संज्ञा में धातुओं का स्वरूप उससे परे प्रत्यय कार्य के आधार पर अनुबन्ध यह उणादि में अनुशासन है ।

८४९. क्रियार्थक क्रिया में उपपद रहते भविष्यत अर्थ में धातु से तुमुन् और ण्वुल् प्रत्यय होते हैं ।

द्रष्टुं याति । कृष्णं दर्शको याति ।

८५०. **कालसमयवेलासु तुमुन् ३।३।१६७ ॥** कालार्थेषुपपदेषु तुमुन् । कालः समयो वेला वा भोक्तुम् ।

८५१. **भावे ३।३४८ ॥** सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ।

८५२. **अकर्तरि च कारके संज्ञायाम् ३।३।१९ ॥** कर्तृभिन्ने कारके घञ् स्यात् ।

८५३. **घञि च भावकरणयोः ६।४।२७ ॥** रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम्—रज्यत्यस्मिन्निति रङ्गः ।

८५४. **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३।३।४१ ॥** एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशोकरणम् । निकायः । कायः । गोमयनिकायः ।

८५५. **एरच् ३।३।५६ ॥** इवर्णान्तादच । चयः । जयः ।

---

**द्रष्टुम्** । दृश्धातोः 'तुमुन्ण्वुलौ' इति तुमुन्प्रत्ययेऽनुबन्धलोपे 'सृजिदृशोर्झल्यमकिति' इति अमि यणि 'व्रश्च' इति षत्वे ष्टुत्वे मान्तत्वात् 'कृन्मेजन्तः' इत्यव्ययत्वात्सुपो लुक् ।

**दर्शकः** । दृशो ण्वुलि वोरकि गुणे रपरे प्रातिपदिकत्वात्सुः ।

**पाकः** । पच्धातोः 'भावे' इति घञि 'चजोः' इति कुत्वे उपधावृद्धौ सुः ।

**रागः** । रञ्जधातोः 'अकर्त्तरि' इति घञि 'चजोः' इति कुत्वे 'घञि च' इति नलोपे उपधावृद्धिः ।

**निकायः** । निपूर्वात् चिधातोः 'निवास' इति घञि चस्य कत्वे वृद्धौ आयादेशे सुः ।

**चयः** । चिधातोः 'एरच्' इत्यचि गुणेऽयादेशः ।

---

८५०. काल समय वेला शब्दों के उपपद रहते धातु से तुमुन् प्रत्यय होता है ।

८५१. सिद्धावस्थापन्न धात्वर्थ वाच्य होने पर धातु से घञ् प्रत्यय होता है ।

८५२. कर्तासे भिन्न कारकके उपपद रहते धातुसे घञ् प्रत्यय होता है संज्ञामें ।

८५३. भाव अथवा करण में घञ् परे रहते रञ्ज धातु के नकार का लोप होता है ।

८५४. निवास चिति शरीर उपसमाधान अर्थ में चि धातु से घञ् प्रत्यय होता है और आदि अक्षर को ककार आदेश होता है ।

८५५. इवर्णान्त धातु से अच् प्रत्यय होता है ।

**८५६. ॠदोरप् ३।३।५७ ॥** ॠवर्णान्तादुवर्णान्ताच्चाऽप् । करः । गरः । यवः । लवः । स्तवः । पवः । (वा) घञर्थे कविधानम् । प्रस्थः । विघ्नः ।

**८५७. ड्वितः क्त्रिः ३।३।८८ ॥**

**८५८. क्त्रेर्मम्नित्यम् ४।४।२० ॥** क्त्रिप्रत्ययान्तात् मप् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् उप्त्रिमम् ।

**८५९. ट्वितोऽथुच् ३।३।८९ ॥** टुवेपृ कम्पने वेपथुः ।

**८६०. यजयाचयतविच्छप्रच्छरक्षो नङ् ३।३।९० ॥** यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ।

**८६१. स्वपो नन् ३।९३।१ ॥** स्वप्नः ।

**८६२. उपसर्गे घोः किः ३।३।९२ ॥** प्रधिः । उपधिः ।

---

**करः** । कॄधातोरपि गुणे रपरत्वम् । गॄ निगरणे, गॄ शब्दे इति वा । यु मिश्रणामिश्रणयोः । लूञ् छेदने । पूञ् षवने । प्रतिष्ठन्तेऽस्मिन् धान्यानि जना वेति विग्रहः ।

**प्रस्थः** । प्रपूर्वात्स्थाधातो 'घञर्थे कविधानम्' इति के 'आतो लोप इटि च' इत्यालोपः ।

**विघ्नः** । विपूर्वाद् हनः घञर्थे के 'गमहन' इत्युपधालोपे 'हो हन्तेः' इति कुत्वम् ।

**उप्त्रिमम्** । वपः क्त्रौ मपि 'वचिस्वपि' इति सम्प्रसारणे पररूपादि ।

**यज्ञः** । यजो नङि चुत्वम् ।

**विश्नः** । विच्छो नङि 'च्छ्वोः' इति शादेशः ।

**प्रधिः** । प्रपूर्वाद् धाधातोः किप्रत्यये 'आतो लोप इटि च' इत्यालोपः ।

---

८५६. ॠवर्णान्त और उवर्णान्त धातुओं से अप् प्रत्यय होता है ।

( वा० ) घञ् के अर्थ में क प्रत्यय भी होता है ।

८५७. ड्वित धातु से क्त्रि प्रत्यय होता है ।

८५८. क्त्रि प्रत्ययान्त से निर्वृत्त अर्थ में मप् प्रत्यय होता है ।

८५९. ट्वित धातु से अथुच् प्रत्यय होता है ।

८६०. यज् याच्, यत्, विच्छ, प्रच्छ, रक्ष धातु से नङ् प्रत्यय होता है ।

८६१, स्वप् धातु से नन् प्रत्यय होता है ।

८६२. उपसर्ग परे रहते घु संज्ञक धातु से कि प्रत्यय होता है ।

८६३. **स्त्रियां क्तिन् ४।३।९४ ॥** स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः । कृतिः । स्तुतिः । ( ग ) ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः । तेन नत्वम् । कीर्णिः । लूनिः । धूनिः । पूनिः । ( ग ) संपदादिभ्यः क्विप् । संपत् । विपत् । आपत् । ( वा ) क्तिन्नपीष्यते । संपत्तिः । विपत्तिः । आपत्तिः ।

८६४. **ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३।३।९७ ॥** एते निपात्यन्ते ।

८६५. **ज्वरत्वरस्रिव्यविमवामुपधायाश्च ६।४।२० ॥** एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति । अतः क्विप् । जूः । तूः । स्रूः । ऊः । मूः ।

---

**कीर्णिः** । कॄधातोः 'स्त्रियां क्तिन्' इति क्तिनि 'ॠत इद्धातोः' इतीत्वे रपरे 'हलि च' इतिदीर्घे 'ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इति निष्ठावद्भावात् तकारस्य नत्वे णत्वे सुः ।

**ऊतीति** । अवधातोः 'ऊतियूति' इति क्तिनि तस्य निपातनादुदात्तत्वे 'ज्वरत्वर' इति अकारवकारयोरूठि ऊतिरिति ।

**यूतिः-जूतिः** । युधातोः जुधातोश्च क्तिनि निपातनाद्दीर्घः ।

**सातिः** । षोऽन्तकर्मणि इत्यस्मात् क्तिनि 'आदेच' इत्यात्वे 'द्यतिस्यतिमास्थामित्तिकिति' इतीत्वे प्राप्ते तदभावन्निपातनात्सातिरिति । अथवा सन्धातोः क्तिनि 'जनसन' इत्यात्वे सातिरिति । अत्र क्तिन उदात्तत्वं निपात्यते ।

**हेतिः** । हन्धातोः क्तिनि नकारस्य निपातनादित्त्वे 'आद्गुणः' इति गुणे हेतिरिति । यद्वा हिधातोः क्तिनि निपातनाद् गुणे हेतिरिति । **कीर्तिः** ण्यन्तकतधातोः 'ण्यासश्रन्थो युच्' इति युचं बाधित्वा निपातनात् क्तिनि इत्वे रपरे दीर्घे 'झरो झरि सवर्णे' इति तलोपे कीर्तिरिति ।

**जूः** । ज्वरधातोः क्विपि 'ज्वरत्वर' इति अकारवकारयोरूठ् ।

---

८६३. स्त्रीलिङ्ग के बोधन की इच्छा में भाव में क्तिन् प्रत्यय होता है ।

( ग ) ॠल्वादिगण पठित धातुओं से विहित क्तिन् प्रत्यय निष्ठावत् होता है ।

( ग ) सम्पदादिगण पठित धातुओं से क्विप् प्रत्यय होता है ।

( वा० ) क्तिन् प्रत्यय भी कहा गया है ।

८६४. ऊति, यूति, जूति, साति हेति और कीर्ति शब्दों का निपातन किया जाता है ।

८६५. ज्वर, त्वर, स्रिवु अव मव इन के उपधा और वकारों को ऊठ होता है अनुनासिक क्विप् प्रत्ययान्त झलादि कित् ङित् परे रहते ।

८६६. **इच्छा** ३।३।१०१ ॥ इषेर्निपातोयम् ।

८६७. **अ प्रत्ययात्** ३।३।१०२ ॥ प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ।

८६८. **गुरोश्च हलः** ३।३।१०३ ॥ गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात् । ईहा ।

८६९. **ण्यासश्रन्थो युच्** १०७ ॥ अकारस्यापवादः । कारणा । हारणा ।

८७०. **नपुंसके भावे क्तः** ३।३।११४ ॥

८७१. **ल्युट् च** ३।३।११५ ॥ हसितम् हसनम् ।

८७२. **पुंसि संज्ञायां घः प्रायेण** ३।३।११८ ॥

८७३. **छादेर्घेऽद्व्युपसर्गस्य** ६।४।९६ ॥ द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे परे । दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ।

८७४. **अवे तॄस्त्रोर्घञ्** ३।३।१२० ॥ अवतारः कूपादेः । अवस्तारो जवनिका ।

८७५. **हलश्च** ३।३।१२१ ॥ हलन्ताद् घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ।

---

**इच्छा** । इष्-धातोर्निपातनाद्भावे शप्रत्यये यकोऽभावे च छे तुकि चुत्वे टाप् ।

**चिकीर्षा** । कृधातोः सनि द्वित्वादिके चिकीर्ष इत्यस्य धातुत्वात् अप्रत्यये टाप् ।

**कारणा** । कृधातोर्णिचि कारि इत्यस्माद् युचि योरनादेशे णिलोपे णत्वे टाप् ।

**आकरः** । आङ्पूर्वात्कृञो घे गुणे रपरत्वम् ।

**अपामार्गः** । अपपूर्वान्मृज्धातोः 'हलश्च' इति घञि 'चजोः' इति कुत्वे 'मृजेर्वृद्धिः' इति वृद्धौ 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः ।

---

८६६. इष धातु से इच्छा शब्द का निपातन किया जाता है ।

८६७. प्रत्ययान्त धातुओं से स्त्री लिङ्ग में अकार प्रत्यय होता है ।

८६८. गुरुमान और हलन्त धातु से स्त्री में अकार प्रत्यय होता है ।

८६९. णि, आस, श्रन्थ धातुओं से युच् प्रत्यय होता है ।

८७०. नपुंसक शब्दों से भाव में क्त प्रत्यय होता है ।

८७१. नपुंसक शब्द से भाव में ल्युट् प्रत्यय भी होता है ।

८७२. पुलिङ्ग शब्दों से संज्ञा में प्रायः घ प्रत्यय होता है ।

८७३. द्वि प्रभृति उपसर्ग हीन छादी को ह्रस्व होता है घ प्रत्यय परे रहते ।

८७४. अव पूर्वक तॄ और स्तॄ धातुओं से घञ् प्रत्यय होता है ।

८७५. हलन्त धातुओं से घञ् प्रत्यय होता है ।

८७६. **ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्** ३।३।१२६ ॥ करणाधिकरणयोरिति निवृत्तम्। एषु दुःखसुखार्थेषूपपदेषु खल् तयोरेवेति भावे कर्मणि च। कृच्छ्रे-दुष्करः कटो भवता। अकृच्छ्रे-ईषत्करः। सुकरः।

८७७. **आतो युच्** ३।३।१२८ ॥ खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः।

८७८. **अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ३।४।१८ ॥ प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात्। प्राचां ग्रहणं पूजार्थम्। अमैवाव्ययेनेति नियमान्नोपपदसमासः। दो दद्धोः। अलं दत्त्वा। घुमास्थेतीत्वम्। पीत्वा खलु। अलंखल्वोः किम्—मा कार्षीत्। प्रतिषेधयोः किम्—अलंकारः।

८७९. **समानकर्तृकयोः पूर्वकाले** ३।४।२१ ॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। भुक्त्वा पीत्वा व्रजति।

८८०. **न क्त्वा सेट्** १।२।१८ ॥ सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम्—कृत्वा।

८८१. **रलोव्युपधाद्धलादेः संश्च** १।२।२६ ॥ इवर्णोवर्णोपधाद्धलादेः

---

**दुष्करः**। दुस्पूर्वात्कृञः कर्मणि खलि गुणे रपरे सस्य रुत्वे विसर्गे 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम्।

---

८७६. ईषत्, दुष और सु उपपद रहते कृच्छ्र और अकृच्छ्र ( दुःख, सुख ) अर्थों में खल् प्रत्यय होता है। भाव और कर्म में। करणाधिकरणयोः का अधिकार समाप्त हो गया।

८७८. आकारान्त धातु से युच् प्रत्यय होता है। प्रतिषेधार्थक अलं और खलु शब्दों के उपपद रहते क्त्वा होता है प्राचीनों के मत में। यहाँ प्राचां ग्रहण सम्मानार्थक है।

८७९. समान कर्तृक अनेक धात्वर्थों के मध्य में पूर्वकाल हैं जिसका उस धात्वर्थ में विद्यमान धातु से क्त्वा प्रत्यय होता है।

८८०. सेट्, क्त्वा, कित् नहीं होता है।

८८१. इवर्ण उवर्ण उपधा में है जिसके उस हलादि अथवा रलन्त से परे सेट् क्त्वा और सन् विकल्प से कित् होते हैं।

रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा । व्युपधात्किम्–वर्तित्वा । रलः किम्–सेवित्वा । हलादेः किम्–एषित्वा । सेट् किम्–भुक्त्वा ।

८८२. **उदितो वा ७।२।५६ ॥** उदितः परस्य क्त्व इड् वा । शमित्वा, शान्त्वा देवित्वा, द्यूत्वा । दधातेर्हिः । हित्वा ।

८८३. **जहातेश्च क्त्वि ७।४।४३ ॥** हित्वा । हाङस्तु–हात्वा ।

८८४. **समासेऽनञ्पूर्वे क्त्वो ल्यप् ७।१।३७ ॥** अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम्–अकृत्वा ।

८८५. **आभीक्ष्ण्ये णमुल् च ३।४।२२ ॥** आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ।

---

**द्युतित्वा ।** द्युतधातोः क्त्वाप्रत्यये इटि 'न क्त्वा सेट्' इति कित्त्वनिषेधं बाधित्वा 'रलो व्युपधात्' इति पाक्षिककित्त्वाद् गुणनिषेधे द्युतित्वेति । पक्षे द्योतित्वेति ।

**वर्तित्वा ।** वृतधातोः क्त्वाप्रत्यये इटि 'न क्त्वा सेट्' इति क्त्वाप्रत्ययस्य कित्त्वनिषेधाद् गुणेः । 'रलो व्युपधात्' इति सूत्रे व्युपधाद् ग्रहणाभावे ऋकारोपधादपि वृतधातोः परस्य क्त्व प्रत्ययस्य पाक्षिककित्त्वविधानेन वृतित्वा वर्त्तित्वा इत्यनिष्टं रूपद्वयं स्यादतस्तदावश्यकम् । कृते तु तस्मिन् इवर्णोवर्णोपधत्वाभावान्न कित्त्वम् ।

**शमित्वा ।** शम्धातोः क्त्वाप्रत्यये 'उदितो वा' इति पाक्षिके इटि शमित्वेति । इडभावपक्षे 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यात्वेऽनुस्वारे परसवर्णे शान्त्वेति ।

**देवित्वा ।** दिवः क्त्वाप्रत्यये इटि गुणे देवित्वेति । इडभावे 'च्छ्वोः' इत्यूठि यणि द्यूत्वेति ।

**हित्वा ।** ओहाक् त्यागे इत्यस्मात् क्त्वाप्रत्यये 'जहातेश्च क्त्वि' इति हि इत्यादेशः ।

---

८८२. उदित से परे क्त्वा को इट् होता है विकल्प से ।

८८३. जहाति के अङ्ग को हि आदेश होता है क्त्वा प्रत्यय परे रहते ।

८८४. अव्यय है पूर्व पद जिनका उस अनञ् समास में क्त्वा को ल्यप् आदेश होता है ।

८८५. पौनः पुन्य द्योत्य होने पर पूर्व विषय में णमुल् होता है और पक्ष में क्त्वा होता है ।

८८६. **नित्यवीप्सयोः ८।१।४ ॥** आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञकेषु च कृदन्तेषु च । स्मारं स्मारं नमति शिवम् । स्मृत्वा स्मृत्वा । पायम्पायम् । भोजम्भोजम् । श्रावं श्रावम् ।

८८७. **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३।४।२७ ॥** एषु कृञो णमुल् स्यात् । सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवङ्कारम् । कथङ्कारम् । इत्थङ्कारं भुंक्ते । सिद्धेति किम्– शिरोऽन्यथा कृत्वा भुंक्ते । इत्युत्तरकृदन्तम् ।

इति कृदन्तम् ॥



---

**पायम्पायम्** । पाधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुल्यनुबन्धलोपे 'आतो युक् चिण्कृतोः' इति युकि 'नित्यवीप्सयोः' इति द्वित्वे मान्तत्वादव्ययत्वेन सुपो लुक् ।

इत्युत्तरकृदन्तम् ॥



---

८८६. पौनः पुन्य और वीप्साद्योत्य होने पर पद को द्वित्व होता है । तिङन्तों अव्यय संज्ञकों और कृदन्तो में आभीक्ष्ण्य होता है ।

८८७. अन्यथा एवं, कथं, इत्थं शब्दों से परे कृञ् को णमुल् होता है । यदि कृञ् का अप्रयोगसिद्ध हो अर्थात् व्यर्थ होने से प्रयोग की योग्यता न हो ।

## अथ विभक्त्यर्थाः ।

८८८. **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** २।३।४६ ॥ नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे—उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे—तटः, तटी, तटम् । परिमाणमात्रे–द्रोणो व्रीहिः । वचनं–संख्या । एकः, द्वौ, बहवः ।

८८९. **सम्बोधने च** २।३।४६ ॥ प्रथमा स्यात् । हे राम ।

इति प्रथमा ।

८९०. **कर्तुरीप्सिततमं कर्म** १।३।४९ ॥ कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ।

८९१. **कर्मणि द्वितीया** २।३।२ ॥ अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मादौ प्रथमा–हरिः सेव्यते । लक्ष्म्या सेवितः ।

---

**प्रातिपदिकार्थेति** । प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्च प्रातिपदिकार्थलिङ्गपरिमाणवचनानि तान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं तस्मिन् । 'द्वन्द्वादौ द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायात् द्वन्द्वान्ते श्रूयमाणमात्रपदस्य प्रत्येकं सम्बन्धात्प्रातिपदिकार्थमात्रे इत्यार्थलाभः । जाति द्रव्य लिङ्ग सङ्ख्या कारक एतत्पञ्चकं प्रातिपदिकार्थ इति पक्षे लिङ्गग्रहणवैयर्थ्यादाह **नियतेति** । नियता उपस्थितिर्यस्य स नियतोपस्थितिकः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन भानं स तत्प्रातिपदिकार्थः इति तदर्थः ।

**हरिं भजति** । अत्र भजनक्रियया सम्बन्धुं देवदत्तादिकर्त्तुरत्यन्तेच्छाविषयीभूतस्य हरेः 'कर्तुरीप्सित' इति कर्मत्वात् 'कर्मणि द्वितीया' इति द्वितीया ।

**हरिः सेव्यते** । अत्र 'षेवृ सेवने' इत्यस्मात्कर्मणि तङो विधानात् तङा कर्मणो हरेरुक्तत्वात्तत्र प्रथमैव न तु द्वितीया ।

---

८८८. प्रातिपदिकार्थमात्र में, प्रातिपदिकार्थ की अपेक्षा लिङ्ग और तद्वृत्तिधर्ममात्र के आधिक्य में, परिमाणमात्र में, संख्यामात्र में प्रथमा होती है ।

८८९. सम्बोधन में प्रथमा विभक्ति होती है ।

८९०. कर्ता जिसकी क्रिया के साथ सम्बन्ध करने के लिये अत्यन्त इच्छा करे उसको कारक संज्ञा होते हुये कर्मसंज्ञा होती है ।

८९१. अनुक्त कर्म में द्वितीया होती है ।

८९२. **अकथितं च १।४।५१ ॥** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ।

दुह्याच्पच्दण्डरुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् । १ ।

गां दोग्धि पयः । बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ।

इति द्वितीया ।

८९३. **स्वतन्त्रः कर्ता १।४।५४ ॥** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ।

---

**गां दोग्धि पयः** । अत्र गोः अपादानत्वाविवक्षया कर्मत्वविवक्षायां कर्मसंज्ञा ततो द्वितीया ।

**बलिमिति** । अत्र बलेरपादानत्वाविवक्षायां कर्मत्वविवक्षायां कर्मसंज्ञा ।

**तण्डुलानिति** । अत्र तण्डुलानां करणत्वाविवक्षा ।

**गर्गानिति** । अत्र गर्गाणामपादानत्वाविवक्षा ।

**व्रजमिति** । अत्र व्रजस्याधिकरणत्वाविवक्षायां कर्मसंज्ञा ।

**माणवकं पन्थानं पृच्छति** । अत्र माणवकस्य करणत्वाविवक्षा द्वितीया ।

**वृक्षमिति** । अत्र वृक्षस्यापादानत्वाविवक्षा तेन द्वितीया ।

**माणवकं धर्ममिति** । अत्र माणवकस्य सम्प्रदानत्वाविवक्षा तेन कर्मत्वम् ।

**सुधामिति** । अत्र देवदत्तस्यापादानत्वाविवक्षा तेन कर्मत्वम् ।

**सुधामिति** । क्षीरनिधेरपादानत्वाविवक्षा ।

**देवदत्तमिति** । देवदत्तस्यापादानत्वाविवक्षा ।

**ग्राममिति** । ग्रामस्याधिकरणत्वाविवक्षा ।

---

८९२. अपादानादिविशेष ( अपादानत्वादि ) से अविवक्षित और कर्मत्वेन विवक्षित जो उसको कारकसंज्ञा होते हुये कर्मसंज्ञा होती है ।

८९३. क्रिया में स्वातन्त्र्येण विवक्षित अर्थ को कर्ता संज्ञा होती है ।

८९४. **साधकतमं करणम् १।४।४२ ॥** क्रियासिद्धौ प्रकृष्टोपकारकं करण-संज्ञं स्यात् ।

८९५. **कर्तृकरणयोस्तृतीया २।३।१८ ॥** अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ।

इति तृतीया ।

८९६. **कर्मणा यमभिप्रैतिससम्प्रदानम् १।४।३२ ॥** दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ।

८९७. **चतुर्थी सम्प्रदाने २।३।१३ ॥** विप्राय गां ददाति ।

८९८. **नमस्स्वस्तिस्वाहास्वधालंवषडयोगाच्च २।३।१६ ॥** एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ।

इति चतुर्थी ।

९९९. **ध्रुवमपायेऽपादानम् १।४।२४ ॥** अपायो विश्लेषस्तस्मिन्साध्ये यद् ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ।

---

**रामेणेति ।** रामः बाणेन वालिनमवधीत् इति विग्रहे हन्धातोः कर्मणि क्तप्रत्यये कर्मण उक्तत्वात्तत्र प्रथमा । हननक्रियायां रामस्य स्वातन्त्र्यविवक्षया कर्तृसंज्ञा । बाणस्य च हननक्रियायामत्यन्तोपकारकत्वात्करणसंज्ञा । ततश्च कर्तृकरण-योरनुक्तत्वात्तत्र तृतीया । स्वातन्त्र्यमिह प्राधान्यम् ।

**विप्रायेति ।** अत्र देवदत्तादिः कर्ता दानस्य कर्मणा गवा विप्रं सम्बन्धुमिच्छतीति विप्रस्य सम्प्रदानसंज्ञायां चतुर्थी ।

---

८९४. क्रिया की सिद्धि में प्रकृष्ट उपकारक को करण संज्ञा होती है ।

८९५. अनुक्त कर्ता और करण में तृतीया विभक्ति होती है । इति तृतीया ।

८९६. दान क्रिया के कर्म के साथ कर्ता जिसका सम्बन्ध करना चाहे वह कारक होते हुए सम्प्रदान संज्ञक होता है ।

८९७. सम्प्रदान में चतुर्थी होती है ।

८९८. नमः स्वति, स्वाहा, स्वधा अलं, वषट् शब्दों के योग में शब्दों से चतुर्थी विभक्ति होती है ।

८९९, विभाग साध्य करने में अवधिभूत जो वह कारक होते हुये अपादान-संज्ञक होता है ।

**९००. अपादाने पञ्चमी २।३।२८ ॥** ग्रामादायाति । धावतोऽश्वात्पततीत्यादि । इति पञ्चमी ।

**९०१. षष्ठी शेषे २।३।५० ॥** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मति । एधोदकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । इति षष्ठी ।

**९०२. आधारोऽधिकरणम् १।४।४५ ॥** कर्तृकर्मद्वारा तन्निष्ठाक्रियाया आधारः कारकमधिकरणं स्यात् ।

**९०३. सप्तम्यधिकरणे च २।३।३६ ॥** अधिकरणे सप्तमी स्यात् चकारादद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा । ( इति सप्तमी ) ॥

इति विभक्त्यर्थाः ॥

---

**ग्रामादायाति ।** देवदत्तो ग्रामादायातीत्यत्र देवदत्तविभागावधिर्ग्रामः इति तस्यापादानत्वात्पञ्चमी ।

**सतां गतम् ।** अत्र कर्मत्वाविवक्षायां शेषत्वविवक्षया षष्ठी ।

**सर्पिषो जानीते ।** अत्र करणत्वाविवक्षायां शेषत्वविक्षया षष्ठी ।

**मातुरिति ।** अत्र कर्मत्वाविवक्षा ।

**एधः ।** अत्र दकस्य कर्मत्वाविवक्षायां शेषत्वविवक्षया षष्टी ।

**भजे इति ।** अत्र चरणयोः कर्मत्वाविवक्षा ।

इच्छारूपकर्तृद्वारा अस्तिक्रियाया आधारो मोक्षः । इति षष्ठी ।

इति विभक्त्यर्थाः ॥

---

९००. अपादान में पञ्चमी विभक्ति होती है ।

९०१. कारक और प्रातिपदिकार्थ से० यतिरिक्त जो स्वस्वामिभावादि सम्बन्ध उन्हे शेष कहते है । उनमें षष्ठी विभक्ति होती है ।

९०२. कर्ता और कर्म के द्वारा कर्ता और कर्म में रहनेवाली क्रिया का जो आधार वह कारक होते हुये अधिकरणसंज्ञक होता है ।

९०३. अधिकरण में सप्तमी होती हैं और चकार के बल से दूर और अन्तिक अर्थो में भी सप्तमी विभक्ति होती है । उप-समीपे श्लेषः-संबंधः तत्कृतमौपश्लेषिकम् । कटे कुस्ते इत्याद्युदाहरणम् । सर्वावयव्याप्त्या आधारोऽभिव्यापकः । सर्वस्मिन्नात्माऽस्ति, तिलेषु तैलमित्याद्युदाहरणम् । एतदुभयभिन्नो वैषयिकः । मोक्षे इच्छास्तीत्युदाहरणम् ।

## अथ समासः ।

तत्रादौ केवलसमासः । समासः पञ्चधा । तत्र समसनं समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः । १ । प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः । २ । प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुस्तृतीयः । तत्पुरुषभेदः कर्मधारयः । कर्मधारयभेदो द्विगुः । ३ । प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः । ४ । प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः । ५ ।

९०४. **समर्थः पदविधिः २।१।१ ॥** पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ।

९०५. **प्राक्कडारात्समासः २।१।३ ॥** कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ।

९०६. **सह सुपा २।१।४ ॥** सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स च लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूत इति लौकिकः । पूर्व अम् भूतसु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चराडिति निर्देशात्पूर्वनिपातः । (वा) इवेन समासो विभक्त्यलोपश्च । वागथौ इव वागर्थाविव ।

इति केवलसमासः ॥ १ ॥



---

भूतपूर्वः । पूर्व अम् भूत सु इत्यलौकिकविग्रहे 'सह सुपा' इति समासे समासत्वात्प्रातिपदिकत्वेन 'सुपो धातुप्रातिपदिकयोः' इति सुपोर्लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति भूतशब्दस्य पूर्वशब्दस्य चोपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति द्वयोरुपसर्जनत्वात् कस्य पूर्वं प्रयोग इत्याशङ्कायां 'भूतपूर्वे चरट्' इति निर्देशाद् भूतशब्दस्यैव पूर्वप्रयोगे 'एकदेशविकृतमनन्यवत्' इति परिभाषया भूतपूर्व इत्यस्य प्रातिपकित्वात्ततः सौ रुत्वे विसर्गे तत्सिद्धिः ।

इति केवलसमासः ॥



---

९०४. पद सम्बन्धी जो विधि वह समर्थाश्रित होती है ।

९०५. कडाराः कर्मधारये तक समासः का अधिकार चलता है ।

९०६, सुबन्त का सुबन्त के साथ समास होता है विकल्प से ।

( वा० ) इव शब्द के साथ समास होता है और विभक्ति का लोप भी नहीं होता ।

## अथाव्ययीभावः ।

९०७. **अव्ययीभावः २।१।५** ॥ अधिकारोयं प्राक् तत्पुरुषात् ।

९०८. **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २।१।६** ॥ विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः । प्रायेणाविग्रहो नित्यसमासः, प्रायेणास्वपदविग्रहो वा । किभक्तौ हरि ङि अधि इति स्थिते ।

९०९. **प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३** ॥ समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ।

९१०. **उपसर्जनं पूर्वम् २।२।३०** ॥ समासे उपर्जनं प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययीभावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि ।

९११. **अव्ययीभावश्च २।४।१८** ॥ अयं नपुंसकं स्यात् ।

९१२. **नाव्ययीभावादतोऽम्त्वपञ्चम्याः २।४।८३** ॥ अदन्तादव्ययीभा-

---

**अधिहरि** । हरि ङि अधि इत्यलौकिकविग्रहे 'अव्ययं विभक्ति' इत्यादिना समासे 'प्रथमानिर्दिष्टं समास उपर्जनम्' इत्यधेरुपसर्जनत्वात् 'उपसर्जनं पर्वम्' इति पूर्वप्रयोगे शमासत्त्वात्प्रातिपदिकत्त्वेन सुपो लुकि एकदेशविकृतस्यानन्यत्दात्प्रातिपदिकत्वेन सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति सोर्लुकि तत्सिद्धिः ।

---

९०७. तत्पुरुष के पहिले अव्ययीभाव का अधिकार चलता है ।

९०८. विभक्ति, समीप, समृद्धि, व्यृद्धि अर्थाभाव अत्यय असम्प्रति शब्द प्रादुर्भाव पश्चात् यथा आनुपूर्व्य यौगपद्य सादृश्य सम्पत्ति साकल्यान्त वचन अर्थो में वर्तमान अव्यय का सुबन्त के साथ नित्य समास होता है उसे अव्ययी भाव कहते हैं ।

९०९. समास शास्त्र में प्रथमान्त पद से निर्दिष्ट उपसर्जन संज्ञक होता है ।

९१०. समास में उपसर्जन संज्ञक शब्द का पूर्व प्रयोग होता है ।

९११ अव्ययीभाव समास से बना शब्द नपुंसक होता है ।

९१२. अदन्त अव्ययीभाव से परे सुप् का लोप नहीं होता किन्तु पञ्चमी विभक्ति को छोड़कर सब विभक्तियों के स्थान में अम् आदेश होता है ।

वात्सुपो न लुक् तस्य पञ्चमीं विता अमादेशश्च स्यात् । गाः पातीति गोपास्तस्मिन्नित्यधिगोपम् ।

९१३ **तृतीयासप्तम्योर्बहुलम्** २।४।८४॥ अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अधिगोपम्, अधिगोपे वा । कृष्णस्य समीपम् उपकृष्णम् । मद्राणां समृद्धिः सुभद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थम् प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ।

---

**अधिगोपम्** । गोपाङि अधि इत्यलौकिकविग्रहे 'अव्ययं विभक्ति' इति समासे अधेरुपसजर्नत्वात्प्राक्प्रयोगे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'अव्ययोभावश्च' इति नपुंमकत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे सौ अव्ययत्वात्सोर्लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति तन्निषेधे सोरमादेशे च 'अमि पूर्वः' इ तिपूर्वरूपम् ।

**उपकृष्णम्** । कृष्णस्य समीपमितिलौकिकविग्रहः । कृष्ण ङस् उप इत्यलौकिकविग्रहे समासत्वात्प्रातिपतिकत्वेन सुपो लुकि उपेत्यस्योपसर्जनत्वात्प्राक्प्रयोगे टाविभक्तौ अव्ययत्वात्तस्यालुकि प्राप्ते 'नाव्ययीभावाद्' इति तन्निषेधे 'तृतीयासप्तम्योर्बहुलम्' इति टाइत्यस्य अमादेशे पूर्वरूपे उपकृष्णमिति । पक्षे इनादेशे गुणे उपकृष्णेनेति ।

**सुभद्रम्** । मद्र अम् सु इत्यलौकिकविग्रहे समासः । शेषं पूर्ववत् ।

**दुर्यवनम्** । यवन आम् दुर् इत्यलौकिकविग्रहः ।

**निर्मक्षिकम्** । अक्षिका आम् निर् इति विग्रहः ।

**अतिहिमम्** । हिम ङस् अति इति विग्रहः ।

**अतिनिद्रम्** । निद्रा सु अति इति विग्रहः ।

**इति हरि** । हरि ङस् इति इति विग्रहः ।

**अनुविष्णु** । विष्णु ङस् अनु इति विग्रहः ।

**अनुरूपम्** । रूप ङस् अनु इति विग्रहः ।

**प्रत्यर्थम्** । अर्थ अम् प्रति इति विग्रहः ।

**यथाशक्ति** । शक्ति अम् यथा इति विग्रहः ।

---

९१३. अदन्त अव्ययोभाव से परे तृतीया और सप्तमी विभक्तियों के स्थान में बहुल अम् आदेश होता है ।

९१४. **अव्ययीभावे चाकाले** ६।३।८१ ॥ सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत् सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ।

९१५. **नदीभिश्च** २।१।२० ॥ नदीभिः सह संख्या समस्यते । ( समाहारे चायमिष्यते ) । पञ्चगङ्गम् । द्वियमुनम् ।

९१६. **तद्धिताः** ४।१।७६ ॥ आपञ्चमसमाप्तेरधिकारोऽयम् ।

९१७. **अव्ययीभावे शरत्प्रभृतिभ्यः** ५।४।१०७ ॥ शरदादिभ्यष्टच् स्या-

---

**सहरि** । हरि ङस् सह विग्रहे समासे प्रातिपदिकत्वात्सुपो लुकि उपसर्जनत्वात्सहस्य पूर्वप्रयोगे 'अव्ययीभावे चाकाले' इति सहस्य सादेशे सोर्लुक् ।

**अनुज्येष्ठम्** । ज्येष्ठ ङस् अनु इति विग्रहः ।

**सचक्रम्** । चक्र टा सह इति विग्रहः ।

**ससखि** । सखि टा सह इति विग्रहः ।

**सक्षत्रम्** । क्षत्र आम् सह इति विग्रहः ।

**सतृणम्** । तृण अम् सह इति विग्रहः ।

**साग्नि** । अग्नि अम् सह इति विग्रहः ।

**पञ्चगङ्गम्** । पञ्चानां गङ्गानां समाहार इति लौकिकविग्रहः । पञ्चन आम् गङ्गा आम् इत्यलौकिकविग्रहे 'समाहारे चायमिष्यते' इति वार्तिकबलात् 'नदीभिश्च' इति समासे पञ्चन उपसर्जनत्वात्प्राक्प्रयोगे सुपोर्लुकि नलोपे 'एकविभक्ति चापूर्वनिपाते' गङ्गाइत्यस्योपसर्जनत्वाद् 'नाव्ययीभावाद्' इति तन्निषेधे सोरमादेशे च पूर्वरूपे तत्सिद्धिः ।

---

९१४. सह के स्थान में स आदेश होता है अव्ययीभाव समास में, काल वाचक शब्दों को छोड़कर ।

९१५. नदी वाचक शब्दों का संख्या वाचक शब्दों के साथ समास होता है । ( इ० ) यह समास समाहार में ही होता है ।

९१६. पञ्चमाध्याय के समाप्ति पर्यन्त तद्धिताः का अधिकार है ।

९१७. शरदादि गण पठित शब्द से टच् प्रत्यय होता है वह समास के अन्त में बैठता है अव्ययीभाव समास में ।

( वा० ) जरा के स्थान में जर आदेश होता है ।

टसमासान्तोऽव्ययीभावे। शरदः समीपमुपशरदम्। प्रतिविपाशम्। (जराया जरश्च)। उपजरसमित्यादि।

९१८. **अनश्च ५।४।१०८॥** अन्नन्तादव्ययीभावाट्टच् स्यात्।

९१९. **नस्तद्धिते ६।४।१४४॥** नान्तस्य भस्य टेर्लोपस्तद्धिते। उपराजम्। अध्यात्मम्।

९२०. **नपुंसकादन्यतरस्याम् ५।४।१०९॥** अन्नन्तं यत् क्लीबं तदन्ताद्व्ययीभावाट्टज्वा स्यात्। उपचर्मम्। उपचर्म।

९२१. **झयः ५।४।११२॥** झयन्तादव्ययीभावाट्टच् वा स्यात्। उपसमिधम्। उपसमित्।

इत्यव्ययीभावः॥ २॥



---

**उपशरदम्।** शरद् ङस् उपेति विग्रहे 'अव्ययम्' इत्यादिना समासे टचि प्रातिपदिकत्वेन सुपो लुकि उपेत्यस्योपसर्जनत्वात्प्राक्प्रयोगे सोर्लुको निषेधे सोरमादेशे पूर्वरूपम्।

**प्रतिविपाशम्।** विपाश् अम् प्रतीति विग्रहः।

**उपजरसम्।** जरा ङस् उपेतिविग्रहे 'अव्ययम्' इति समासे 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टचि सुब्लुकि उपेत्यस्य पूर्वनिपाते 'जराया जरश्च' इति जरसादेशे सोरमादेशः।

**उपराजम्।** राजन् ङस् उपेति विग्रहे 'अव्ययम्' इति समासे 'अनश्च' इति टचि सुब्लुकि भत्वात् 'नस्तद्धिते' इति टिलोपे सोर्लुको निषेधे सोरमादेशः।

**अध्यात्मम्।** आत्मन् ङि अधि इति विग्रहे समासे टचि सुब्लुकि सोरमादेशः।

**उपचर्मम्।** चर्मन् ङस् उपेतिविग्रहे समासे पाक्षिके टचि सुब्लुकि टिलोपे सौ 'नाव्यी' इति सोर्लुको निषेधे सोरमादेशे च उपचर्ममिति। टचोऽभावपक्षे 'अव्ययादाप्सुपः' इति सोर्लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे उपचर्मेति।

इत्यव्ययीभावः॥



---

९१८. अन्नन्त अव्ययीभाव से टच् प्रत्यय होता है।

९१९. नकारान्त भसंज्ञक शब्द के टि का लोप होता है तद्धित में।

९२०. जिस शब्द के अन्त में अन् लगा हुआ है वह नपुंसक होता हैं तदन्त अव्ययीभाव से टच् होता है विकल्प से।

९२१. झयन्त अव्ययीभाव से टच् प्रत्यय होता है विकल्प से।

## अथ तत्पुरुषः ।

**९२२. तत्पुरुषः २।१।२२** ॥ अधिकारोऽयं प्राग्बहुव्रीहेः ।

**९२३. द्विगुश्च २।१।२२** ॥ द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ।

**९२४. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४** ॥ द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः । कृष्णश्रित इत्यादि ।

**९२५. तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०** ॥ तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम्—अक्ष्णा काणः ।

**९२६. कर्तृकरणे कृता बहुलम् २।१।३२** ॥ कर्तरि करणे च तृतीया

---

**कृष्णश्रितः** । कृष्ण अम् श्रित सु इति विग्रहे 'द्वितीया श्रित' इति समासत्वात्प्रातिपदिकत्वेन सुब्लुकि कृष्णेत्यस्योपसर्जनत्वात्पूर्वनिपाते एकदेशविकृतस्यानन्यत्वाद्प्रातिपदिकत्वेन सौ रुत्वे विसर्गे तत्सिद्धिः ।

**शङ्कुलाखण्डः** । शङ्कुला टा खण्ड सु इत्यलौकिकविग्रहे 'तृतीया तत्कृत' इति समासत्वात्प्रातिपदिकत्वेन सुब्लुकि प्रातिपदिकत्वात्सुः ।

**अक्ष्णा काणः** । 'तृतीया तत्कृत' इति सूत्रे तत्कृतग्रहणाभावे अक्षि टा काण सु इति विग्रहे काणशब्दस्य गुणवाचकत्वात् तेन सह समासः स्यादतस्तदावश्यकम् । कृते तु तस्मिन् अक्षिकृतकाणत्वाभावान्न समासः ।

---

९२२. बहुव्रीहि सूत्र के पहिले तक तत्पुरुषः का अधिकार है ।

९२३. द्विगु की भी तत्पुरुष संज्ञा होती है ।

९२४. द्वितीयान्त पद का श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त, आपन्नप्रकृतिक सुबन्तों के साथ विकल्प से समास होता है वह तत्पुरुष कहा जाता है ।

९२५. तृतीयान्त पदका जो अर्थ उससे किया जो गुण तद्वाचक जो शब्द तत्प्रकृतिक सुवन्त के साथ और अर्थशब्द प्रकृतिक सुवन्त के साथ तृतीयान्त का समास होता है । तृतीयान्तवद शङ्कुलया उसका अर्थ शङ्कुलारूप उससे किया गुण खण्डनरूप तद्वाचकशब्द खण्ड तत्प्रकृतिक सुवन्त खण्ड सु उसके साथ तृतीयान्त शङ्कुला टा का समास हुआ ।

९२६. कर्ता और करण में जो तृतीया वह कृदन्त के साथ बहुलं समस्त होती है । यहाँ तदर्थपद से प्रकृति विकृति भाव ही माना जाता है । (वा०) अर्थ शब्द के साथ नित्य समास होता है और विशेष्य का लिङ्ग ही उसमें आता है ।

कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम्। नखनिर्भिन्नः।

९२७. **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६॥** चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु यूपदारु। (तदर्थेन प्रकृतिविकृतिभाव एवेष्टः) तनेह न—रन्धनाय स्थाली। (वा) अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्। द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थे पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्।

९२८. **पञ्चमी भयेन २।१।३७॥** चोराद्भयं चोरभयम्।

---

**हरित्रातः**। हरि टा त्रात सु इति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति समासत्वात्प्रातिपदिकत्येन सुब्लुकि प्रातिपतिकत्वात्सौ रुत्वे विसर्गः।

**नखनिर्भिन्नः**। नख भिस् निर्भिन्न सु इत्यलौकिकविग्रहे 'समासप्रत्ययविधौ प्रतिषेधः' इति समासे तदन्तविधिनिषेधात् निर्भिन्नेत्यस्य कृदन्तत्वाभावात्समासाप्राप्तौ 'कृदग्रहणे गतिकारकपूर्वस्यापिग्रहणम्' इति परिभाषाबात् 'कर्तृकरणे कृता बहुलम्' इति समासत्वात्प्रातिपदिकत्वेन सुब्लुकि सुः।

**यूपदारु**। यूप ङे दारु सु इति विग्रहे 'चतुर्थी तदर्थार्थ' इति समासे सुब्लुकि सोर्लुक्।

**द्विजार्थः सूपः**। द्विजाय अयमिति विग्रहः। द्विज ङे अर्थ सु इति विग्रहे 'चतुर्थी तदर्थ' इति वैकल्पिके समासे अर्थशब्दस्य नित्यपुंलिङ्गत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति पुंलिङ्गत्वे च प्राप्ते 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति वार्तिकेन नित्यसमासे सूपादेर्विशेष्यस्य लिङ्गत्वे च सुब्लुकि प्रातिपदिकत्वात्सुः।

**द्विजार्था यवागूः**। द्विज ङे अर्थं सु इति विग्रहे 'अर्थेन नित्यसमास' इति नित्यसमासे यवागूशब्दलिङ्गत्वे च सुब्लुकि टापि सोर्लोपः।

---

९२७. चतुर्थ्यन्तपद का जो अर्थ उसके लिये जो तद्वाचक जो शब्द तत्प्रकृतिक सुवन्त के साथ और अर्थादिशब्दप्रकृतिक सुवन्त के साथ चतुर्थ्यन्त का समास होता है। चतुर्थ्यन्तपद यूपाय उसका अर्थ यूप उसके लिये कौन काष्ठ तद्वाचक शब्द दारु तत्प्रकृतिक सुबन्त दारु सु उसके साथ चतुर्थ्यन्त यूप ङे का समास हुआ।

९२८. पञ्चम्यन्त पद का भय शब्द के साथ समास होता है।

९२९. **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३९ ॥**

९३०. **पञ्चम्याः स्तोकादिभ्यः** ६।३।२ ॥ अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। कृच्छ्रादागतः।

इति पंचमी।

९३१. **षष्ठी** २।२।८ ॥ सुबन्तेन प्राग्वत्। राजपुरुषः।

९३२. **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २।२।१ ॥** अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्–पूर्वश्छात्राणाम्।

९३३. **अर्धंनपुंसकम्** २।२।८ ॥ समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्। अर्धं पिप्पल्याः अर्धपिप्पली।

९३४. **सप्तमी शौण्डैः** २।१।४० ॥ सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशौण्ड इत्यादि। द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः।

९३५. **दिक्संख्ये संज्ञायाम्** २।१।५० ॥ संज्ञायामेवेति नियमार्थं सूत्रम्।

---

**राजपुरुषः**। राजन् ङस् पुरुष सु इति विग्रहे 'षष्ठी' इति समासे सुब्लुकि सुः।

**पूर्वकायः**। काय ङस् पूर्व सु इति विग्रहे 'षष्ठी' इति समासं बाधित्वा 'पूर्वापर' इति समासे सुब्लुकि पूर्वशब्दस्योपसर्जनत्वात्पूर्वनिपाते सुः।

**अर्धपिप्पली** : पिप्पली ङस् अर्ध सु इति विग्रहे 'षष्ठी' इति समासं बाधित्वा 'अर्धं नपुंसकम्' इति समासे सुब्लुकि सौ 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परपदलिङ्गत्वात्सोर्लोपः।

---

९२९. स्तोक, अन्तिक, दूरार्थ, कृच्छ्र शब्दों का क्त प्रत्ययान्त के साथ समास होता है।

९३०. स्तोकादि गण पठित शब्दों से पञ्चम्यन्त शब्द का समास होता है।

९ १. षष्ठी सुबन्त के साथ समस्त होती है।

९३२. अवयवी वाचक शब्द के साथ पूर्व अपर अधर उत्तर आदि शब्द समस्त होते हैं यदि अवयवी एकत्व संख्या विशिष्ट हो।

९३३. समांश वाची अर्ध शब्द नित्य समस्त होता है नपुंसक में।

९३४. सप्तम्यन्तपद शौण्डादि प्रकृतिक सुबन्तों के साथ समास प्राप्त करता है।

९३५. दिक् वाचक और संख्या वाचक शब्द संज्ञा में ही समस्त होते है।

पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न—उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

९३६. **तद्धितार्थोत्तरपदसमाहारे च २।२।५१ ॥** तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत् । पूर्वस्यां शालायां भवः पूर्वशाला इति समासे जाते ( भा ) सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव ।

९३७. **दिक्पूर्वपदादसंज्ञायां ञः ४।२।१०७ ॥** अस्माद् भवाद्यर्थे ञः स्यादसंज्ञायाम् ।

९३८. **तद्धितेष्वचामादेः ७।२।११६ ॥** ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । यस्येति च । पौर्वशालः । पञ्च गावो धनं यस्येति त्रिपदे बहुव्रहौ । ( वा० ) द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ।

९३९. **गोरतद्धितलुकि ५।४।९२ ॥** गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः ।

---

**पूर्वेषुकामशमी** । पूर्व सु इषुकामशमी सु इति विग्रहः ।

**सप्तर्षयः** । सप्तन् जस् ऋषि जस् इति विग्रहे समासे नलोपः ।

**उत्तरा वृक्षाः** । उत्तर जस् वृक्ष जस् इति विग्रहे 'विशेषणं विशेष्येण बहुलम्' इति समासे प्राप्ते 'दिक्सङ्ख्ये संज्ञायाम्' इति नियमात्समासाभावः ।

**पौर्वशालः** । पूर्वा ङि शाला ङि इति विग्रहे 'तद्धितार्थ' इतिसमासत्वात्सुब्लुकि पूर्वाशब्दस्योपसर्जनत्वात्पूर्वनिपाते 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इतिपूर्वाशब्दस्य पुंवद्भावे 'दिक्पूर्व' इति ञप्रत्यये 'तद्धितेष्वचामादेः' इत्यादेरच उकारस्य वृद्धौ भत्वात् 'यस्येति च' इत्याकारलोपे पौर्वशालेत्यस्य तद्धितान्तत्वात्प्रातिपादिकत्वेन सौ रुत्वे विसर्गे तत्सिद्धिः ।

**पञ्चगवधनः** । पञ्चन् जस् गो जस् धन सु इति विग्रहे 'शेषो बहुव्रीहिः' इति वैकल्पिकसमासे प्राप्ते 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति नित्यसमासे

---

९३६. तद्धितार्थ की विषयता में उत्तर पद परे रहते अथवा समाहार वाच्य में दिग् वाचक और संख्या वाचक शब्द समस्त होते है । ( भा० ) सर्वनाम को वृत्ति हो जाने पर ही पुंवद्भाव होता है ।

९३७. दिक् पूर्वपद शब्दों से भवादि अर्थ में ञ प्रत्यय होता है असंज्ञा में ।

९३८. तद्धित प्रत्यय परे रहते आद्यच् को वृद्धि होती है ञित् णित प्रत्यय परे रहते ।

( वा० ) द्वन्द्व और तत्पुरुष को उत्तर पद परे रहते नित्य समास होता है ।

९३९. गो शब्दान्त तत्पुरुष से टच् प्रत्यय होता है, वह समासान्त होता है, तद्धित लुक में नहीं ।

९४०. **तत्पुरुषः समानाधिकरणः कर्मधारयः १।२।४२ ॥**

९४१. **संख्यापूर्वो द्विगुः२।१।५२ ॥** तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात् ।

९४२. **द्विगुरेकवचनम् २।४।१ ॥** द्विग्वर्थः समाहार एकवत्स्यात् ।

९४३. **स नपुंसकम् २।५।१७ ॥** समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ।

९४४. **विशेषणं विशेष्येण बहुलम् २।१।१७ ॥** भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम्—कृष्णसर्पः । क्वचिन्न—रामो जामदग्न्यः ।

९४५. **उपमानानि सामान्यवचनैः २।१।५५ ॥** घन इव श्यामो घनश्यामः । ( वा० ) शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ।

---

सुब्लुकि नलोपे 'गोरतद्धितलुकि' इति टच्यनुबन्धलोपेऽवादेशे सौ रुत्वे विसर्गे तत्सिद्धिः ।

**पञ्चगवम्** । पञ्चन् आम् गो आम् इति विग्रहे 'तद्धितार्थ' इतिसमासे सुब्लुकि नलोपे टचि अवादेशे कर्मधारयसंज्ञायां द्विगुसंज्ञायामेकवद्भावे नपुंसकत्वात्सोरम् ।

**नीलोत्पलम्** । नील सु उत्पल सु इति विग्रहे 'विशेषणं विशेष्येण बहुलम्' इति समासे सुब्लुकि गुणे नीलशब्दस्योपसर्जनत्वात्पूर्वनिपाते सोरमादेशः ।

**घनश्यामः** । घन सु श्याम सु इति विग्रहः ।

---

९४०. तत्पुरुष समानाधिकरण की कर्मधारय संज्ञा है ।

९४१. तद्धितार्थ के विषय में, उत्तर पद परे रहते और समाहार वाच्य में संख्यापूर्वक कर्मधारय द्विगु संज्ञक होता है ।

९४२. द्विगु अर्थ में विहित समाहार एक वचन होता है ।

९४३. समाहार में द्विगु और द्वन्द्व नपुंसक होते हैं ।

९४४. भेदक ( विशेषण ) समानाधिकरण भेद्य ( विशेष्य ) के साथ बहुलं समस्त होता है ।

९४५. उपमान वाचक शब्द सामान्य वचनों के साथ समस्त होता है ।

( वा० ) शाकपार्थिवादि गणपठित शब्दों की सिद्धि के लिए उत्तर पद का लोप कहना चाहिए ।

शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ।

९४६. **नञ् २।२।६** ॥ नञ् सुपा सह समस्यते ।

९४७. **न लोपो नञः ६।३।७३** ॥ नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ।

९४८. **तस्मान्नुडचि ६।४।७४** ॥ लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ।

९४९. **कुगतिप्रादयः २।२।१८** ॥ एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ।

९५०. **ऊर्यादिच्विडाचश्च १।४।६१** ॥ ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य ।

---

**शाकपार्थिवः** । शाकः प्रियो यस्य स शाकप्रियः । शाकप्रियश्चासौ पार्थिवः शाकपार्थिवः इति लौकिकविग्रहः । शाक सु प्रिय सु इति विग्रहे बहुव्रीहिसमासे सुब्लुकि शाकप्रिय सु पार्थिव सु इति विग्रहे 'विशेषणं विशेष्येण' इति समासे सुब्लुकि 'शाकपार्थिवादीनाम्' इति प्रियपदलोपे सुः ।

**देवब्राह्मणः** । देवस्य पूजको देवपूजकः स चासौ ब्राह्मण इतिलौकिकविग्रहः । देव ङस् पूजक सु इति विग्रहेः 'षष्ठी' इति समासे सुब्लुकि देवपूजक सु ब्राह्मण सु इति विग्रहे विशेषणसमासे सुब्लुकि पूजकपदलोपे सुः ।

**अनश्वः** । अश्व सु न इति विग्रहे 'नञ्' इति समासे सुब्लुकि न इत्यस्य पूर्वनिपाते नलोपे अ अश्व इति जाते नुटि अनश्वशब्दात्सुः ।

**ऊरीकृत्य** । ऊरीकृत्वा इति विग्रहे ऊरीशब्दस्य गतिसंज्ञायां समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वा इत्यस्य ल्यबादेशे 'ह्रस्वस्य पिति कृति तुक्' इति तुकि अव्ययत्वात्सोर्लुक् ।

---

९४६. नञ् सुबन्त के साथ समस्त होता है ।

९४७. नञ् के नकार का लोप होता है उत्तर पद परे रहते ।

९४८. लुप्त नकारक नञ् को नुट् का आगम होता है अजादि उत्तर पद परे रहते ।

९४९. कु, गतिसंज्ञक और प्रादियों का समर्थ के साथ नित्य समास होता है ।

९५०. ऊर्यादि च्व्यन्त डाजन्त शब्दों का क्रिया के योग में गति संज्ञा होती है

शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः ( वा० ) प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्यः प्राचार्यः । ( वा० ) अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तो मालामिति विग्रहे—

९५१. **एकविभक्ति चापूर्वनिपाते १।२।४८॥** विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ।

९५२. **गोस्त्रियोरुपसर्जनस्य १।२।४८॥** उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः । ( वा० ) अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया—अवकोकिलः । ( वा० ) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय पर्यध्ययनः ।

---

**शुक्लीकृत्य** । न शुक्लः अशुक्लः अशुक्लं शुक्लं कृत्वा इति विग्रहे 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति शुक्लशब्दात् च्विप्रत्यये 'अस्य च्वौ' इतीत्वे च्वेर्लोपे 'ऊर्यादिच्विडाचश्च' इति शुक्लीत्यस्य गतिसंज्ञायाम् 'कुगतिप्रादयः' इति समासे क्त्वो ल्यपि तुक् ।

**पटपटाकृत्य** । पटत् कृत्वेति स्थिते पटत्शब्दस्य 'डाचि विवक्षिते द्वे बहुलम्' इति द्वित्वे 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इति डाचि टिलोपे नित्यमाम्रेडिते डाचीति वक्तव्यम्' इति तकारपकारयोः पकारादेशे पटपटा इत्यस्य 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञायां 'कुगतिप्रादयः' इति कृत्वाशब्देन समासे क्त्वो ल्यपि तुक् ।

**अतिमालः** । माला अम् अति इतिविग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासत्वात्प्रातिपदिकत्वेन सुब्लुकि अतीत्यस्योपसर्जनत्वात्प्राक्प्रयोगे 'एकविभक्ति चापूर्वनिपाते' इति मालाशब्दस्योपसर्जनत्वात् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे सुः ।

---

( वा० ) प्रादिक गतादि अर्थों में प्रथमान्त के साथ समस्त होते हैं ।

( वा० ) अत्यादिक क्रान्त आदि अर्थ में द्वितीयान्त के साथ समस्त होते ।

९५१. विग्रह में जिसकी विभक्ति नियत है वह उपसर्जन संज्ञक होता है किन्तु उसका पूर्व निपात नहीं होता ।

९५२. उपसर्जन जो गो शब्द और स्त्री प्रत्ययान्त तदन्त प्रातिपदिक को ह्रस्व होता है ।

वक

( वा० ) अवादि की क्रुष्टादि अर्थ में तृतीयान्त के साथ समास होता है ।

( वा० ) पर्यादिक ग्लान आदि अर्थ में चतुर्थ्यन्त आदि के साथ समस्त होते हैं ।

( वा० ) निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्याः— निष्कौशाम्बिः।

**९५३. तत्रोपपदं सप्तमीस्थम् ३।१।९१॥** सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्।

**९५४. उपपदमतिङ् २।२।१९॥** उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। अतिङ् किम्-मा भवान् भूत्। माङि लुङिति सप्तमीनिर्देशान्माङुपपदम्। (प०) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि।

**९५५. तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५।४।८६॥** संख्याव्ययादेरङ्गु-

---

**व्याघ्री।** व्याजिघ्रतीति विग्रहे वि आङ्पूर्वाद् घ्राधातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आतो लोप इटि च' इत्यालोपे 'गतिकारकोपपदानाम्' इतिपरिभाषया सुबुत्पत्तेः पूर्वं घ्रशब्देन आङः 'कुगतिप्रादयः' इति गतिसमासे तत आघ्रशब्देन वेर्गतिसमासे यणि व्याघ्रशब्दात् 'जातेरस्त्रीविषयादयोपधात्' इति ङीप् अलोपः।

**अश्वक्रीती।** अश्वेन क्रीतेति विग्रहः। अश्व टा क्रीत इति विग्रहे 'गतिकारक' इति परिभाषया क्रीतशब्दात् सुबुत्पत्तेः पूर्वं 'कर्तृकरणे कृता बहुलम्' इति समासे सुब्लुकि 'क्रीतात्करणपूर्वात्' इति ङीषि स्वादयः।

**कच्छपी।** कच्छेन पिबतीति विग्रहः। पाधातोः 'सुपि स्थः' इत्यत्र सुपीति योगविभागात्कप्रत्यये आलोपे 'गतिकारक' इति परिभाषया पशब्दात्सुबुत्पत्तेः पूर्वं कच्छ टा प इति विग्रहे उपपदसमासे सुब्लुकि जातिलक्षणङीष्।

---

( वा० ) निरादि उपसर्ग क्रान्त आदि अर्थ में पञ्चम्यन्त के साथ समस्त होते हैं।

९५३. सप्तम्यन्त पद में वाच्यत्वेन विवक्षित जो कुम्भ आदि शब्द उसकी उपपद संज्ञा होती है।

९५४. उपपद सुबन्त समर्थ के साथ नित्य समस्त होता है। ( प० ) गति और कारक उपपदों का कृदन्त के साथ सुप् की उत्पत्ति के पहले समास होता है।

९५५. संख्या और अव्ययादि शब्दों का अङ्गुल्यन्त शब्द से समासान्त अच् प्रत्यय होता है।

ल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य-द्वयङ्गुलम् । निर्गत-मङ्गुलिभ्यो निरङ्गुलम् ।

९५६. **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ५।४।८७ ॥** एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ।

९५७. **रात्राह्नाहाः पुंसि २।४।२९ ॥** एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः । संख्यातरात्रः (संख्यापूर्वं रात्रं क्लीबम्) द्विरात्रम् । त्रिरात्रम् ।

९५८. **राजाहः सखिभ्यष्टच् ५।४।९१ ॥** एतदन्तात्तत्पुरुषाट्टच् स्यात् ।

---

**द्वयङ्गुलम्** । द्वि औ अङ्गुलि औ इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुकि 'तत्पुरुषस्याङ्गुलेः' इत्यचि 'यस्येति च' इतीकारलोपे प्रादिपदिक-कार्यम् ।

**निरङ्गुलम्** । अङ्गुलि भ्यस् निर् इति विग्रहे 'निरादयः' इति समासे सुब्लुकि अचि इलोपे सुः ।

**अहोरात्रः** । अहन् सु रात्रि सु इति विग्रहे द्वन्द्वसमासे 'अहःसर्वैकदेश' इत्यचि 'यस्येति च' इतीकारलोपे 'रात्राह्नाहा' इति पुंस्त्वे 'रूपरात्ररथन्तरेषु रुत्वं वाच्यम्' इति रुत्वे उत्वे गुणे सुः ।

**सर्वरात्रः** । सर्वा चासौ रात्रिरिति विग्रहः । सर्वा सु रात्रि सु इति विग्रहे 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासे अचि इकारलोपे पुंस्त्वे 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः, इति सर्वाशब्दस्य पुंवद्भावे सुः ।

**संख्यातरात्रः** । संख्याता चासौ रात्रिरितिविग्रहे 'विशेषणं विशेष्येण' इति समासे संख्याताशब्दस्य पुंवद्भावः ।

**द्विरात्रम्** । द्वयोः रात्र्योः समाहार इति विग्रहे 'तद्धितार्थ' इति समासे अचि इलोपे 'संख्यापूर्वं रात्रं क्लीबम्' इति नपुंसकत्वम् ।

---

९५६. अहन्, सर्व, एकदेश संख्यात् और पुण्य शब्द से परे रात्रि शब्द से अच् प्रत्यय होता है । चकारात् संख्यादि और अव्ययादि शब्दों को भी अच् प्रत्यय होता है ।

९५७. रात्रि और अहन् शब्द हैं अन्त में जिसके वे द्वन्द्व और तत्पुरुष पुलिङ्ग में ही होते है ।

( वा० ) संख्या पूर्वक रात्र शब्द नपुंसक होता है ।

९५८. राजन्, अहन्, सखि शब्दान्त तत्पुरुष से टच् प्रत्यय होता है ।

परमराजः ।

९५९. **आन्महतः समानाधिकरणजातीययोः** ६।३।४६ ॥ महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ।

९६०. **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः** ६।३।४७ ॥ आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ।

९६१. **त्रेस्त्रयः** ६।३।४८ ॥ त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ।

९६२. **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** २।३।२६ ॥ एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । ( वा० ) द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः । पंचसु कपालेषु संस्कृतः पंचकपालः पुरोडाशः ।

---

**परमराजः** । परमश्चासौ राजेति 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति समासे टचि 'नस्तद्धिते' इति टिलोपः ।

**महाराजः** । महांश्चासौ राजेति विग्रहे 'सन्महत्परम' इति समासे टचि टिलोपे आत्वे दीर्घः ।

**द्वादश** । द्वन्द्वसमासे आत्वम् ।

**अष्टाविंशतिः** । द्वन्द्वे आत्वे सवर्णदीर्घः ।

**त्रयोदश** । त्रयश्च दश चेति विग्रहः । द्वन्द्वे त्रेस्त्रयसादेशे रुत्वे उत्त्वे गुणः ।

**पञ्चकपालः** । पञ्चन् सुप् कपाल सुप् इत्यलौकिकविग्रहे 'तद्धितार्थोत्तरपद' इति समासे सुब्लुकि 'संस्कृतं भक्षाः' इत्यणि 'द्विगोर्लुगनपत्ये' इत्यणो लुकि कपालशब्दस्य नपुंसकत्वात् 'परवल्लिङ्गम्' इति पञ्चकपालशब्दस्यापि नपुंसकत्वे प्राप्ते 'द्विगुप्राप्ता' इति तन्निषेधाद्विशेष्यलिङ्गत्वे प्रातिपदिककार्यम् ।

---

९५९. महत् शब्द को आकार अन्तादेश होता है समानाधिकरण में उत्तरपद में जातीय पद परे रहते ।

९६०. द्वि और अष्टन् शब्द को आत् होता है संख्या में बहुव्रीहि और अशीति को छोड़कर ।

९६१. त्रि शब्द के स्थान में त्रय आदेश होता है ।

९६२. द्वन्द्व और तत्पुरुष समास में पर पद के लिङ्ग के समान लिङ्ग होता है ।

( वा० ) द्विगु प्राप्त आपन्न अलं पूर्व और गति समास में पर पद के समान लिङ्ग का निषेध कहना चाहिए ।

९६३. **प्राप्तापन्ने च द्वितीयया २।२।४॥** समस्येते। अकारश्चानयोरन्तादेशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः। अलंकुमार्यै-अलंकुमारिः। अत एव ज्ञापकात्समासः। निष्कौशाम्बिः।

९६४. **अर्धर्चाः पुंसि च २।४।३१॥** अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः अर्धर्चम्। एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः। सामान्ये नपुंसकम्। मृदु पचति। प्रातः कमनीयम्।

इति तत्पुरुषः॥ ३॥



---

अलङ्कुमारिः। कुमारी ङे अलमिति विग्रहे 'द्विगुप्राप्तापन्न' इति ज्ञापकात्समासे परपदलिङ्गत्वनिषेधे च कुमारीशब्दस्य 'एकविभक्ति' इत्युपसर्जनत्वाद् 'गोस्त्रियोः' इति ह्रस्वः। निष्कौशाम्बिः। कौशाम्बी ङस् निर् इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे सुब्लुकि 'द्विगुप्राप्त' इति परपदलिङ्गत्वनिषेधे 'गोस्त्रियोः' इति ह्रस्वे निरो रेफस्य विसर्गे 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वे स्वादिः।

इति तत्पुरुषः॥



---

९६३. प्राप्त और आपन्न शब्दों का द्वितीयान्त के साथ समास होता है और इन दोनों के स्थान में अकार अन्तादेश होता है।

९६४. अर्धर्चादि शब्दों का पुंलिङ्ग और नपुंसक लिङ्ग में भी प्रयोग होता।

## अथ बहुव्रीहिः ।

९६५. **शेषो बहुव्रीहिः २।२।२३** ॥ अधिकारोऽयं प्राग्द्वन्द्वात् ।

९६६. **अनेकमन्यपदार्थे २।२।२४** ॥ अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ।

९६७. **सप्तमीविशेषणे बहुव्रीहौ २।२।३५** ॥ सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ।

९६८. **हलदन्तात्सप्तम्याः संज्ञायाम् ६।३।९** ॥ हलन्ताददन्ताच्च सप्तम्या अलुक् । कण्ठेकालः । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीनाम्बरो हरिः । वीरपुरुषको ग्रामः । ( वा० ) प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । प्रपतितपर्णः, प्रपर्णः । ( वा० ) नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः । अविद्यमानपुत्रः, अपुत्रः ।

---

**कण्ठेकालः** । कण्ठे कालो यस्येति विग्रहे 'सप्तमी विशेषणे' इति ज्ञापकात्समासे कण्ठशब्दस्य पूर्वनिपाते च 'हलदन्तात्' इति सप्तम्या अलुकि प्रातिपदिककार्यम् ।

**प्रपर्णः** । प्रकृष्टं पतितमिति विग्रहे 'प्रादयो गताद्यर्थे प्रथमया' इति समासः । प्रपतितं पर्णं यस्य इति विग्रहे 'प्रादिभ्यो धातुजस्य' इति वार्त्तिकेन समासे पतितपदलोपे प्रातिपदिककार्यम् ।

**अपुत्रः** । न विद्यमानः पुनः इति विग्रहे 'नञ्' इति समासे नलोपे अविद्यमानः पुत्रो यस्येति विग्रहे 'नञोऽस्त्यर्थानाम्' इति समासे विद्यमानपदलोपे च प्रातिपदिककार्यम् ।

---

९६५. द्वन्द्वाधिकार तक बहुव्रीहिः का अधिकार है ।

९६६. अनेक प्रथमान्त अन्य पद के अर्थ में वर्तमान होकर विकल्प से समस्त होते हैं उन्हें बहुव्रीहि कहते हैं ।

९६७. सप्तम्यन्त और विशेषण बहुव्रीहि समास में पूर्व प्रयोग प्राप्त करते हैं ।

९६८. हलन्त और अदन्त शब्दों से संज्ञा में सप्तमी का अलुक् होता है ।

( वा० ) प्रादिक से पर जो धातुजन्य शब्द तदन्तप्रकृतिक सुबन्त का पदान्तर के साथ बहुव्रीहिसमास हो और पूर्वपदान्तर्गत उत्तरपद का लोप हो विकल्प से ।

( वा० ) नञ् से पर जो अस्त्यर्थवाचक शब्द तदन्तप्रकृतिक सुबन्त का पदान्तर के साथ समास हो और पूर्वपदान्तर्गत उत्तरपद का विकल्प से लोप हो ।

९६९. **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी-प्रियादिषु ६।३।३४॥** उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः। निपातनात्पंचम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्—वामोरूभार्यः। पूरण्यां तु—

९७०. **अप्पूरणीप्रमाण्योः ५।४।११६॥** पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्—कल्याणीप्रिय इत्यादि।

---

**चित्रगुः।** चित्रा गावो यस्येति विग्रहः। चित्रा अस् गो जस् इत्यलौकिक-विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'स्त्रियाः पुंवद्' इति चित्राशब्दस्य पुंवद्भावात् टापो निवृत्तौ 'एकविभक्ति' इति गोशब्दस्योपसर्जनत्वाद् 'गोस्त्रियोः' इति ह्रस्वे प्रातिपदिककार्यम्।

**रूपवद्भार्यः।** रूपवती भार्या यस्येति विग्रहे समासे सुब्लुकि रूपवतीशब्दस्य पुंवद्भावान्ङीपो निवृत्तौ भार्याशब्दस्य ह्रस्वे प्रातिपदिकत्वादि।

**कल्याणीपञ्चमाः।** पञ्चानां पूरणीति विग्रहे पञ्चन्शब्दात् 'तस्य पूरणे डट्' इति डटि 'नान्तादसङ्ख्यादेर्मट्' इति डटो मडादेशे नलोपे टित्वात् ङीपि पञ्चमीति सिद्ध्यति। कल्याणी सु पञ्चमी सु इति विग्रहे समासे पञ्चमीशब्दस्य पूरणप्रत्य-यान्तत्वेन तस्मिन्परे 'स्त्रियाः' इति पुंवद्भावाप्राप्तौ 'अप्पूरणीप्रमाण्योः' इत्यपि 'यस्येति च' इति ईकारलोपे प्रातिपदिककार्यम्।

---

९६९. प्रवृत्ति निमित्त एक होने पर पुंलिङ्ग को कहनेवाला और ऊङ्प्रत्यय न हुआ हो जिसमें ऐसा जो स्त्रीवाचकशब्द उसका पुंलिङ्गबाचकशब्द के सदृश रूप हो। समानाधिकरण स्त्रीलिङ्ग उत्तरपद पर रहते, किन्तु पूरणप्रत्ययन्त और प्रियादिगणपठित शब्द पर में न हो।

९७०. पूरणार्थ प्रत्ययान्त जो स्त्रीलिङ्ग तदन्त से और प्रमाण्यन्त बहुव्रीहि से अप् प्रत्यय होता है।

९७१. **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५।४।११३** ॥ स्वाङ्गवाचि-सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम्—दीर्घसक्थि शकटम् । स्थूला वेणुयष्टिः । अक्ष्णोःदर्शनादिति वक्ष्यमाणोऽच् ।

९७२. **द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५** ॥ आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ।

९७३. **अन्तर्बहिर्भ्यां च लोम्नः ५।४।११७** ॥ आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ।

९७४. **पादस्य लोपोऽहस्त्यादिभ्यः ५।४।१३८** ॥ हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः स्याद् बहुव्रीहौ । व्याघ्रपात् । अहस्त्यादिभ्यः किम्—हस्तिपादः । कुसूलपादः ।

---

**दीर्घसक्थः** । दीर्घे सक्थिनी यस्येति विग्रहे यमासे 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षचि 'यस्येति च' इतीकारलोपे प्रातिपदिककार्यम् ।

**जलजाक्षी** । जलजे इव अक्षिणी यस्या इति विग्रहे समासे सुब्लुकि षचि इलोपे 'षिद् गौरादिभ्यश्च' इति ङीपि अलोपे स्वादिः ।

**द्विमूर्धः** । द्वौ मूर्धानौ यस्येति विग्रहे समासे 'द्वित्रिभ्यां ष मूर्ध्नः' इति षप्रत्यये 'नस्तद्धिते' इति टिलोपे प्रातिपदिककार्यम् । **त्रिमूर्धः** । त्रयो मूर्धानो यस्येति विग्रहः ।

**अन्तर्लोमः** । अन्तर्लोमानि यस्येति विग्रहः । समासे अपि सुब्लुकि टिलोपे प्रातिपदिककार्थम् ।

**व्याघ्रपात्** । व्याघ्र औ पाद औ इति विग्रहे 'अनेकमन्यपदार्थे' इति समासे 'पादस्य' लोपः' इत्यलोपे सुब्लुकि प्रातिपदिककार्यम् ।

---

९७१. स्वाङ्गवाचि सक्थि और अक्षि शब्दान्त बहुव्रीहि से षच् प्रत्यय होता है ।

९७२. द्वि, त्रि शब्द से परे मूर्धा शब्द से ष प्रत्यय होता है बहुव्रीहि समास में ।

९७३. अन्तर और बहिर शब्द से परे लोमन् शब्द को अप्रत्यय होता है बहुव्रीहि समास में ।

९७४. हस्त्यादिगण पठित शब्दों को छोड़कर उपमानवाचक शब्द से परे पाद शब्द का लोप होता है बहुव्रीहि समास में ।

९७५. **संख्यासुपूर्वस्य ५।४।१४०॥** पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ। द्विपात्। सुपात्।

९७६. **उद्विभ्यां काकुदस्य ५।४।१४८॥** लोपः स्यात्। उत्काकुत्। विकाकुत्।

९७७. **पूर्णाद्विभाषा ५।४।१४९॥** पूर्णकाकुत्। पूर्णकाकुदः।

९७८. **सुहृद्दुर्हृदौ मित्रामित्रयोः ५।४।१५०॥** सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रः।

९७९. **उरःप्रभृतिभ्यः कप् ५।४।१५१॥**

९८०. **सोऽपदादौ ८।३।३८॥** पाशकल्पककाम्येषु विसर्गस्य सः।

९८१. **कस्कादिषु च ८।३।४८॥** एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। इति सः। व्यूढोरस्कः।

---

**सुहृत्।** शोभनं हृदयं यस्येति विग्रहे समासे सुब्लुकि निपातनात् 'सहृद्दुर्हृदौ' इति हृदयस्य हृदादेशे प्रातिपदिककार्यम्।

**व्यूढोरस्कः।** व्यूढमुरो यस्येति विग्रहे समासे कपि सुब्लुकि सस्य रुत्वे विसर्गे 'सोऽपदादौ' इति विसर्गस्य सत्वे गुणे प्रातिपदिककार्यम्।

---

९७५. संख्या और सु पूर्व में है जिसके उस पाद शब्द का लोप होता है समासान्त बहुव्रीहि में।

९७६. उद् और वि शब्द से परे काकुद शब्द के सामासान्त का लोप होता है।

९७७. पूर्ण शब्द से परे काकुद शब्द के सामासान्त का लोप होता है विकल्प से।

९७८. सु और दुर उपसर्ग से परे हृदय शब्द को हृत आदेश निपातित होता है मित्र और अमित्र अर्थ में।

९७९. उरःप्रभृति गण पठित शब्दों से समासान्त कप् प्रत्यय होता है।

९८०. पाश कल्प क और काम्य शब्द से परे विसर्ग को स होता है यदि वह पद के आदि में न हो तब।

९८१. कस्कादिगण पठित शब्दों के इण् से उत्तर विसर्ग को षत्व होता है अन्य को तो स होता है।

**९८२. इणः षः ८।३।३९ ॥** इण उत्तरस्य विसर्गस्य षः, पाशकल्पक-काम्येषु परेषु । प्रियसर्पिष्कः ।

**९८३. निष्ठा २।२।२६ ॥** निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । युक्तयोगः ।

**९८४. शेषाद्विभाषा ५।४।१५४ ॥** अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशस्कः, महायशाः ।

इति बहुव्रीहिः ॥ ४ ॥



---

**प्रियसर्पिष्कः** । प्रियं सर्पिः यस्येति विग्रहे समासे कपि सुब्लुकि षत्वस्यासिद्धत्वा 'ससजुषो रुः' इति रुत्वे विसर्गे 'इणः षः' इति विसर्गस्य षत्वे स्वादिः ।

**युक्तयोगः** । योगः युक्तो येनेति विग्रहे समासे सुब्लुकि 'निष्ठा' इति युक्तपदस्य पूर्वनिपाते सुः ।

**महायशस्कः** । महद् यशो यस्येति विग्रहे समासे कपि सुब्लुकि आत्वे सस्य रुत्वे विसर्गे 'सोऽपदादौ' इति विसर्गस्य सत्वम् । कपोऽभावे 'अत्वसन्तस्य' इति दीर्घः महायशाः इति ।

इति बहुव्रीहिः ।



---

९८२. इण् से उत्तर विसर्ग को षत्व होता है पाश कल्प क और काम्य परे रहते ।

९८३. बहुव्रीहि समास में निष्ठान्त शब्द का पूर्व प्रयोग होता है ।

९८४ बहुव्रीहि समास में जिनको कोई समासान्त प्रत्यय नहीं कहा गया है उनसे क प्रत्यय होता है विकल्प से ।

## अथ द्वन्द्वः ।

**९८५. चार्थे द्वन्द्वः २।२।२९ ॥** अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । 'भिक्षामट गां चानय' इत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । 'धवखदिरौ छिन्धि' इति मिलितानामन्वय इतरेतरयोगः । 'संज्ञापरिभाषम्' इति समूहः समाहारः ।

**९८६. राजदन्तादिषु परम् २।२।३१ ॥** एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजानो राजदन्ताः । ( धर्मादिष्वनियमः ) । अर्थधर्मौ । धर्मार्थावित्यादि ।

**९८७. द्वन्द्वे घि २।२।३२ ॥** द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ।

---

**राजदन्तः** । दन्त आम् राजन् सु इति विग्रहे 'षष्ठी' इति समासे सुब्लुकि दन्तशब्दस्योपसर्जनत्वात्पूर्वप्रयोगे प्राप्ते 'राजदन्तादिषु परम्' इति दन्तशब्दस्य परनिपाते नलोपे स्वादिः ।

**अर्थधर्मौ** । अर्थश्च धर्मश्च इति विग्रहः । अर्थ सु धर्म सु इति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'अजाद्यदन्तम्' इति अर्थशब्दस्य पूर्वनिपाते प्राप्ते 'धर्मादिष्वनियमः' इति तन्निषेधात् कदाचिदर्थ शब्दस्य पूर्वनिपातः कदाचिद्धर्मशब्दस्य पूर्वनिपातः तेन अर्थधर्मौ, धर्मार्थौ इति च सिध्यति।

**हरिहरौ** । हरि सु हर सु इति विग्रहे समासे सुब्लुकि 'द्वन्द्वे घि' इति घिसंज्ञकस्य हरिशब्दस्य पूर्वनिपाते औ विभक्तिः ।

---

९८५. चार्थ में वर्तमान अनेक सुवन्तों का समास होता है विकल्प से । उसे द्वन्द्व कहते हैं । समुच्चय अन्वाचय इतरेतरयोग और समाहार ये चार्थ है । परस्पर निरपेक्ष अनेक शब्दों का एक में अन्वय होना समुच्चय है । एक का आनुषंगिक अन्वय होना अन्वाचय है । मिलितों का अन्वय इतरेतरयोग है, संज्ञापरिभाषम् की भाँति समूह को समाहार कहते हैं ।

९८६. राजदन्तादिगणपठित शब्दों में पूर्व प्रयोगार्ह का पर प्रयोग होता है (वा०) धर्मादि शब्दों में यह नियम नहीं लगता ।

९८७. द्वन्द्व समास में घि संज्ञक का पूर्व प्रयोग होता है ।

९८८. **अजाद्यदन्तम् २।२।३३** ॥ द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ।

९८९. **अल्पाच्तरम् २।२।३४** ॥ शिवकेशवौ ।

९९०. **पिता मात्रा १।२।७०** ॥ मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मातापितरौ वा ।

९९१. **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२** ॥ एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ।

९९२. **द्वन्द्वाच्चुदषहान्तात्समाहारे ५।४।१०६** ॥ चवर्गान्ताद्षहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्–प्रावृट्शरदौ ।

इति द्वन्द्वः ॥ ५ ॥

---

**ईशकृष्णौ** । ईशश्च कृष्णश्चेति विग्रहे समासे सुब्लुकि ईशशब्दस्य पूर्वनिपातः ।

**शिवकेशवौ** । शिवश्च केशवश्चेति विग्रहे समासे शिवस्य पूर्वनिपातः ।

**पितरौ** । मातृ सु पितृ सु इति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'पिता मात्रा' इति पाक्षिके पितृशब्दस्यैकशेषे प्रातिपदिकत्वाद् औविभक्तौ पितराविति । एकशेषाभावपक्षे आनङ् ऋतो द्वन्द्वे' इति मातृशब्दस्य आनङादेशेऽनुबन्धलोपे नलोपे मातापितराविति ।

**पाणिपादम्** । पाणी च पादौ च एषां समाहारः इति विग्रहे समासे सुब्लुकि 'द्वन्द्वश्च प्राणि' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वात्सोरम् ।

**वाक्त्वचम्** । वाच् सु त्वच् सु इति विग्रहे समाहारद्वन्द्वे टचि सुब्लुकि कुत्वे प्रातिपदिकत्वादि ।

इति द्वन्द्वः ।

---

९८८. द्वन्द्व समास में अजादि और अदन्त शब्द का पूर्व प्रयोग होता है ।

९८९. दो शब्दों में द्वन्द्व समास होने पर जिस शब्द में अल्प अच् हों उसका पूर्व प्रयोग होता है ।

९९०. मातृ शब्द के साथ पितृ शब्द का समास होने पर पिता शब्द शेष रहता है विकल्प से ।

९९१. प्राणि तूर्य और सेनाङ्गों के साथ द्वन्द्व समास होने पर एकवचन प्रयोग होता है ।

९९२. च वर्गान्त और दषहान्त द्वन्द्व से टच् प्रत्यय होता है समाहार में ।

९९३. **ऋक्पूरब्धूः पथामानक्षे ५।४।७४॥** अ अनक्षे इति च्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्। विमलापं सरः। राजधुरा। अक्षे तु अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः।

९९४. **अक्ष्णोऽदर्शनात् ५।४।७६॥** अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः।

९९५. **उपसर्गादध्वनः ५।४।८५॥** प्रगतोऽध्वानं प्राध्वो रथः।

९९६. **न पूजनात् ५।४।६९॥** पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा।

इति समासान्ताः।

---

**अर्धर्चः**। ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे अर्धशब्दस्य पूर्वनिपाते 'ऋक्पूरब्धूः' इति अप्रत्यये गुणे रपरे सुब्लुकि 'अर्धर्चाः पुंसि च' इति पुंस्त्वे स्वादिः।

**गवाक्षः**। गो आम् अक्षि सु इति विग्रहे षष्ठीसमासे 'अक्ष्णोऽदर्शनात्' इत्यचि सुब्लुकि 'यस्येति च' इतीकारलोपे 'अवङ् स्फोटायनस्य' इत्यवङि दीर्घे प्रातिपदिकत्वात्सुः।

**सखिपथः**। सख्युः पन्था इति विग्रहे समासे सुप् लुकि अप्रत्यये टिलोपे प्रातिपदिककार्यम्।

**प्राध्वः**। प्रगतोऽध्वानमिति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे' इति समासे 'उपसर्गादध्वनः' इत्यचि 'नस्तद्धिते' इति टिलोपे दीर्घे स्वादिः।

**सुराजा**। शोभनो राजेति विग्रहे 'कुगतिप्रादयः' इति समासे 'राजाहः सखिभ्यष्टच्' इति प्राप्तटचः 'न पूजनात्' इति निषेधे सुब्लुकि प्रातिपदिककार्यम्।

**अतिराजा**। राजानमतिक्रान्त इति विग्रहे 'अत्यादय' इति समासे टचो निषेधे स्वादिः।

इति समासान्ताः।

---

९९३. जिस समास के अन्त में ऋक् पूर अप् पथिन् शब्द परे हों उनका अन्तावयव अप्रत्यय होता है अक्ष भिन्न अर्थ में।

९९४. चक्षु पर्याय वाचक शब्दों को छोड़कर अक्षि शब्द से समासान्त अच् प्रत्यय होता है।

९९५. उपसर्ग से परे अध्वन् शब्द से समान्सात अच् प्रत्यय होता है।

९९६. पूजनार्थक शब्द से परे किसी भी शब्द से समासान्त प्रत्यय नहीं होते।

## अथ तद्धिताः तत्रादौ साधारणाः ॥

९९७. **समर्थानां प्रथमाद्वा** ४।१।९२ ॥ इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् ।

९९८. **अश्वपत्यादिभ्यश्च** ४।१।८४ ॥ एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् ।

९९९. **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ४।१।८५ ॥ दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा ।

१०००. **हलो यमां यमि लोपः** ८।४।६४ ॥ इति यलोपः । आदित्यः । प्राजापत्यः (देवाद्यञञौ) दैव्यम् । दैवम् (बहिषष्टिलोपो यञ्च) ।

---

**आश्वपतम्** । अश्वपतेरपत्यादि इति विग्रहे अश्वपतिशब्दात् 'अश्वपत्यादिभ्यश्च' इत्यणि 'तद्धितेष्वचामादेः' इत्यादेरचो वृद्धौ 'यस्येति च' इतीकारलोपे प्रातिपदिककार्यम् ।

**दैत्यः** । दितिशब्दादपत्येऽर्थे 'दित्यदित्यादित्य' इति ण्ये आदिवृद्धौ इलोपे प्रातिपदिकत्वात्सुः ।

**आदित्यः** । अदितिशब्दात् ण्ये आदिवृद्धौ इलोपे तत्सिद्धिः । यद्वा आदित्यशब्दात् ण्यप्रत्यये 'यस्येति च' इति अलोपे 'हलो यमां यमि लोपः' इति यलोपे प्रातिपदिककार्यम् ।

**दैव्यम्** । देवस्यापत्यादीति विग्रहे 'देवाद्यञञौ' इति यञि आदिवृद्धौ अलोपे दैव्यमिति, अञि तु दैवमिति ।

---

९९७. समर्थ प्रथमात् और वा इन तोनों पदों का अधिकार चलता है प्राग्दिशीय अधिकार तक ।

९९८. अश्वपत्यादिगण पठित शब्दों से अण् प्रत्यय होता है प्राग्दिव्यतीय अर्थों में ।

९९९. दिति अतिति आदित्य और पति उत्तर पद शब्दों से ण्य् प्रत्यय होता है प्राग्दिव्यतीय अर्थों में ।

१०००. हल् से परे यम का लोप होता है यम परे रहते । (वा०) देव शब्द से यञ् और अञ् प्रत्यय होते हैं (वा०) बहिष शब्द के टि का लोप होता है यञ् प्रत्यय भी होता वै (वा०) ईकक् प्रत्यय भी होता है ।

बाह्यः । ( ईकक्च ) ।

**१००१. किति च ७।२।११८ ॥** किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । बाहीकाः । ( गोरजादिप्रसङ्गे यत् ) गोरपत्यादि गव्यम् ।

**१००२. उत्सादिभ्योऽञ् ४।१।७७ ॥** औत्सः ।

इत्यपत्यादिविकारान्तार्थसाधारणाः ॥ १ ॥



---

**बाह्यः ।** बहिर्भव इति विग्रहे बहिष्शब्दात् 'बहिषष्टिलोपो यञ्च' इति यञि टिलोपे च आदिवृद्धौ प्रातिपदिककार्यम् ।

**बाहीकः ।** बहिर्भव इति विग्रहे बहिष्शब्दाद् 'ईकक् च' इति ईकक्प्रत्यये टिलोपे च 'किति च' इत्यादेरचो वृद्धौ प्रातिपदिकत्वात्स्वादिः ।

**गव्यम् ।** गोरपत्यादीति विग्रहे 'गोरजादिप्रसङ्गे यत्' यति अवादेशः ।

**औत्सः ।** उत्सस्यापत्यादि इति विग्रहे अञि आदिवृद्धौ प्रातिपदिककार्यम् ।

इत्यपत्यादिविकारान्तार्थाः साधारणाः प्रत्ययाः ।



---

१००१. कित् तद्धित् प्रत्यय परे रहते आदि अच् को वृद्धि होती है । (वा०) अजादि प्रत्यय के प्रसंग में गो शब्द से अपत्यादि अर्थों में यत् प्रत्यय होता है ।

१००२. उत्सादिगण पठित शब्दों से अञ् प्रत्यय होता है ।

## अथापत्याधिकारः ॥

१००३. **स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** ४।१।८७ ॥ धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पौंस्नः ।

१००४. **तस्यापत्यम्** ४।१।९२ ॥ षष्ठ्यान्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ।

१००५. **ओर्गुणः** ६।४।१४६ ॥ उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।

१००६. **अपत्यं पौत्रप्रभृति गोत्रम्** ४।१।१६२ ॥ अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ।

१००७. **एको गोत्रे** ४।१।९३ ॥ गोत्रे एक एवापत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ।

---

**स्त्रैणः** । स्त्रिया अपत्यम्, स्त्रीषु भवः, स्त्रीणां समूहः, स्त्रीभ्य आगतः, स्त्रीभ्यो हितः इत्यादिविग्रहे विग्रहोक्तषष्ठ्याद्यन्तस्त्रीशब्दात् 'स्त्रीपुंसाभ्याम्' इति नञ्प्रत्ययेऽनुबन्धलोपे तद्धितान्तत्वात्प्रतिपदिकत्वेन 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि आदिवृद्धौ णत्वे सुः ।

**पौंस्नः** । पुंसोऽपत्यमित्यादि विग्रहे पुंस्शब्दात्स्नञि 'स्वादिषु' इति पदत्वात्पुंसः सकारस्य संयोगान्तलोपे आदिवृद्धौ प्रातिपदिककार्यम् ।

**औपगवः** । उपगोरपत्यमितिविग्रहे षष्ठ्यन्तात् उपगुशब्दात् 'तस्यापत्यन्' इति अणि सुब्लुकि आदिवृद्धौ 'अचो ञ्णिति' इति वृद्धिं बाधित्वा 'ओर्गुणः' इति गुणेऽवादेशः । **उपगोर्गोत्रापत्यमितिविग्रहे** तु उपगुशब्दात् 'तस्यापत्यम्' इत्यणि निष्पन्नात् औपगवशब्दात् 'अत इञ्' इति इञि प्राप्ते 'एको गोत्रे' इति नियमात् उपगुशब्दादणेव भवति, न तु अणि कृते तत इञपीति बोध्यम् ।

---

१००३. धान्यानां भवनं इससे पूर्ववर्ती अर्थों में स्त्री और पुंस शब्द से क्रम से नञ् और स्नञ् प्रत्यय होते हैं ।

१००४. कृत सन्धि समर्थ षष्ठ्यन्त शब्दों से अपत्य अर्थ में पूर्व कथित और आगे कहे जाने वाले प्रत्यय विकल्प से होते हैं ।

१००५. उ वर्णान्त भ संज्ञक को गुण होता है तद्धित प्रत्यय परे रहते ।

१००६. अपत्य रूप में विवक्षित पौत्र आदि की गोत्र संज्ञा होती है ।

१००७. गोत्र में एक ही अपत्य प्रत्यय होता है ।

**१००८. गर्गादिभ्यो यञ्** ४।१।१०५ ॥ गोत्रापत्ये गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः।

**१००९. यञञोश्च** २।४।६४ ॥ गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः।

**१०१०. जीवति तु वंश्ये युवा** ४।१।१६३ ॥ वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात्।

**१०११. गोत्राद्यून्यस्त्रियाम्** ४।१।९४ ॥ यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा।

**१०१२. यञिञोश्च** ४।१।१०१ ॥ गोत्रे यौ यञिञौ तदन्तात्फक् स्यात्।

**१०१३. आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ७।१।२ ॥ प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् स्युः। गर्गस्य युवापत्यं-गार्ग्यायणः। दाक्षायणः।

---

**गार्ग्यः**। गर्गशब्दाद् गोत्रापत्येर्थे यञि आदिवृद्धौ 'यस्येति च' इति अलोपे सुः।

**गार्गाः**। गर्गस्य गोत्रापत्यानीति विग्रहे यञि 'यञञोश्च' इति यञो लुकि जस्।

**गार्ग्यायणः**। गर्गस्य युवापत्यमिति विग्रहे यञि आदिवृद्धौ अलोपे गार्ग्य इत्यस्माद् 'यञिञोश्च' इति फकि 'आयनेयी' इति फस्यायन्नादेशे अलोपे णत्वे प्रातिपदिकत्वात्सुः।

**दाक्षायणः**। दक्षस्य युवापत्यमिति विग्रहे 'अत इञ्' इति इञि अलोपे आदिवृद्धौ 'यञिञोश्च' इति फकि फस्यायन्नादेशे इलोपे णत्वे प्रातिपदिककार्यम्।

---

१००८. गर्गादि गण पठित शब्दों से गोत्रापत्य अर्थ में यञ् प्रत्यय होता है।

१००९. गोत्र में जो यञन्त और अञन्त शब्दावयव यञ् और अञ् का लोप होता है यदि तत् कृत बहुत्व प्रद्योत होता हो स्त्री को छोड़कर।

१०१०. वंश में होनेवाले पिता आदि के जीवित रहने पर पौत्रादि के अपत्य जो चतुर्थ प्रपौत्रादि उनकी युवसंज्ञा होती है।

१०११. युवापत्य अर्थ में गोत्र प्रत्ययान्त से ही प्रत्यय होते हैं स्त्री वाचक शब्दों से युव संज्ञा नहीं होती।

१०१२. गोत्र में जो यञ् और इञ् प्रत्यय तदन्त शब्द से फक् प्रत्यय होता है।

१०१३. प्रत्यय के आदि में स्थित फ प्रत्यय के स्थान में आयन्, ढ के स्थान में एय्, ख के स्थान में ईन्, छ के स्थान में ईय, घ के स्थान में इय आदेश होते हैं।

**१०१४. अत इञ् ४।१।९५ ॥** अपत्येऽर्थे । दाक्षिः ।

**१०१५. बाह्वादिभ्यश्च ४।१।९६ ॥** बाहविः । औडुलोमिः । ( लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः ) उडुलोमाः । आकृतिगणोऽयम् ।

**१०१६. अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४।१।१०४ ॥** एभ्योऽञ् गोत्रे । ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे । बिदस्य गोत्रं बैदः । बैदौ । बिदाः । पुत्रस्यापत्यं पौत्रः । पौत्रौ । पौत्राः । एवं दौहित्रादयः ।

**१०१७. शिवादिभ्योऽण् ४।१।११२ ॥** अपत्ये । शैवः । गाङ्गः ।

**१०१८. ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४ ॥** ऋषिभ्यः—वासिष्ठः । वैपूवामित्रः । अन्धकेभ्यः-श्वाफल्कः । वृष्णिभ्यः-वासुदेवः । कुरुभ्यः-नाकुलः । साहदेवः ।

---

**दाक्षिः** । दक्षस्यापत्यमिति विग्रहे इञि अलोपे आदिवृद्धौ सुः ।

**बाहविः** । बाहोरपत्यमिति विग्रहे इञि 'ओर्गुणः' इति गुणेऽवादेशः ।

**औडुलोमिः** । उडूनि नक्षत्राणीव लोमानि यस्य स उडुलोमाः । उडुलोम्नोऽपत्यमिति विग्रहे इञि आदिवृद्धौ 'नस्तद्धिते' इति टिलोपः ।

**उलोडुमाः** । उडुलोम्नोऽपत्यानीति विग्रहे अकारप्रत्यये टिलोपे प्रातिपदिकत्वाज्जस ।

**वैदः** । विदस्य गोत्रापत्यमिति विग्रहे 'अनृष्यानन्तर्ये' इत्यञि अलोपे आदिवृद्धिः ।

**शैबः** । शिबस्यापत्यमिति विग्रहे अणि आदिवृद्धौ अलोपः ।

**गाङ्गः** । गङ्गाया अपत्यमिति विग्रहे अणि आदिवृद्धौ दिलोपः ।

**वासिस्ठः** । वसिष्ठस्यापत्यमिति विग्रहेऽणि आदिवृद्धौ अलोपः ।

---

१०१४. षष्ठयन्त समर्थ अकारान्त प्रातिपदिक से अपत्य अर्थ में इञ् प्रत्यय होता है ।

१०१५. षष्ठयन्त समर्थ बाह्वादिगणपठित शब्दों से इञ् प्रत्यय होता है अपत्य अर्थ में ।

( वा० ) लोमत् शब्दान्त से अपत्य अर्थ में बहुवचन में अकार होता है ।

१०१६. विदादि गणपठित ऋषिवाचक शब्दों से गोत्र अर्थ में और अनृषि वाचक शब्दों से अनन्तर अपत्य अर्थ में अञ् प्रत्यय होता है ।

१०१७, षष्ठयन्त समर्थ शिवादि गण पठित शब्दों से अपत्य अर्थ में अण् प्रत्यय होता है ।

१०१८. षष्ठयन्त समर्थ ऋषिवाचक शब्द और अन्धक, वृष्णि, कुरु इन कुलों में उत्पन्नों के वाचक शब्दों से अपत्य अर्थ में अण् प्रत्यय होता है ।

**१०१९. मातुरुत्संख्यासंभद्रपूर्वायाः ४।१।११५ ॥** संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । साम्मातुरः । भाद्रमातुरः ।

**१०२०. स्त्रीभ्यो ढक् ४।१।१२० ॥** स्त्रीप्रत्ययान्तेभ्यो ढक् । वैनतेयः ।

**१०२१. कन्यायाः कनीन च ४।१।११६ ॥** चादण् । कानीनो व्यासः कर्णश्च ।

**१०२२. राजश्वशुराद्यत् ४।१।१३७ ॥** ( राज्ञो जातावेवेति वाच्यम् ) ।

**१०२३. ये चाभावकर्मणोः ६।४।१६८ ॥** यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । जातावेवेति किम्—

---

**द्वैमातुरः** । द्वयोर्मात्रोरपत्यमिति विग्रहे 'तद्धितार्थोत्तर' इति समासे सुब्लुकि द्विमातृशब्दात् 'मातुरुत्' इत्यणि ऋकारस्य उकारे च रपरत्वे आदिवृद्धौ प्रातिपदिकत्वात्सुः ।

**षाण्मातुरः** । षण्णां मातॄणामपत्यमिति विग्रहे 'तद्धितार्थ' इति समासे सुब्लुकि षस्य जश्त्वेन डकारे 'यरोऽनुनासिके' इति डस्य णत्वे षण्मातृशब्दादणि उत्वे रपरत्वे आदिवृद्धिः ।

**वैनतेयः** । विनताया अपत्यमिति विग्रहे 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेयी' इति ढस्य एयादेशे आलोपे 'किति च' इत्यादिवृद्धौ प्रातिपदिकत्वात्सुः ।

**कानीनः** । कन्याया अपत्यमिति विग्रहेऽणि कन्यायाः कनीनादेशे अलोपे आदिवृद्धौ सुः ।

**राजन्यः** । राज्ञोऽपत्यं जातिरिति विग्रहे 'तस्यापत्यम्' इत्यणि प्राप्ते यत्प्रत्यये

---

१०१९. संख्या, सम्, भद्र हैं पूर्व में जिसके उस मातृ शब्द के स्थान में उत् आदेश होता है और अण् प्रत्यय भी ।

१०२०. षष्ठ्यन्त समर्थ स्त्रीप्रत्ययान्त शब्दों से अपत्य अर्थ में ढक् प्रत्यय होता है ।

१०२१. षष्ठ्यन्त समर्थ कन्या शब्द से अपत्य अर्थ में अण् प्रत्यय होता है और कन्या शब्द के स्थान में कनीन आदेश भी होता है ।

१०२२. षष्ठ्यन्त समर्थ राजन् और श्वशुर शब्द से अपत्य अर्थ में यत् प्रत्यय होता है ।

( वा० ) राजन् शब्द से जाति अर्थ से ही यत् प्रत्यय हो ।

१०२३. यकारादि तद्धित प्रत्यय परे रहते अन् का प्रकृतिभाव होता है । किन्तु भाव और कर्म में नहीं ।

**१०२४. अन्** ६।४।१६७॥ अन् प्रकृत्या स्यादणि परे। राजनः। श्वाशुर्यः।

**१०२५. क्षत्राद् घः** ४।१।१३८॥ क्षत्रियः। जातावित्येव। क्षात्रिरन्यत्र।

**१०२६. रेवत्यादिभ्यष्ठक्** ४।१।१४६॥

**१०२७. ठस्येकः** ७।३।५०॥ अङ्गात्परस्य ठस्येकादेशः स्यात्। रैवतिकः।

**१०२८. जनपदशब्दात्क्षत्रियादञ्** ४।१।१६८॥ जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये। पाञ्चालः। (क्षत्रियसमानशब्दाज्जनपदात्तस्य

---

प्रकृतिभावात् टिलोपो न। अपत्यमात्रविवक्षायां तु राजन्शब्दादणि 'अन्' इति प्रकृतिभावात् टिलोपाभावे राजनः इति।

**श्वशुर्यः**। श्वशुरस्यापत्यमिति विग्रहे इनं बाधित्वा यति अलोपः।

**क्षत्रियः**। क्षत्रस्यापत्यं जातिरिति विग्रहे घप्रत्यये 'आयनेयी' इति घस्य इयादेशे अलोपे सुः। अपत्यमात्रे तु क्षत्रशब्दात् 'अत इञ्' इति इञि अलोपे आदिवृद्धौ क्षात्रिः।

**रैवतिकः**। रेवत्याः अपत्यमिति विग्रहे ठकि ठस्य इकादेशे इकारलोपे 'किति च' इत्यादिवृद्धिः।

**पाञ्चालः**। पञ्चालो नाम देशः राजा च। तस्य राज्ञोऽपत्यमिति विग्रहे अञि आदिवृद्धो अलोपे स्वादिः। पञ्चालानां राजेति विग्रहेऽपि अञादिः।

---

१०२४. अन् को प्रकृति भाव होता है अण् प्रत्यय परे रहते।

१०२५. जाति वाचक क्षत्र शब्द से घ प्रत्यय होता है। क्षत्रिय से अन्य जाति में उत्पन्न से नहीं।

१०२६. षष्ठ्यन्त समर्थ रेवत्यादि गण पठित शब्दों से ढक् प्रत्यय होता है अपत्य अर्थ में।

१०२७. अङ्ग से परे ठक् के स्थान में इक् आदेश होता है।

१०२८. जनपद वाचक शब्द यदि क्षत्रिय वाचक भी हो तो उससे अञ् प्रत्यय होता है।

(वा०) क्षत्रिय समान शब्द यदि जनपद वाचक हो तो राजा अर्थ में अञ् प्रत्यय होता है और अपत्यवत् होता है।

(वा०) क्षत्रिय जातिवाचक पुरूशब्द से अण् प्रत्यय कहना चाहिए।

(वा०) क्षत्रिय जातिवाचक पाण्डुशब्द से अण् प्रत्यय बोलना।

राजन्यपत्यवत्) पञ्चालानां राजा पाञ्चालः। (पूरोरण् वक्तव्यः।) पौरवः। (पाण्डोर्ड्यण्।) पाण्ड्यः।

१०२९. **कुरुनादिभ्यो ण्यः** ४।१।१२७ ॥ कौरव्यः। नैषध्यः।

१०३०. **ते तद्राजाः** ४।१।१७४ ॥ अञादयस्तद्राजसंज्ञाः स्युः।

१०३१. **तद्राजस्य बहुषु तेनैवास्त्रियाम्** २।४।१७४ ॥ बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चालाः इत्यादि।

१०३२. **कम्बोजाल्लुक्** ४।१।१७५ ॥ अस्मात्तद्राजस्य लुक्। कम्बोजः। कम्बोजौ। (कम्बोजादिभ्य इति वक्तव्यम्)। चोलः। शकः। केरलः। यवनः।

इत्यपत्याधिकारः ॥ २ ॥



---

**पौरवः**। पूरोरपत्यमिति विग्रहेऽणि आदिवृद्धौ 'ओर्गुणः' इति गुणेऽवादेशादिः।

**पाण्ड्यः**। पाण्डोरपत्यमिति विग्रहे ड्यणि अनुबन्धलोपे डित्त्वात् टिलोपे सुः।

**कौरव्यः**। कुरूणां राजा कुरोरपत्यमिसि वा विग्रहे ण्ये आदिवृद्धौ गुणेऽवादेशः।

**नैषध्यः**। निषधस्यापत्यं राजा वेति विग्रहे ण्ये आदिवृद्धौ अलोपः।

**इक्ष्वाकवः**। इक्ष्वाकूणामपत्यानीति विग्रहे 'जनपदशब्दात्' इत्यञि तस्य तद्राजसंज्ञायां 'तद्राजस्य बहुषु' इति लुकि प्रातिपदिकत्वाज्जस्।

**कम्बोजः**। कम्बोजस्यापत्यमिति विग्रहेऽञि तस्य लुक्।

इत्यपत्याधिकारः।



---

१०२९. कुरु और नकारादिक्षत्रिय तथा जनपद वाचक शब्दों से ण्य प्रत्यय होता है।

१०३०. अञादि प्रत्यय तद्राजसंज्ञक होते हैं।

१०३१. बहुत्व अर्थ में तद्राज प्रत्यय का लोप होता है यदि तद्राज प्रत्ययकृत बहुत्व हो। स्त्रीलिङ्ग को छोड़कर।

१०३२. कम्बोज शब्द से परे तद्राज प्रत्यय का लोप होता है।

(वा) इस सूत्र में कम्बोजात् के स्थान में कम्बोजादिभ्यः पढना चाहिए।

## अथ रक्ताद्यर्थकाः

**१०३३. तेन रक्तं रागात्** ४।२।१ ।। अण् स्यात् । रज्यतेनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् ।

**१०३४. नक्षत्रेण युक्तः कालः** ४।२।३ ।। अण् स्यात् । (तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्) । पुष्येण युक्तं पौषमहः ।

**१०३५. लुबविशेषे** ४।२।४ ।। पूर्वेण विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः ।

**१०३६. दृष्टं साम** ४।२।७ ।। तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ।

**१०३७. वामदेवाड्ड्यड्ड्यौ** ४।२।९ ।। वामदेवेन दृष्टं साम वामदेव्यम् ।

**१०३८. परिवृतो रथः** ४।२।१० ।। अस्मिन्नर्थेऽण् प्रत्ययो भवति । वस्त्रेण परिवृतो वास्त्रो रथः ।

---

**काषायम्** । काषायेण रक्तमिति विग्रहे कषायशब्दादणि आदिवृद्धौ अलोपः ।

**पौषम्** । पुण्येण युक्तमह इति विग्रहेऽणि आदिवृद्धौ अलोपे यलोपे स्वादिः ।

**अद्य पुष्यः** । पुष्पेण युक्तः काल इति विग्रहेऽणि तस्य कालविशेषानवगमाल्लुप् ।

**वासिष्ठं साम** । वसिष्ठेन दृष्टं सामेति विग्रहे वसिष्ठशब्दादणादि ।

**वामदेव्यम्** । वामदेवेन दृष्टं सामेति ड्यत्प्रत्यये टिलोपः ।

**वास्त्रः** । वस्त्रेण परिवृत इति विग्रहेऽणि आदिवृद्धिः ।

---

१०३३. रङ्ग वाचक तृतीयान्त शब्द से रक्तं अर्थ में अण् प्रत्यय होता है ।

१०३४. तृतीयान्त नक्षत्र वाचक शब्द से युक्तः कालः अर्थ में अण् प्रत्यय होता है ।

(वा०) तिष्य और पुष्य नक्षत्र वाचक शब्दों के यकार का लोप होता है ।

१०३५. नक्षेण युक्तः; से विहित का लोप होता है यदि साठ दण्डात्मक काल का आवान्तर विशेष न प्रतीत हो तब ।

१०३६. तृतीयान्त समर्थ से दृष्टं साम इस अर्थ में अण् प्रत्यय होता है यदि वह दृष्ट साम हो तो ।

१०३७. तृतीयान्त समर्थ वामदेव शब्द से दृष्ट साम अर्थ में ड्यत् और ड्य प्रत्यय होते हैं ।

१०३८. तृतीयान्त समर्थ से परिवृत अर्थ में अण् प्रत्यय होता है यदि वह परिवृतरथ हो तब ।

१०३९. **तत्रोद्धृतममत्रेभ्यः** ४।२।१४॥ शरावे उद्धृतः शाराव ओदनः।

१०४०. **संस्कृतं भक्षाः** ४।२।१६॥ सप्तम्यन्तादण् स्यात्संकृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्राः यवाः।

१०४१. **साऽस्य देवता** ४।२।२४॥ इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्।

१०४२. **शुक्राद् घन्** ४।२।१६॥ शुक्रियम्।

१०४३. **सोमाट्ट्यण** ४।२।३०॥ सौम्यम्।

१०४४. **वाय्वृतुपित्रुषसो यत्** ४।२।३१॥ वायव्यम्। ऋतव्यम्।

---

**शारावः**। शरावशब्दादत् 'तत्रोद्धृतममत्रेभ्यः' इति अणि वृद्ध्यादि।

**भाष्ट्राः**। भ्राष्ट्रे संस्कृता इति विग्रहे भाष्ट्रशब्दादत् 'संस्कृतं भक्ष्याः' इत्यणि।

**ऐन्द्रम्**। इन्द्रो देवता अस्येति विग्रहेऽणि आदिवृद्धौ अलोपे सुः।

**पाशुपतम्**। पाशुपतिर्देवता अस्येति विग्रहे पशुपतिशब्दादणि वृद्धौ इलोपः।

**बार्हस्पत्यम्**। बृहस्पतिर्देवता अस्येति विग्रहे ण्ये आदिवृद्धौ रपरे इलोपादिः।

**शुक्रियम्**। शुक्रो देवता अस्येति विग्रहे शुक्रशब्दाद् घनि घस्य इयादेशे अलोपे स्वादिः।

**सौम्यम्**। सोमो देवता अस्येति विग्रहे ट्यणि आदिवृद्धौ अलोपादि।

**वायव्यम्**। वायुर्देवता अस्येति विग्रहे वायुशब्दाद् यत्प्रत्यये 'ओर्गुणः' इति गुणेऽवादेशादि।

**ऋतव्यम्**। ऋतुर्देवता अस्येति विग्रहे 'वाय्वृतु,' इति यति आर्गुणेऽवादेशः।

---

१०३९. सप्तम्यन्त समर्थ अमत्र वाचक शब्द से उद्धृत अर्थ में अण् प्रत्यय होता है।

१०४०. सप्तम्यन्त समर्थ शब्दों से संस्कृत अर्थ में अण् प्रत्यय होता है यदि वह संस्कृत भक्ष्य हो तब।

१०४१. प्रथमान्त समर्थ से देवता अस्य अर्थ में अण् आदि प्रत्यय होते हैं।

१०४२. प्रथमान्त समर्थ शुक्र शब्द से अस्य देवता अर्थ में घन् प्रत्यय होता है।

१०४३. प्रथमान्त समर्थ सोम शब्द से अस्य देवता अर्थ में ट्यण् प्रत्यय होता है।

१०४४. प्रथमान्त समर्थ वायु ऋतु पितृ उषस् शब्द से अस्य देवता अर्थ में यत् प्रत्यय होता है।

**१०४५. रीङ् ऋतः ७।४।२७ ॥** अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । यस्येति च । पित्र्यम् । उषस्यम् ।

**१०४६. पितृव्यमातुलमातामहपितामहाः ४।२।३६ ॥** एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । मातुः पिता मातामहः । पितुः पिता पितामहः ।

**१०४७. तस्य समूहः ४।२।३७ ॥** काकानां समूहः काकम् ।

**१०४८. भिक्षादिभ्योऽण् ४।२।३८ ॥** भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह ( भस्याऽढे तद्धिते ) इति पुंवद्भावे कृते ।

**१०४९. इनण्यनपत्ये ६।४।१६७ ॥** अनपत्यार्थेऽणि परे इन्प्रकृत्या

---

**पित्र्यम्** । पितरो देवता अस्येति विग्रहे यति ऋकारस्य रीङादेशे 'यस्येति च' इतीकारलोपे स्वादि ।

**उषस्यम्** । उषः देवता अस्येति विग्रहे यति स्वादिः ।

**पितृव्यः** । पितुर्भ्रातेति विग्रहे पितृशब्दाद् व्यत्प्रत्ययः ।

**मातुलः** । मातुर्भ्रातेति विग्रहे मातृशब्दाद् डुलच्प्रत्यये डित्त्वात् टिलोपः ।

**मातामहः** । मातुः पितेति विग्रहे मातृशब्दाद् डामहचि टिलोपः ।

**पितामहः** । पितु पितेति विग्रहे डामहचि टिलोपः ।

**काकम्** । काकानां समूह इति विग्रहे काकशब्दादणि अलोपः ।

**भैक्षम्** । भिक्षाशब्दादणि आदिवृद्धौ आलोपः ।

**गार्भिणम्** । गर्भिणीशब्दादणि 'भस्याढे तद्धिते' इति पुंवद्भावान्ङीपो निवृत्तौ 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावे आदिवृद्धौ स्वादिः ।

---

१०४५. कृत् भिन्न यकार, असार्वधातुक वकार और च्वि परे रहते ऋदन्त अङ्ग को रीङ् आदेश होता है ।

१०४६. पितृव्य, मातुल, मातामह पितामह शब्दों का निपातन किया जाता है ।

१०४७. षष्ठयन्त से समूह अर्थ में अण् प्रत्यय होता है ।

१०४८. षष्ठयन्त समर्थ भिक्षादि गण् पठित शब्दों से समूह अर्थ में अण् प्रत्यय होता है ।

( वा० ) ढ भिन्न तद्धित परे रहते भ संज्ञक को पुंवद्भाव होता है ।

१०४९. अनपत्य अर्थ में अण् परे रहते अन्को प्रकृतिभाव होता है ।

स्यात् । तेन नस्तद्धित इति टिलोपो न । युवतीनां समूहो यौवनम् ।

**१०५०. ग्रामजनबन्धुभ्यस्तल् ४।२।४३ ॥** तलन्तं स्त्रियाम् । ग्रामता । जनता । बन्धुता ( गजसहायाभ्यां चेति वक्तव्यम् ) गजता । सहायता । ( अह्नः खः क्रतौ ) । अहीनः ।

**१०५१. अचित्तहस्तिधेनोष्ठक् ४।२।४७ ॥**

**१०५२. इसुसुक्तान्तात्कः ७।३। ५१ ॥** इस् उस् उक् त एतदन्तात्परस्य ठस्य कः । साक्तुकम् । हास्तिकम् । धैनुकम् ।

**१०५३. तदधीते तद्वेद ४।२।५९ ॥**

---

**यौवनम्** । युवन्शब्दात् 'यूनस्तिः' इति तिप्रत्यये निष्पन्नयुवतिशब्दात्समूहेऽर्थे 'भिक्षादिभ्योऽण्' इत्यणि 'भस्याढे तद्धिते' पुंवद्भावात्तिप्रत्ययनिवृत्तौ आदिवृद्धौ 'अन्' इति प्रकृतिभावात् टिलोपाभावे स्वादि । युधातोः शतृप्रत्यये उवङि युवत्-शब्दात् 'उगितश्च' इति ङीपि युवतीशब्दात्तु 'अनुदात्तादेरञ्' इत्यञि 'भस्याढे' इति पुंवद्भावेन ङीपो निवृत्तौ आदिवृद्धौ यौवतमिति ।

**ग्रामता** । ग्रामाणां समूहः इति विग्रहे ग्रामशब्दात्तलि स्त्रीत्वात् टाबादि ।

**अहीनः** । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । अह्नां समूह इति विग्रहे क्रतौ विद्यमानाद् अहन्शब्दात्खप्रत्यये तस्य ईनादेशे 'अह्नष्टखोरेव' इति टिलोपः ।

**साक्तुकम्** । सक्तूनां समूह इति विग्रहे ठकि ठस्य कादेशे 'किति च' इत्यादि-वृद्धिः ।

**हास्तिकम्** । हस्तिनां समूह इति विग्रहे हस्तिन् शब्दात् ठकि ठस्येकादेशे आदिवृद्धौ टिलोपः ।

**धैनुकम्** । धेनूनां समूह इति विग्रहे धेनुशब्दात् ठकि ठस्य कादेशे आदिवृद्धिः ।

---

१०५०. षष्ठ्यन्त ग्राम जन बन्धु शब्दों से समूह अर्थ में तल् प्रत्यय होता है ।

( वा० ) षष्ठ्यन्त गज और सहाय शब्द से समूह अर्थ में तल् प्रत्यय होता है ।

( वा० ) षष्ठ्यन्त अहन् शब्द से समूह अर्थ में ख प्रत्यय होता है यदि वह समूह क्रतु का साधक हो ।

१०५१. अचित्तार्थक हस्ति, धेनु शब्दों से ठक् प्रत्यय होता है तस्य समूहः अर्थ में ।

१०५२. इस, उस, उक् त एतदन्त शब्द से परे ठक् के स्थान में क होता है ।

१०५३. द्वितीयान्त समर्थ से तदधीते, तद्वेद अर्थों में अणादि प्रत्यय होते हैं ।

**१०५४. न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ७।३।३ ॥** पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किं तु ताभ्यां पूर्वौ क्रमादैजागमौ स्तः। व्याकरणमधीते वेद वा वैयाकरणः।

**१०५५. क्रमादिभ्यो वुन् ४।२।६१ ॥** क्रमकः। पदकः। शिक्षकः। मीमांसकः।

इति रक्ताद्यर्थाः ॥ ३ ॥



## अथ चातुरर्थिकाः।

**१०५६. तदस्मिन्नस्तीति देशे तन्नाम्नि ४।२।६७ ॥** उदुम्बराः सन्त्यस्मिन्देशे–औदुम्बरो देशः।

**१०५७. तेन निर्वृत्तम् ४।२।६८ ॥** कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी।

**१०५८. तस्य निवासः ४।२।६९ ॥** शिबीनां निवासो देशः शैबः।

**१०५९. अदूरभवश्च ४।२।७० ॥** विदिशाया अदूरभवं नगरं वैदिशम्।

**१०६०. जनपदे लुप् ४।२।८१ ॥** जनपदे वाच्ये चातुरर्थिकस्य लुप्।

---

**वैयाकरणः।** व्याकरणशब्दात् 'तदधीते' इत्यणि यकारात्पूर्वमैजागमः।

**क्रमकः।** क्रममधीते वेद वेति विग्रहे क्रमशब्दाद्वुनि 'युवोरनाकौ' इति अकादेशः।

इति रक्ताद्यर्थाः।



**औदुम्बरः।** उदुम्बरशब्दादणि आदिवृद्धिः।

**कौशाम्बी।** कुशाम्बशब्दादणि अणन्तत्वात् 'टिड्ढा' इति ङीप्।

**शैबः।** शिबिशब्दादणि आदिवृद्धौ इकारलोपः।

**वैदिशम्।** विदिशाशब्दादणि आदिवृद्धौ आलोपः।

---

१०५४. पदान्त यकार वकार से परे आद्यच् को वृद्धि नहीं होती किन्तु उन दोनों से पूर्व क्रम से ऐच् आगम् होता है।

१०५५. द्वितीयान्त समर्थ क्रमादि शब्दों से अधीते और वेद अर्थो में वुन् प्रत्यय होता है।

१०५६. प्रथमान्त समर्थ से अस्मिन् अस्ति इस अर्थ में अणादि प्रत्यय होते हैं।

१०५७. तृतीयान्त समर्थ से निर्वृत्तं अर्थ में अणादि प्रत्यय होते हैं।

१०५८. षष्ठयन्त समर्थ शब्दों से निवासः अर्थ में अणादि प्रत्यय होते हैं।

१०५९. षष्ठयन्त समर्थ शब्दों से अदूर भव अर्थ में अणादि प्रत्यय होते हैं।

१०६०. जनपद वाच्य होने पर चातुरर्थिक प्रत्यय का लोप होता है।

**१०६१. लुपि युक्तवद्व्यक्तिवचने १।२५१ ॥** लुपि सति प्रकृतिवल्लिङ्ग-वचने स्तः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः।

**१०६२. वरणादिभ्यश्च ४।२।८२ ॥** अजनपदार्थ आरम्भः। वरणानाम-दूरभवं नगरं वरणाः।

**१०६३. कुमुदनडवेतसेभ्यो ड्मतुप् ४।२।८७ ॥**

**१०६४. झयः ८।२।१० ॥** झयन्तान्मतोर्मस्य वः। कुमुद्वान्। नड्वान्।

**१०६५. मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८।२।९ ॥** मवर्णावर्णान्तान्म-वर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः। वेतस्वान्।

**१०६६. नडशादा ड्ड्वलच् ४।२।८८ ॥** नड्वलः। शाद्वलः।

**१०६७. शिखाया वलच् ४।२।८९ ॥** शिखावलः।

इति चातुरर्थिकाः ॥



---

**पञ्चालाः।** पञ्चालानां निवासो जनपद इति विग्रहे 'तस्य निवासः' इत्यणि 'जनपदे लुप्' इति अणो लुपि प्रकृतिबहुवचनम्।

**वरणाः।** वरणाशब्दाद् 'अदूरभवश्च' इत्यणि तस्य 'वरणादिभ्यश्च' इति लुपि 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृतिवत् स्त्रीलिङ्गं बहुवचनञ्च।

**कुमुद्वान्।** कुमुदाः सन्ति अस्मिन्देशे इति विग्रहे ड्मतुपि अलोपे 'झयः' इति मस्य वत्वे कुमुद्वत्शब्दात्स्वादयः।

**वेतस्वान्।** वेतसाः सन्त्यस्मिन्निति विग्रहे वेतसशब्दात् ड्मतुपि अलोपे 'मादुपधायाश्च' इति मस्य वत्वे स्वादयः।

इति चातुरर्थिकाः।

---

१०६१. प्रत्यय के लोप होने पर प्रकृति के समान ही लिङ्ग वचन होते हैं।

१०६२. वरणादि गण पठित शब्दों से अदूर भव नगर अर्थ में अणादि प्रत्यय होते हैं।

१०६३. कुमुद नड वेतस शब्दों से डमतुप् प्रत्यय होते हैं।

१०६४. झअन्त से परे मतुप के मकार के स्थान में वकार होता है।

१०६५. मवर्णान्त अवर्णान्त से और मवर्ण अवर्णोपधक शब्द से और यवादि वर्जित शब्द से परे मतुप् के मकार को वकार होता है।

१०६६. नड और शाद शब्द से ड्वलच् प्रत्यय होता है।

१०६७. शिखा शब्द से वलच् प्रत्यय होता है।

## अथ शैषिकाः।

१०६८. **शेषे ४।२।९२** ॥ अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः। औपनिषदः पुरुषः। दृषदि पिष्टाः—दार्षदाः सक्तवः। चतुर्भिरुह्यं चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। 'तस्य विकार' इत्यतः प्राक् शेषाधिकारः।

१०६९. **राष्ट्राऽवारपाराद्घखौ ४।२।९३** ॥ आभ्यां क्रमाद् घखौ स्तः शेषे। राष्ट्रे जातादिः—राष्ट्रियः। अवारपारीणः। ( अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्। ) अवारीणः। पारीणः। पारावारीणः। इह प्रकृतिविशेषाद् घादयष्ट्युटच्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते।

१०७०. **ग्रामाद्यखञौ ४।२।९४** ॥ ग्राम्यः। ग्रामीणः ॥

---

**चाक्षुषम्**। चक्षुषा गृह्यते इति विग्रहे चक्षुष्शब्दात् 'शेषे' इत्यणि आदिवृद्धिः।

**श्रावणः**। श्रवणेन गृह्यते इति विग्रहे श्रवणशब्दादणि आदिवृद्धौ अलोपे स्वादिः।

**औपनिषदः**। उपनिषदा गृह्यते इति विग्रहे उपनिषद्शब्दादणि आदिवृद्धौ सुः।

**दार्षदाः**। दृषद्शब्दादणि आदिवृद्धौ रपरत्वे प्रातिपदिकत्वाज्जस्।

**चातुरम्**। चतुर्शब्दादणि आदिवृद्धिः।

**चातुर्दशम्**। चतुर्दशीशब्दादणि आदिवृद्धौ ईकारलोपः।

**राष्ट्रियः**। राष्ट्रशब्दाद् घप्रत्यये घस्य इयादेशे अलोपः।

**अवारपारीणः**। अवारपारे जात इति विग्रहे अवारपारशब्दात् खे खस्य ईनि अलोपे णत्वम्।

**ग्राम्यः**। ग्रामे जातादिरिति विग्रहे यप्रत्यये अलोपः।

**ग्रामीणः**। ग्रामशब्दाज्जाताद्यर्थे खे तस्य इनादेशे अलोपे णत्वादि।

---

१०६८. अपत्य अर्थ से लेकर चातुरर्थिक तक से अन्य अर्थ को शेष कहते हैं। उनसे अणादि प्रत्यय होते हैं।

१०६९. राष्ट्र और अवारपार शब्दों से क्रम से घ और ख प्रत्यय होते हैं। शेष अर्थों में,

( वा० ) अवार और पार तथा विपरीत पारावार शब्द से ख प्रत्यय होते हैं।

१०७०. पञ्चम्यन्त ग्राम शब्द से य और खञ् प्रत्यय होते है।

**१०७१. नद्यादिभ्यो ढक्** ४।२।९७ ॥ नादेयम् । माहेयम् । वाराणसेयम् ।

**१०७२. दक्षिणापश्चात्पुरसस्त्यक्** ४।२।९८ ॥ दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ।

**१०७३. द्युप्रागपागुदक्प्रतीचो यत्** ४।२।१०१ ॥ दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ।

**१०७४. अव्ययात्त्यप्** ४।२।१० ॥ ( अमेहक्वतसित्रेभ्य एव ) अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । ( त्यब्नेर्ध्रुव इति वक्तव्यम् ) । नित्यः ।

**१०७५. वृद्धिर्यस्याचामादिस्तद् वृद्धम्** १।१।७३ ॥ यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् ।

---

**नादेयम्** । नद्यां जातादि इति विग्रहे नदीशब्दाद् ढकि ढस्य एयि 'किति च' इत्यादिवृद्धौ 'यस्येति च' इति ईकारलोपः ।

**माहेयम्** । मह्यां जात इति विग्रहे महीशब्दाद् ढक् ।

**वाराणसेयम्** । वाराणस्यां जातादीति विग्रहे वाराणसीशब्दाद् ढगादि ।

**दाक्षिणात्यः** । दक्षिणेत्याजन्तमव्ययम् । दक्षिणा जातादि इति विग्रहे दक्षिणाशब्दात् त्यकि आदिवृद्धिः ।

**दिव्यम्** । दिवि जातादीति विग्रहे दिवशब्दात् 'द्युप्रागपागुदक्'—इति यत् ।

**प्राच्यम्** । प्राचि जातादीति विग्रहः । प्रपूर्वादञ्चधातोः क्विनि तस्य लोपे 'द्युप्राग' इति यति 'अनिदिताम्' इति नलोपे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घे स्वादि ।

**अमात्यः** । अमा 'अन्तिकसहार्थयोः । अमा भवो जातो वेति विग्रहे अमाशब्दात्त्यप् ।

---

१०७१. नद्यादि गण पठित शब्दों से ढक् प्रत्यय होता है

१०७२. दक्षिणा पश्चात् और पुरस् शब्द से त्यक् प्रत्यय होता है ।

१०७३. दिव, प्राक्, अपाक्, उदक् और प्रतीच् शब्दों से यत् प्रत्यय होता है।

१०७.४ अव्ययों से त्यप् प्रत्यय होता है ।

( वा० ) अम, इह, क्व, तस, त्र अव्ययों से ही त्यप् प्रत्यय होता है ।

( वा० ) ध्रुव अर्थ में नी शब्द से त्यप् प्रत्यय होता है।

१०७५. जिस समुदाय के अचों के मध्य में आदि अच् को वृद्धि हो उसकी वृद्ध संज्ञा होती है ।

१०७६. **त्यदादीनि च १।१।७४ ॥** वृद्धसंज्ञानि स्युः ।

१०७७. **वृद्धाच्छः ४।२।११४ ॥** शालीयः । मालीयः । तदीयः । ( वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ) देवदत्तीयः । देवदत्तः ।

१०७८. **गहादिभ्यश्च ४।२।१३८ ॥** गहीयः ।

१०७९. **युष्मदस्मदोरन्यतरस्यां खञ् च ४।३।१ ॥** चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वायं युष्मदीयः । अस्मदीयः ।

१०८०. **तस्मिन्नणि च युष्माकास्माकौ ४।३२ ॥** युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ।

१०८१. **तवकममकावेकवचने ४।३।३ ॥** एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च । तावकीनः । तावकः । मामकीनः । मामकः । छे तु ।

---

**शालीयः** । शालायां जातादिरिति विग्रहे शालाशब्दस्य वृद्धसंज्ञायां 'वृद्धाच्छः' इति छप्रत्यये छस्य ईयि आलोपे सुः ।

**गहीयः** । गहो देशविशेषः । तत्र जातादिरिति विग्रहे 'गहादिभ्यश्च' इति छः ।

**युष्मदीयः** : युष्मद्शब्दात् छप्रत्यये छस्य ईय् ।

**यौष्माकीणः** : युष्मदः खञि खस्य ईनादेशे युष्मदो युष्माकादेशे अलोपे आदिवृद्धौ णत्वे सुः ।

**तावकीनः** । तवायमिति विग्रहे युष्मदः खञि तस्य ईनि युष्मदस्तवकादेशे अलोपे आदिवृद्धिः ।

---

१०७६. त्यदादि गण, पठित शब्दों की वृद्ध संज्ञा होती है ।

१०७७. वृद्ध संज्ञक शब्दों से छ प्रत्यय होता है ।

( वा० ) नाम वाचक शब्दों की वृद्ध संज्ञा होती है ।

१०७८. गहादि गण पठित शब्दों से छ प्रत्यय होता है ।

१०७९. युष्मद्, अस्मद् शब्द को विकल्प से खञ् और छ प्रत्यय होते हैं ।

१०८०. युष्मद्, अस्मद् शब्दों को युष्माक् अस्माक् आदेश होते है खञ् और अण् परे रहते ।

१०८१. एकार्थवाची युष्मद् अस्मद् शब्दों के स्थान में क्रम से तवक ममक आदेश होते है खञ् और अण् परे रहते ।

१०८२. **प्रत्ययोत्तरपदयोश्च ७।२।९८ ॥** मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः।

१०८३. **मध्यान्मः ४।३।८ ॥** मध्यमः।

१०८४. **कालाट्ठञ् ४।३।११ ॥** कालवाचिभ्यष्ठञ् स्यात्। कालिकम्। मासिकम्। सांवत्सरिकम्। ( अव्ययानां भमात्रे टिलोपः )। सायम्प्रातिकः। पौनःपुनिकः।

१०८५. **प्रावृष एण्यः ४।३।१७ ॥** प्रावृषेण्यः।

१०८६. **सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४।३।२३ ॥** सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्। चिरन्तनम्। प्राह्णेप्रगेऽनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्।

१०८७. **तत्र जातः ४।४।२५ ॥** सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घाद-

---

**त्वदीयः**। तवायमितिविग्रहे युष्मदः छे छस्य ईयि युष्मदस्त्वादेशे पररूपम्।

**मध्यमः**। मध्ये जातादिरिति विग्रहे 'मध्यान्मः' इति मप्रत्ययः।

**कालिकम्**। काले भवमिति विग्रहे कालशब्दात् ठञि ठस्येकादेशे अलोपः।

**सायन्तनम्**। सायम्भवमिति विग्रहः। षोऽन्तकर्मणि इति धातोः षस्य सत्वे घञि आत्वे युकि सायशब्दात् ट्युप्रत्यये योरनादेशे तुटि निपातनात्सायशब्दस्य मान्तत्वेऽनुस्वारे परसवर्णे स्वादि। यदि तु सायमिति चिरमिति च मान्ताव्ययमाश्रित्य ट्युट्युलौ विधीयेते तदा सूत्रे सायचिरं ग्रहणं व्यर्थमेव अव्ययत्वादेव प्रयोगसिद्धेः।

---

१०८२. एकार्थवाची, युष्मद्, अस्मद् शब्द के मपर्यन्त भाग में क्रम से त्व और म आदेश होते है प्रत्यय अथवा उत्तर पद परे रहते।

१०८३. मध्य शब्द से म प्रत्यय होता है।

१०८४. काल वाचक शब्दों से ठञ् प्रत्यय होता है।

( वा० ) अव्ययो का भ संज्ञा होने पर ही टि का लोप होता है।

१०८५. प्रावृष शब्द से एण्य् प्रत्यय होता है।

१०८६. सायं, चिरं, प्राह्णे, प्रगे और अव्ययों से ट्यु और ट्युल् प्रत्यय होते हैं और तुट् भी होता है।

१०८७. सप्तम्यन्त समर्थ शब्दों से जातः अर्थ में अणादि और घादि प्रत्यय होते हैं।

यश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । उत्से जातः औत्सः । राष्ट्रे जातो राष्ट्रियः । अवारपारे जातः अवारपारीण इत्यादि ।

१०८८. **प्रावृषष्ठप्** ४।३।२६ ॥ एण्यापवादः । प्रावृषिकः ।

१०८९. **प्रायभवः** ४।३।३९ ॥ तत्रेत्येव । स्रुग्घ्ने प्रायेण बाहुल्येन भवति स्रौग्घ्नः ।

१०९०. **संभूते** ४।३।४१ ॥ स्रुग्घ्ने संभवति स्रौग्घ्नः ।

१०९१. **कोशाड्ढञ्** ४।३।४२ ॥ कौशेयं वस्त्रम् ।

१०९२. **तत्र भवः** ४।३।५३ ॥ स्रुग्घ्ने भवः स्रौग्घ्नः । औत्सः । राष्ट्रियः ।

१०९३. **दिगादिभ्यो यत्** ४।३।५४ ॥ दिश्यम् । वर्ग्यम् ।

१०९४. **शरीरावयवाच्च** ४।३।५५ ॥ दन्त्यम् । कण्ठ्यम् । ( अध्यात्मादेष्ठञिष्यते ) । अध्यात्मं भवमाध्यात्मिकम् ।

---

**प्रावृषिकः** । प्रावृषि जात इति विग्रहे ठपि ठस्येकादेशे स्वादिः ।

**कौशेयम्** । कोशे सम्भूतमितिविग्रहे कोशशब्दात् ढञि ढस्य एयि अलोपे आदिवृद्धौ स्वादि ।

**दिश्यम्** । दिशि भवमिति विग्रहे दिशशब्दाद् यत् ।

**दन्त्यम्** । दन्ते भवमिति विग्रहे दन्तशब्दाद् यति अलोपः ।

**आध्यात्मिकम्** । आत्मन् ङि अधि इति विग्रहे 'अव्ययम्' इति समासे सुब्लुकि

---

१०८८. सप्तम्यन्त प्रावृष शब्द से ठप् प्रत्यय होता है ।

१०८९. सप्तम्यन्त समर्थ शब्दों से प्रायभाव अर्थ में अणादि और घादि प्रत्यय होते हैं ।

१०९०. सप्तम्यन्त समर्थ शब्दों से सम्भूत अर्थ में अणादि और घादि प्रत्यय होते हैं ।

१०९१. सप्तम्यन्त समर्थं कोश शब्द से ढञ् प्रत्यय होता है ।

१०९२. सप्तम्यन्त समर्थ शब्दों से भव अर्थ में अणादि और घादि प्रत्यय होते हैं ।

१०९३. सप्तम्यन्त समर्थ दिगादि गण पठित शब्दों से यत् प्रत्यय होता है ।

१०९४. सप्तम्यन्त समर्थ शरीर के अवयव वाचक शब्दों से यत् प्रत्यय होता है ।

( वा० ) अध्यात्म आदि शब्दों से ठञ् प्रत्यय होता है ।

**१०९५. अनुशतिकादीनां च ७।३।२०॥** एषामुभयपदवृद्धिर्ञिति णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। पारलौकिकम्। आकृतिगणोऽयम्।

**१०९६. जिह्वामूलाङ्गुलेश्छः ४।३।६२॥** जिह्वामूलीयम्। अङ्गुलीयम्।

**१०९७. वर्गान्ताच्च ४।३।६३॥** कवर्गीयम्।

**१०९८. तत आगतः ७।३।७४॥** स्रुग्घ्नादागतः स्रौग्घ्नः।

**१०९९. ठगायस्थानेभ्यः ४।३।७५॥** शुल्कशालाया आगतः शौल्कशालिकः।

**११००. विद्यायोनिसंबन्धेभ्यो वुञ् ४।३।७७॥** औपाध्यायकः। पैतामहकः।

---

'अनश्च' इति टचि 'नस्तद्धिते' इति टिलोपे यणि अध्यात्मशब्दात् ठञि ठस्य इकादेशे आदिवृद्धौ अलोपे स्वादिः।

**आधिदैविकम्।** अधिदेवं भवमिति विग्रहे अधिदेवशब्दात् ठञि ठस्येकादेशे उभयपदवृद्धौ अलोपे प्रातिपदिककार्यम्।

**जिह्वामूलीयम्।** जिह्वामूले भवमिति विग्रहे जिह्वामूलशब्दाच्छे छस्य ईयि अलोपे स्वादिः।

**कवर्गीयम्।** कवर्गे भवमिति विग्रहे कवर्गशब्दाच्छः छस्य ईयि आलोपः।

**शौल्कशालिकः।** शुल्कशालाशब्दात् ठकि ठस्येकादेशे आदिवृद्धौ आलोपे प्रातिपदिककार्यम्।

**औपाध्यायकः।** उपाध्यायादागत इति विग्रहें उपाध्यायशब्दाद् वुञि वोरकादेशे आदिवृद्धौ अलोपे सुः।

---

१०९५. अनुशतिकादि गण पठित शब्दों के उभय पद में वृद्धि होती है ञित्, णित, कित् प्रत्यय परे रहते।

१०९६. जिह्वामूल और अङ्गुलि शब्दों से छ प्रत्यय होता है।

१०९७. सप्तम्यन्त समर्थ वर्गान्त शब्दों से छ प्रत्यय होता है।

१०९८. पञ्चम्यन्त समर्थ शब्दों से आगत अर्थ में अणादि और घादि प्रत्यय होते हैं।

१०९९. आय के स्थान वाचक शब्दों से ठक् प्रत्यय होता है।

११००. विद्या और योनि सम्बन्ध वाचक शब्दों से वुञ् प्रत्यय होता है।

**११०१ हेतुमनुष्येभ्योऽन्यतरस्याम् रूप्यः** ४।३।८१ ॥ समादागतं समरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ।

**११०२. मयट् च** ४।३।८२ ॥ सममयम् । देवदत्तमयम् ।

**११०३. प्रभवति** ४।३।८३ ॥ हिमवतः प्रभवति हैमवतो गङ्गा ।

**११०४. तद्गच्छति पथिदूतयोः** ४।३।८५ ॥ स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ।

**११०५. अभिनिष्क्रामति द्वारम्** ४।३।८६ ॥ स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् ।

**११०६. अधिकृत्यकृते ग्रन्थे** ४।३।८७ ॥ शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः ।

**११०७. सोऽस्य निवासः** ४।३।८९ ॥ स्रुघ्नो निवासोऽस्य स्रौघ्नः ।

---

**समरूप्यम्** । समशब्दाद् रूप्यप्रत्यये स्वादिः । पक्षे छे छस्य ईयि अलोपः ।

**सममयम्** । समादागतमिति विग्रहे समशब्दान्मयट् ।

**हैमवती** । हिमवतः प्रभवतीति विग्रहे हिमवत्शब्दात् अणि आदिवृद्धौ 'टिड्ढा' इति ङीप् ।

**शारीरकीयः** । शारीरकशब्दाच्छः छस्य ईयि आलोपः ।

---

११०१. हेतु और मनुष्य वाचक शब्दों से रूप्य प्रत्यय होता है विकल्प से

११०२. हेतु और मनुष्य वाचक शब्दों से मयट् प्रत्यय भी होता है ।

११०३. पञ्चम्यन्त समर्थ शब्दों से प्रभवति अर्थ में अणादि और घादि प्रत्यय होते हैं ।

११०४. द्वितीयान्त समर्थ शब्दों से गच्छति अर्थ में अणादि और घादि प्रत्यय होते हैं जो जाता है यदि वह पन्था या दूत हो तब ।

११०५. द्वितीयान्त समर्थ शब्दों से अभिनिष्क्रामति अर्थ में अणादि और घादि प्रत्यय होते हैं यदि निष्क्रमण का स्थान द्वार हो तब ।

११०६. द्वितीयान्त समर्थ शब्दों से अधिकृत्य कृते ग्रन्थे अर्थ में अणादि और घादि प्रत्यय होते हैं ।

११०७. प्रथमान्त समर्थ शब्द से अस्य निवासः अर्थ में अणादि और घादि प्रत्यय होते हैं ।

११०८. **तेन प्रोक्तम्** ४।३।१०१ ॥ पाणिनिना प्रोक्तं पाणिनीयम् ।

११०९. **तस्येदम्** ४।३।१२० ॥ उपगोरिदं औपगवम् ।

॥ इति शैषिकाः ॥ ४ ॥



## अथ विकारार्थकाः ॥

१११०. **तस्य विकारः** ४।३।१३४ ॥ ( अश्मनो विकारे टिलोपो वक्तव्यः ) । अश्मनो विकारः-आश्मः । भास्मनः । मार्तिकः ।

११११. **अवयवे च प्राण्योषधिवृक्षेभ्यः** ४।३।१३५ ॥ चाद्विकारे । मयूरस्यावयवो विकारो वा मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् ।

---

**पाणिनीयम्** । पाणिनिशब्दाच्छः छस्य ईयि टिलोपः ।

इति शैषिकाः ।



**आश्मः** । अश्मनो विकार इति विग्रहे अश्मन्शब्दादणि आदिवृद्धौ टिलोपः ।

**भास्मनः** । भस्मनो विकार इति विग्रहे भस्मन्शब्दादणि आदिवृद्धौ 'अन्' इति प्रकृतिभावात् टिलोपो न ।

**मायूरः** । मयूरशब्दात् 'प्राणिरजतादिभ्योऽञ्' इत्यञ् ।

**मौर्वम्** । मूर्वा ओषधिविशेषः । मूर्वायाः अवयवो विकारो वेति विग्रहे मूर्वाशब्दादणि । वृद्ध्यादिः ।

---

११०८. तृतीयान्त समर्थ शब्द से प्रोक्तं अर्थ में अणादि प्रत्यय होते हैं ।

११०९. षष्ठ्यन्त समर्थ शब्दों से इदं अर्थ में अणादि और घादि प्रत्यय होते हैं ।

१११०. षष्ठ्यन्त समर्थ शब्दों से विकार अर्थ में अणादि प्रत्यय होते हैं ।

( वा० ) अश्मन् शब्द से विकार अर्थ में प्रत्यय होने पर टि का लोप होता है ।

११११. षष्ठ्यन्त समर्थ प्राणि वाचक ओषधि वाचक और वृक्ष वाचक शब्दों से अवयव और विकार अर्थ में अणादि प्रत्यय होते हैं ।

१११२. **मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः** ४।३।१४३ ॥ प्रकृतिमात्रान्मयड्वा स्यात् विकारावयवयोः। अश्ममयम्। आश्मनम्। अभक्ष्येत्यादि किम्-मौद्गः सूपः! कार्पासमाच्छादनम्।

१११३. **नित्यं वृद्धशरादिभ्यः** ४।३।१४४ ॥ आम्रमयम्।

१११४. **गोश्च पुरीषे** ४।३।१४५ ॥ गोः पुरीषं गोमयम्।

१११५. **गोपयसोर्यत्** ४।३।१६० ॥ गव्यम्। पयस्यम्।

॥ इति विकारार्थाः। ( प्राग्दीव्यतीयाः ) ॥ ५ ॥



---

**अश्ममयम्**। 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः' इति वचनाद् अश्मभेदशब्दे भेदशब्दस्य लोपे अश्मन् इति। तस्यावयवो विकारोवेति विग्रहे षष्ठ्यन्त अश्मन् शब्दान्मयटि प्रातिपदिकत्त्वात्सुब्लुकि 'स्वादिषु' इति पदत्वात् नलोपे प्रातिपदिककार्यम्। मयटोऽभावपक्षे तु अणि आदिवृद्धौ 'अन्' इति प्रकृतिभावात् टिलोपाभावे आश्मनमिति। अत्र 'अश्मनो विकारे' इति टिलोपस्तु न प्रसिद्धत्वात्पाषाणवाचकस्यैव अश्मन्शब्दस्य तत्र ग्रहणात्।

**गव्यम्**। गोर्विकार इति विग्रहे षष्ठ्यन्तगोशब्दाद् यति सुब्लुकि अवादेशे प्रातिपदिककार्यम्।

इति विकारार्थाः ॥



---

१११२. विकार और अवयव अर्थो में प्रकृति मात्र से मयट् प्रत्यय होता है भाषा में विकल्प से, अभक्ष्य और आच्छादन अर्थ में।

१११३. वृद्धशरादि गण पठित शब्दों से नित्य मयट् प्रत्यय होता है।

१११४. गो शब्द से पुरीष अर्थ में मयट् प्रत्यय होता है।

१११५. गो और पयस शब्दों से यत् प्रत्यय होता है।

## अथ ठगधिकारः

१११६. **प्राग्वहतेष्ठक्** ४।४।१ ॥ तद्वहतीत्यतः प्राक् ठगधिक्रियते ।

१११७. **तेन दीव्यति खनति जयति जितम्** ४।४।२ ॥ अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः ।

१११८. **संस्कृतम्** ४।४।३ ॥ दध्ना संस्कृतं दाधिकम् । मारीचिकम् ।

१११९. **तरति** ४।४।५ ॥ तेनेत्येव । उडुपेन तरति औडुपिकः ।

११२०. **चरति** ४।४।८ ॥ तृतीयान्ताद् गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । दध्ना चरति दाधिकः ।

११२१. **संसृष्टे** ४।४।२२ ॥ दध्ना संसृष्टं दाधिकम् ।

११२२. **उञ्छति** ४।४।३२ ॥ बदराण्युञ्छति बादरिकः ।

११२३. **रक्षति** ४।४।३३ ॥ समाजं रक्षति सामाजिकः ।

---

**आक्षिकः** । तृतीयान्तात् अक्षशब्दात् ठकि सुब्लुकि ठस्येकादेशे 'किति च' इत्यादिवृद्धौ अलोपे सुः ।

**दाधिकम्** । दधिशब्दात् ठक् इकादेशे आदिवृद्धौ प्रातिपदिकत्वम् ।

**औडुपिकः** । उडुपशब्दात् ठकि आदिवृद्धौ इकादेशे अलोपः ।

**हास्तिकः** । हस्तिन्शब्दात् ठकि इके वृद्धौ टिलोपः ।

**बादरिकः** । बदरशब्दात् ठक् इकादेशे आदिवृद्धौ टिलोपः ।

**सामाजिकः** । समाजशब्दात् ठक् इकादेशे आदिवृद्धौ टिलोपः ।

---

१११६. तद् वहति सूत्र के पूर्व तक प्राग् वहतेष्ठक् का अधिकार चलता है ।

१११७. तृतीयान्त समर्थ शब्दों से दीव्यति खनति जयति जितं अर्थ में ठक् प्रत्यय होता है ।

१११८. तृतीयान्त समर्थ से संस्कृतं अर्थ में ठक् प्रत्यय होता है ।

१११९. तृतीयान्त समर्थ से तरति अर्थ में ठक् प्रत्यय होता है ।

११२०. तृतीयान्त समर्थ से गच्छति भक्षयति अर्थ में ठक् प्रत्यय होता है ।

११२१. तृतीयान्त समर्थ से संसृष्ट अर्थ में ठक् प्रत्यय होता है ।

११२२. द्वितीयान्त समर्थ से उञ्छति अर्थ में ठक् प्रत्यय होता है ।

११२३. द्वितीयान्त समर्थ से रक्षति अर्थ में ठक् प्रत्यय होता है ।

११२४. **शब्ददर्दुरं करोति** ४।३।३४ ॥ शब्दं करोति शाब्दिकः। दर्दुरं करोति दार्दुरिकः।

११२५. **धर्मं चरति** ४।४।४१ ॥ धार्मिकः। ( अधर्माच्चेति वक्तव्यम् ) अधार्मिकः।

११२६. **शिल्पम्** ४।४।५५ ॥ मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः।

११२७ **प्रहरणम्** ४।४।५७ ॥ तदस्येत्येव। असिः प्रहरणमस्य आसिकः। धानुष्कः।

११२८. **शीलम्** ४।४।६१ ॥ अपूपभक्षणं शीलमस्य-आपूपिकः।

११२९. **निकटे वसति** ४।४।७३ ॥ नैकटिको भिक्षुकः।

इति ठगधिकारः॥ ( प्राग्वहतीयाः ) ॥ ६ ॥



## अथ यदधिकारः।

११३०. **प्राग्घिताद्यत्** ४।४।७५ ॥ तस्मै हितमित्यतः प्राग् यदधिक्रियते।

११३१. **तद्वहति रथयुगप्रासङ्गम्** ४।४।७६ ॥ रथं वहति रथ्यः।

---

**मार्दङ्गिकः**। मृदङ्गशब्दात् ठकि वृद्धौ रपरे अलोपः।

इति ठगधिकारः॥



---

११२४. द्वितीयान्त समर्थ शब्द और दर्दुर शब्दों से करोति अर्थ में ठक् प्रत्यय होता है।

११२५. द्वितीयान्त समर्थ धर्म शब्द से चरति अर्थ में ठक् प्रत्यय होता है।

( वा० ) अधर्म शब्द से भी ठक् प्रत्यय कहना चाहिए।

११२६. प्रथमान्त समर्थ से शिल्पं अर्थ में ठक् प्रत्यय होता है।

११२७. प्रथमान्त समर्थ शब्दों से तदस्य प्रहरणं अर्थ में ठक् प्रत्यय होता है।

११२८. प्रथमान्त समर्थ से शीलं अर्थ में ठक् प्रत्यय होता है।

११२९. सप्तम्यन्त समर्थ निकट शब्द से वसति अर्थ में ठक् प्रत्यय होता है।

११३०. तस्मैहितं सूत्र तक यत् का अधिकार है।

११३१. द्वितीयान्त समर्थ रथ युग प्रासंग शब्द से वहति अर्थ में यत् प्रत्यय होता है।

११३२. **धुरो यड्ढकौ** ४।४।७७ ॥ हलि चेति दीर्घे प्राप्ते—युग्यः प्रासङ्ग्यः ।

११३३. **न भकुर्छुराम्** ८।२।७९ ॥ भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात् । धुर्यः । धौरेयः ।

११३४. **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु** ४।४।९१ ॥ नावा तार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ।

११३५. **तत्र साधुः** ४।४।९८ ॥ अग्रे साधुः–अग्र्यः । सामसु साधुः सामन्यः । 'ये चाभावकर्मणोरिति' प्रकृतिभावः । कर्मण्यः । शरण्यः ।

११३६. **सभाया यः** ४।४।१०५ ॥ सभ्यः ।

इति यतोऽवधिः । ( प्राग्घितीयाः ) ॥ ७ ॥



---

**धुर्यः** । धुरं वहतीति विग्रहे धुरशब्दाद् यति 'हलि च' इति दीर्घे प्राप्ते 'न भकुर्छुराम्' इति तन्निषेधे प्रातिपदिकत्वे सुः ।

**धौरेयः** । धुरं वहतीति विग्रहे धुर्शब्दाद् ढकि 'किति च' इति वृद्धौ ढस्य एयि अलोपः ।

**नाव्यम्** । नौशब्दाद् यति आवादेशः प्रातिपदिकत्वेसुवे सोरमादेशः ।

**अग्र्यः** । सप्तम्यन्ताद् अग्रशब्दाद् यति सुब्लुकि अलोपः प्रातिपदित्वे सुः ।

**सभ्यः** । सभायां साधुरिति विग्रहे सभाशब्दाद् यप्रत्यये 'यस्येति च' इत्यालोपे प्रातिपदिककार्यम् ।

इति यतोऽवधिः ।



---

११३२. द्वितीयान्त समर्थ धुर शब्द से वहति अर्थ में यत् और ढक् प्रत्यय होते हैं ।

११३३. भ संज्ञक और कुर, क्षुर की उपधा को दीर्घ नहीं होता ।

११३४. नौ, वयस्, धर्म, विष मूल, मूल, सीता और तुला से तार्य, तुल्य, प्राप्य, वध्य, आनाम्य, सम, समित और संमित अर्थों में यत् प्रत्यय होता है ।

११३५. सप्तम्यन्त समर्थ से साधु अर्थ में यत् प्रत्यय होता है ।

११३६. सप्तम्यन्त समर्थ सभा शब्द से साधु अर्थ में य प्रत्यय होता है ।

## अथ छयतोरधिकारः ।

११३७. **प्राक् क्रीताच्छः ५।१।१** ॥ तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ।

११३८. **उगवादिभ्यो यत् ५।१।२** ॥ प्राक् क्रीतादित्येव । उवर्णान्ताद् गवादिभ्यश्च यत् स्यात् । छस्यापवादः । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । ( नाभि नभं च ) । नभ्योऽक्षः । नभ्यमञ्जनम् ।

११३९. **तस्मै हितम् ५।१।५** ॥ वत्सेभ्यो हितो वत्सीयो गोधूक् ।

११४०. **शरीरावयवाद्यत् ५।५।६** ॥ दन्त्यम् । कण्ठ्यम् । नस्यम् ।

११४१. **आत्मन्विश्वजनभोगोत्तरपदात्खः ५।१।९** ॥

११४२. **आत्माध्वानौ खे ६।४।१६९** ॥ एतौ खे प्रकृत्या स्तः । आत्मने हितम्-आत्मनीनम् । विश्वजनीनम् । मातृभोगीणः ।

इति छयतोरवधिः । ( प्राक्क्रीतीयाः ) ॥ ८ ॥



---

**शङ्कव्यम्** । शङ्कुशब्दात् यति 'ओर्गुणः' इति गुणेऽवादेशः प्रातिपदिकत्वे सुः ।

**वत्सीयः** । वत्सशब्दाच्छे छस्य ईयि अलोपः प्रातिपदिकत्वे सुः ।

**दन्त्यम्** । दन्ताय हितमिति विग्रहे दन्तशब्दाद् यति अलोपः ।

**आत्मनीनम्** । आत्मन्शब्दात् खे खस्य ईनि प्रकृतिभावात् टिलोपो न ।

**मातृभोगीणः** । मातृभोगाय हितं इति विग्रहे मातृभोगशब्दात् खे खस्य ईनि अलोपे प्रातिपदिककार्यम् ।

इति छयतोः पूर्णोऽवधिः ॥



---

११३७. तेन क्रीतं सूत्र के पूर्व तक छ का अधिकार चलता है ।

११३८. तेन क्रीतं के पूर्व तक यत् का अधिकार चलता है उवर्णान्ति और गवादि से परे यत् प्रत्यय होता है ( ग ) नाभि शब्द के स्थान में नभ आदेश होता है ।

११३९. चतुर्थ्यन्त समर्थ से हित अर्थ में छ प्रत्यय होता है ।

११४०. चतुर्थ्यन्त समर्थ शरीरावयव वाचक शब्द से हितं अर्थ में यत् प्रत्यय होता है ।

११४१. चतुर्थ्यन्त समर्थ आत्मन विश्वजन भोगोत्तर पद शब्दों से हितं अर्थ में ख प्रत्यय होता है ।

११४२. आत्मन और अध्वान शब्द से ख प्रत्यय परे रहते प्रकृतिभाव होता है ।

## अथ ठञधिकारः ।

११४३. **प्राग्वतेष्ठञ्** ५।१।१८ ॥ तेन तुल्यमिति वतिं वक्ष्यति, ततः प्राक् ठञधिक्रियते ।

११४४. **तेन क्रीतम्** ५।१।३७ ॥ सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ।

११४५. **तस्येश्वरः** ५।१।४२ ॥ सर्वभूमिपृथिवीभ्यामणञौ स्तः । अनुशतिकादीनां च । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ।

११४६. **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ५।१।६९ ॥ एते रूढिशब्दा निपात्यन्ते ।

---

**साप्ततिकम्** । सप्ततिशब्दात् ठञि ठस्य इके आदिवृद्धौ इलोपः ।

**सार्वभौमः** । सर्वभूमिशब्दादणि इलोपे 'अनुशतिकादीनां च' इत्युभयपदवृद्धौ सुः ।

**पार्थिवः** । पृथिव्या ईश्वर इति विग्रहे पृथिवीशब्दादञि आदिवृद्धौ रपरत्वम् ।

**पङ्क्तीति** । एते परिमाणेऽर्थे निपात्यन्ते । तथाहि-पञ्च पादाः परिमाणमस्येत्यर्थे पञ्चन्‌शब्दात् तिप्रत्यये टिलोपे कुत्वे अनुस्वारे परसवर्णे **पङ्क्तिः** ।

**विंशतिः** । दशानां वर्ग इति विग्रहे दशन्‌शब्दात् 'पञ्चद्दशतौ वर्गे वा' इति निपातनात् डति प्रत्यये टिलोपे दशत् इति ततश्च द्वौ दशतौ परिमाणमस्य इतिं विग्रहे शतिच्प्रत्यये प्रकृतेः विन्भावेऽनुस्वारे **विंशतिः** ।

**त्रिंशत्** । त्रयः दशतः परिमाणमस्येति त्रयाणां दशतां त्रिन्भावे शत्प्रत्यये च ।

**चत्वारिंशत्** । चत्वारो दशतः परिमाणमस्येति शत्प्रत्यये प्रकृतेः चत्वारिन् आदेशः ।

**पञ्चाशत्** । पञ्च दशतः परिमाणमस्येति शत्प्रत्यये प्रकृतेः पञ्चा इत्यादेशः ।

**षष्टिः** । षट् दशतः परिमाणमस्येति तिप्रत्यये प्रकृतेः षष्‌इत्यादेशे जश्त्वाभावे ष्टुत्वम् ।

**सप्ततिः** । सप्त दशतः परिमाणमस्येति तिप्रत्यये प्रकृतेः सप्त इत्यादेशः ।

**अशीतिः** । अष्टौ दशतः परिमाणमस्येति तिप्रत्यये प्रकृते अशी इत्यादेशः ।

**नवतिः** । नव दशतः परिमाणमस्येति तिप्रत्यये प्रकृतेः नव इत्यादेशः ।

**शतम्** । दश दशतः परिमाणमस्येति तप्रत्यये प्रकृतेः श इत्यादेशः ।

---

११४३. तेन तुल्यं सूत्र के पूर्व तक ठञ् का अधिकार चलता है ।

११४४. तृतीयान्त समर्थ से क्रीतं अर्थ में ठञ् प्रत्यय होता है ।

११४५. षष्ठयन्त समर्थ से ईश्वर अर्थ में ठञ् प्रत्यय होता है ।

११४६. पंक्ति, विंशति, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति, अशीति नवति और शतं इन रूढ शब्दों का निपातन किया जाता है ।

**११४७. तदर्हति ५।१।६३** ॥ लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञा-दयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः ।

**११४८. दण्डादिभ्यो यत् ५।१।६६** ॥ एभ्यो यत् स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः ।

**११४९. तेन निर्वृत्तम् ५।१।७९** ॥ अह्ना निर्वृत्तम्—आह्निकम् ।

इति ठञोऽवधिः । ( प्राग्वतीयाः ) ॥ ९ ॥



## अथ त्वतलधिकारः ।

**११५०. तेन तुल्यं क्रिया चेद्वतिः ५।१।११५** ॥ ब्राह्मणेन तुल्यं ब्राह्मणवत् अधीते । क्रिया चेदिति किम् गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ।

**११५१. तत्र तस्येव ५।१।११६** ॥ मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवन्मैत्रस्य गावः ।

**११५२. तस्य भावस्त्वतलौ ५।१।११९** ॥ प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता । त्वान्तं क्लीबम् ।

---

**श्वैतच्छत्रिकः** । श्वेतच्छत्रशब्दात् ठञि इके वृद्धौ अलोपः ।

**आह्निकम्** । अहन्शब्दात् ठञि इके आदिवृद्धौ 'अह्नष्टखोरेव' इति नियमात् टिलोपाभावे 'अल्लोपोऽनः' इत्यल्लोपः । इति ठञोऽवधिः ।

इति ठञोवधिः ।



**गोत्वम्** । षष्ठ्यन्तगोशब्दात् त्वप्रत्यये सुब्लुकि त्वान्तस्य क्लीबत्वात्सोरम् ।

---

११४७. द्वितीयान्त समर्थ शब्दों से अर्हति अर्थ में ठञादि प्रत्यय होते हैं ।

११४८. द्वितीयान्त समर्थ दण्डादिगण पठित शब्दों से अर्हति अर्थ में यत् प्रत्यय होता है ।

११४९. तृतीयान्त समर्थ से निर्वृत्तं अर्थ में ठञ् प्रत्यय होता है ।

११५०. तृतीयान्त समर्थ से तुल्यं अर्थ में वति प्रत्यय होता है जो तुल्य है वह क्रिया हो तब ।

११५१. सप्तम्यन्त समर्थ और षष्ठ्यन्त समर्थ से इव अर्थ में वति प्रत्यय होता है ।

११५२. षष्ठ्यन्त समर्थ से भाव अर्थ में त्व और तल प्रत्यय होते हैं ।

११५३. **आ च त्वात्** ५।१।१२० ॥ ब्रह्मणस्त्व इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थमिदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रियाः भावः—स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता ।

११५४. **पृथ्वादिभ्य इमनिज्वा** ५।१।१२२ ॥ वावचनं गणादिसमावेशार्थम् ।

११५५. **र ऋतो हलादेर्लघोः** ६।४।१६१ ॥ हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु परतः । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् ।

११५६. टेः ६।४।१५५ ॥ भस्य टेर्लोप इष्ठेमेयस्सु । पृथोर्भावः प्रथिमा ।

११५७. **इगन्ताच्च लघुपूर्वात्** ५।१।१३१ ॥ इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावेऽण् प्रत्ययः । पार्थवम् । म्रदिमा । मार्दवम् ।

११५८. **वर्णदृढादिभ्यः ष्यञ्च** ५।१।१२३ ॥ चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा ।

११५९. **गुणवचनब्राह्मणादिभ्यः कर्मणि च** ५।१।१२४ ॥ चाद्भावे ।

---

**प्रथिमा** । पृथोर्भाव इति विग्रहे पृथुशब्दाद् इमनिच्प्रत्ययेऽनुबन्धलोपे ऋकारस्य रादेशे टिलोपे प्रातिपदिकत्वात्सौ दीर्घे सुलोपे नलोपः । पक्षेऽणि वृद्धौ रपरत्वे पार्थवम् ।

**शौक्ल्यम्** । शुक्लस्य भाव इति विग्रहे शुक्लशब्दात्ष्यञि वृद्धौ अलोपः ।

---

११५३. ब्रह्मणस्त्व सूत्र के पूर्व तक त्व तल का अधिकार है । अर्थात् षष्ठ्यन्त समर्थ से त्व तल प्रत्यय होते हैं ।

११५४. षष्ठ्यन्त समर्थ पृथ्वादि गण पठित शब्दों से भाव अर्थ में इमनिच् प्रत्यय होता है विकल्प से ।

११५५. हलादि और लघु ऋकार को र होता है इष्ठन् इमनिच् इयसुन् प्रत्यय परे रहते ।

११५६. भ संज्ञक के टि का लोप होता है इष्ठन् इमनिच् और इयसुन् प्रत्यय परे रहते ।

११५७. इगन्त लघु पूर्वक प्रातिपदिक से भाव अर्थ में अण् प्रत्यय होता है ।

११५८. षष्ठ्यन्त समर्थ वर्ण वाचक और दृढ़ादिगण पठित शब्दों से भाव अर्थ में यञ् प्रत्यय होता है ।

११५९. षष्ठ्यन्तसमर्थ गुण वाचक और ब्राह्मणादि गण पठित शब्दों से भाव तथा कर्म अर्थ में ष्यञ् प्रत्यय होता है ।

जडस्य भावः कर्म वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । आकृतिगणोयम् ।

११६०. सख्युर्यः ५।१।१२६ ॥ सख्युर्भावः कर्म वा सख्यम् ।

११६१. कपिज्ञात्योर्ढक् ५।१।१२७ ॥ कापेयम् । ज्ञातेयम् ।

११६२. पत्यन्तपुरोहितादिभ्यो यक् ५।१।१२८ ॥ सैनापत्यम् । पौरोहित्यम् ।

॥ इति त्वतलधिकारः ॥



## अथ भवनाद्यर्थकाः

११६३. धान्यानां भवने क्षेत्रे खञ् ५।२।१ ॥ भवत्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ।

११६४. व्रीहिशाल्योर्ढक् ५।२।२ ॥ व्रैहेयम् । शालेयम् ।

---

**जाड्यम्** । जढशब्वात्ष्यञि वृद्धौ अलोपः प्रातिपदिककार्यं ।

**सख्यम्** । सखिशव्दात् य इलोपे स्वादिः ।

इति त्वतलधिकार ॥



**मौद्गीनम्** । मुग्दशब्दात्खञि खस्य ईनि आदिवृद्धौ अलोपः ।

**व्रैहेयम्** । व्रीहीणां भवनं क्षेत्रमिति विग्रहे व्रीहिशब्दात् ढकि ढस्य एयि आदिवृद्धौ इकारलोपे स्वादिः ।

---

११६०. षष्ठ्यन्तसमर्थं सखि शब्द से भाव और कर्म में य प्रत्यय होता है।

११६१. षष्ठ्यन्तसमर्थ कपि और ज्ञाति शब्दों से भाव और कर्म अर्थो में ढक् प्रत्यय होता है ।

११६२. षष्ठ्यन्तसमर्थ पत्यन्त शब्दों और पुरोहितादि गण पठित शब्दों से भाव और कर्म अर्थो में यक् प्रत्यय होता है ।

११६३. षष्ठ्यन्तससर्थ धान्यवाची शब्दों से भवनं क्षेत्रं अर्थ में खञ् प्रत्यय होता है ।

११६४. षष्ठ्यन्त समर्थ व्रीहि शालि शब्दों से भवनं क्षेत्रं अर्थं में णक् प्रत्यय होता है।

११६५. **हैयङ्गवीनं संज्ञायाम् ५।२।२३ ॥** ह्योगोदोहशब्दस्य हियङ्गुरादेशः विकारार्थे खञ्च निपात्यते । दुह्यत इति दोहः क्षीरम् । ह्योगोदोहस्य विकारः—हैयङ्गवीनं नवनीतम् ।

११६६. **तदस्य संजातं तारकादिभ्य इतच् ५।२।३६ ॥** तारकाः संजाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् ।

११६७. **प्रमाणे द्वयसज्दघ्नञ्मात्रचः ५।२।३७ ॥** तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य—ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ।

१७६८. **यत्तदेतेभ्यः परिमाणे वतुप् ५।२।२९ ॥** यत्परिमाणमस्य यावान् । तावात् । एतावान् ।

११६९. **किमिदम्भ्यां वो घः ५।२।४९ ॥** आभ्यां वतुप् स्यात् वकारस्य घादेशश्च ।

---

**हैयङ्गवीनम्** । ह्योगोदोहशब्दात् खञि ह्योगोदोह इत्यस्य हियङ्गु इत्यादेशे खस्य ईनि आदिवृद्धौ 'ओर्गुणः' इति गुणेऽवादेशः ।

**तारकितम्** । तारकाशब्दादितचि आलोपे प्रातिपदिककार्यम् ।

**पण्डितः** । सदसद्विवेकिनी बुद्धिः पण्डा । सा संजाता अस्येति विग्रहे पण्डाशब्दादितचि आलोपः ।

**तावान्** । तत् परिमाणमस्येति विग्रहे तद्शब्दात् वतुप्यनुबन्धलोपे 'आसर्वनाम्नः' इति तदो दकारस्य आकारे दीर्घे तावत् शब्दात्स्वादिः ।

---

११६५. संज्ञा में हैयङ्गवीनम् का निपातन किया जाता है । ह्योगोदोह शब्द के स्थान में हियङ्गु आदेश होता है और विचार अर्थ में खञ् प्रत्यय का निपातन किया जाता है ।

११६६. प्रथमान्त समर्थ तारकादि गण पठित शब्दों से अस्य सञ्जातं अर्थ में इतच् प्रत्यय होता है ।

१२६७. प्रथमान्त समर्थ अस्य प्रमाणं अर्थ में द्वयसच् दघ्नच् और मात्रच् प्रत्यय होता है ।

११६८. प्रथमान्त समर्थ यत्, तत्, एतत् शब्दों से परिमाणं अस्य अर्थ में वतुप् प्रत्यय होता है ।

११६९. किम्, इदं शब्दों से वतुप् होता है और वकार के स्थान में घ आदेश होता है ।

११७०. **इदं किमोरीश्की ६।३।९०** ॥ दृग्दृशवतुषु इदम ईश् किमः की। कियान्। ईयान्।

११७१. **संख्याया अवयवे तयप् ५।२।४२** ॥ पञ्च अवयवा अस्य पञ्चतयम्।

११७२. **द्वित्रिभ्यां तयस्यायज्वा ५।२।४३** ॥ द्वयम्। द्वितयम्। त्रयम्। त्रितयम्।

११७३. **उभादुदात्तो नित्यम् ५।२।४४** ॥ उभशब्दात्तयपोऽयच् स्यात् स चाद्युदात्तः।

११७४. **तस्य पूरणे डट् ५।२।४८** ॥ एकादशानां पूरणः—एकादशः।

११७५. **नान्तादसंख्यादेर्मट् ५।२। ४९** ॥ डटो मडागमः। पञ्चानां पूरणः पञ्चमः। नान्तात्किम्—।

११७६. **ति विंशतेर्डिति ६।४।१४२** ॥ विंशतेर्भस्य तिशब्दस्य लोपो डिति परे। विंशः। असंख्यादेः किम्—एकादशः।

---

**कियान्**। किं परिमाणमस्येतिविग्रहे किम्शब्दाद्वतुपि वकारस्य घादेशे घस्य इयि किम् इयत् इति स्थिते किमः की इत्यादेशे 'यस्येति च' इतीकारलोपे कियत्-शब्दात्सौ 'उगिदचाम्' इति नुमि 'अत्वसन्तस्य' इति दीर्घे सुलोपे संयोगान्तलोपः।

**द्वयम्**। द्वौ अवयवौ यस्येतिविग्रहे द्विशब्दात्तयपि तयपोऽयजादेशे इकारलोपे स्वादिः।

**एकादशः**। एकादशन्शब्दाद् डटि टिलोपे स्वादिः।

**विंशः**। विंशतेः पूरण इतिविग्रहे विंशतिशब्दात् डटि तिलोपे अलोपे सुः।

---

११७०. दृग्, दृश् वतुप् प्रत्यय परे रहते इदं के स्थान में ईश और किम् के स्थान में की आदेश होता है।

११७१. संख्या वाचक शब्दो से अवयव अर्थों में तयय् प्रत्यय होता है।

११७२. द्वि त्रि शब्द से परे तयप् के स्थान में अयच् होता है विकल्प से।

११७३. उभ शब्द से परे तयप् के स्थान में नित्य ही अयच् आदेश होता है और वह उदात्त होता है।

११७४. षष्ठ्यन्त समर्थ संख्यावाचक शब्द से पूरण अर्थ में डट प्रत्यय होता है।

११७५. असंख्यादि नान्त शब्द से डट के स्थान में मट होता है।

११७६. भ संज्ञक विंशति शब्द के ति शब्द का लोप होता है डित् प्रत्यय परे रहते।

**११७७. षट्कतिकतिपयचतुरां थुक् ५।२।५१ ॥** एषां थुगागमः स्याड्डटि। षण्णां पूरणः षष्ठः। कतिथः। कतिपयशब्दस्यासंख्यात्वेऽप्यत एव ज्ञापकाड्डट्। कतिथः। चतुर्थः।

**११७८. द्वेस्तीयः ५।२।५४ ॥** डटोपवादः। द्वयो पूरणो द्वितीयः।

**११७९. त्रेः संप्रसारणं च ५।२५५ ॥** तृतीयः।

**११८०. श्रोत्रियंश्छन्दोऽधीते ५।२।८४ ॥** श्रोत्रियः। वेत्यनुवृत्तेश्छान्दसः।

**११८१. पूर्वादिनिः ५।२।८६ ॥** पूर्वं कृतमनेन पूर्वी।

**११८२. सपूर्वाच्च ५।२।८७ ॥** कृतपूर्वी।

**११८३. इष्टादिभ्यश्च ५।२।८८ ॥** इष्टमनेन—इष्टी। अधीती।

॥ इति भवनाद्यर्थकाः ॥ ११ ॥



---

**षष्ठः**। षष्शब्दात् डटि थुकि ष्टुत्वम्।

**श्रोत्रियः**। छन्दोऽधीते इति विग्रहे छन्दस्शब्दाद् घनि छन्दसः श्रोत्रादेशे घस्य इयि अलोपे सुः।

**कृतपूर्वी**। कृतं पूर्वमनेनेतिविग्रहे कृतपूर्वशब्दादिनिप्रत्यये अलोपे प्रातिपदिककार्यम्।

इति भवनाद्यर्थकाः ॥



---

११७७. षट्, कति, कपिपय चतुर शब्दों से थुक का आगम होता है डट परे रहते।

११७८. द्वि शब्द से तीय प्रत्यय होता है।

११७९. त्रि शब्द से तीय प्रत्यय और सम्प्रसारण होता है।

११८०. छन्दो अधीते अर्थ में श्रोत्रिय शब्द का निपातन होता है।

११८१. विद्यमान है पूर्वपद जिसके उस पूर्व शब्द से कृतम् अनेन अर्थ में इनि प्रत्यय होता है।

११८२. स पूर्वक पूर्व शब्द से भी इनि प्रत्यय होता है अनेन इस अर्थ में।

११८३. प्रथमान्त समर्थ इष्टादिगण पठित शब्दों से अनेन अर्थ में इनि प्रत्यय होता है।

## अथ मत्वर्थीयाः ।

११८४. **तदस्यास्त्यस्मिन्निति मतुप् ५।२।९४ ॥** गावोऽस्यास्मिन्वा सन्ति गोमान् ।

११८५. **तसौ मत्वर्थे १।४।१९ ॥** तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । गरुत्मान् । वसोः संप्रसारणम् । विदुष्मान् ( गुणवचनेभ्यो मतुपो लुगिष्टः ) शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ।

११८६. **प्राणिस्थादातो लजन्यतरस्याम् ५।२।९६ ॥** चूडालः । चूडावान् । प्रणिस्थात्किम्—शिखावान् दीपः । प्राण्यङ्गादेव । मेधावान् ।

११८७. **लोमादिपामादिपिच्छादिभ्यः शनेलचः ५।२।१०० ॥** लोमादिभ्यः शः । लोमशः । लोमवान् । रोमशः । रोमवान् । पामादिभ्यो नः । पामनः ( अङ्गात्कल्याणे ) । अङ्गना । ( लक्ष्म्या अच्च ) लक्ष्मणः । पिच्छा-

---

**गोमान्** । गोशब्दान्मतुपि प्रातिपदिकत्वासौ नुमि 'अत्वसन्तस्य' इति दीर्घे सुलोपे तलोपः ।

**विदुष्मान्** । विद्वांसोऽस्यास्मिन्वा सन्तीतिविग्रहे विद्वस्शब्दात् 'तदस्य' इति मतुपि 'तसौ मत्वर्थे इति भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे पूर्वरूपे प्रातिपदिककार्यम् ।

**चूडालः** । चूडा अस्त्यस्येतिविग्रहे चूडाशब्दात् लचि स्वादिः ।

**लक्ष्मणः** । लक्ष्मीरस्यास्तीतिविग्रहे लक्ष्मीशब्दात् 'लक्ष्म्या अच्च' इति नप्रत्यये अकारेऽन्तादेशे च णत्वे सुः ।

**अङ्गना** । कल्याणानि अङ्गानि अस्याः इतिविग्रहे अङ्गशब्दात् नप्रत्यये टाप् ।

---

११८४. प्रथमान्त समर्थ शब्द से अस्य अस्ति और अस्मिन् अस्ति इन अर्थों में मतुप् प्रत्यय होता है ।

११८५. तान्त, और सान्त शब्द भ संज्ञक होते हैं मत्वथींय प्रत्यय परे रहते ।

( वा० ) गुण वाचक शब्दों से परे मतुप का लोप होता है ।

११८६. प्रथमान्त समर्थ प्राणि के अङ्ग वाची आकारान्त शब्दों से अस्य अस्ति, अस्मिन् अस्ति इन अर्थों में लच् प्रत्यय होता है विकल्प से ।

११८७. प्रथमान्त समर्थ लोमादि पामादि और पिच्छादि गणपठित शब्दों से क्रम से श, न और इलच् प्रत्यय होते हैं ।

( वा० ) अङ्ग शब्द से कल्याण अर्थ में न प्रत्यय होता है ।

( वा० ) लक्ष्मी शब्द से न प्रत्यय होता है और अकार अन्तादेश भी होता है

दिभ्य इलच् । पिच्छिलः । पिच्छवान् ।

**११८८. दन्त उन्नत उरच्** ५।२।१०६ ॥ उन्नता दन्ताः सन्त्यस्य दन्तुरः ।

**११८९. केशाद्वोऽन्यतरस्याम्** ५।२।१०९ ॥ केशवः । केशी । केशिकः । केशवान् । ( अन्येभ्योऽपि दृश्यते ) । मणिवः । ( **अर्णसो लोपश्च** ) । अर्णवः ।

**११९०. अत इनिठनौ** ५।२।११५ ॥ दण्डी । दण्डिकः ।

**११९१. व्रीह्यादिभ्यश्च** ५।२।११६ ॥ व्रीही । व्रीहिकः ।

**११९२. अस्मायामेधास्रजो विनिः** ५।२।१२१ ॥ यशस्वी । यशस्वान् । मायावी । मेधावी । स्रग्वी ।

**११९३. वाचो ग्मिनिः** ५।२।१२४ ॥ वाग्ग्मी ।

---

**पिच्छिलः** । पिच्छमस्यास्तीतिविग्रहे पिच्छशब्दाद् इलचि अलोपः ।

**केशवः** । केशमस्यासीति विग्रहे केशशब्दात् वप्रत्ययः । पक्षे 'अत इनिठनौ' इति इनिठनौ प्रत्ययौ ।

**केशी** । ठनि केशिकः । मतुपि मस्य वत्वे केशवान् ।

**दण्डी** । दण्डमस्यास्तीति दण्डशब्दादिनिः ।

**व्रीही** । व्रीहिरस्यास्तीति विग्रहे व्रीहिशब्दादिनिप्रत्यये इलोपे प्रातिपदिककार्यम् । ठनि व्रीहिकः । मतुपि व्रीहिमान् ।

**यशस्वी** । यशः अस्यास्तीति यशस्शब्दाद्विनिप्रत्यये स्वादिः ।

**वाग्ग्मी** । वाक् अस्यास्तीति वाच्शब्दाद् ग्मिनिप्रत्ययः चस्य कुत्वे न गः ।

---

११८८. उन्नतोपाधिक दन्त शब्द से उरच् प्रत्यय होता है मतुप् के अर्थ में

११८९. केश शब्द से व प्रत्यय होता है विकल्प से ।

( वा० ) अन्य शब्दों से भी व प्रत्यय देखा जाता है ।

( वा० ) अरणस् शब्द से व प्रत्यय होता है और सकार का लोप होता है मत्वर्थ में ।

११९०. अकारान्त प्रातिपदिक से इन् और ठन् प्रत्यय होते हैं मत्वर्थ में ।

११९१. व्रीह्यादि गण पठित शब्दों से इन और ठन् प्रत्यय होते हैं मत्वर्थ में ।

११९२. असन्त प्रातिपदिक और माया मेघा स्रज शब्दों से विनि प्रत्यय होता है मत्वर्थ में ।

११९३. वाच शब्द से ग्मिनि प्रत्यय होता है मत्वर्थ में ।

११९४. **अर्शआदिभ्योऽच्** ५।२।१२७॥ अर्शोऽस्य विद्यते—अर्शसः। आकृतिगणोऽयम्।

११९५. **अहंशुभमोर्युस्** ५।२।१०४॥ अहंयुः—अहङ्कारवान्। शुभंयुस्तु शुभान्वितः।

इति मत्वर्थीयाः॥ १२॥



## अथ प्राग्दिशीयाः

११९६. **प्राग्दिशो विभक्तिः** ५।३।१॥ दिक्छब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः।

११९७. **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः** ५।३।२॥ किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोधिक्रियन्ते।

११९८. **पञ्चम्यास्तसिल्** ५।३।७॥ पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्।

११९९. **कु तिहोः** ७।२।१०४॥ किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः।

---

**अहंयुः**। अहमस्यास्तीतिविग्रहे अहमित्यव्ययाद् युस्।

इति मत्वर्थीयाः॥

**कुतः**। पञ्चम्यन्तकिम्शब्दात्तसिलि तद्धितान्तत्वेन प्रातिपदिकत्वात् सुपो लुकि किमः कुइत्यादेशे अव्ययत्वात्सुपो लुक्।

---

११३४. अर्शस आदि प्रादिपदिकों से अच् प्रत्यय होता है मत्वर्थ में।

११९५. अहं यह मान्त अव्यय अहंकार अर्थ में है और शुभं यह अव्यय शुभ अर्थ में है, इन दोनों से युस् प्रत्यय होता है मत्वर्थ में।

११९६. दिक् शब्देभ्यः सूत्र से पूर्व जो प्रत्यय कहे जायेंगे उनकी विभक्ति संज्ञा होगी।

११९७. द्व्यादि को छोड़कर किम् सर्वनाम और बहु शब्द से प्राग्दिशीय का अधिकार है।

११९८. पञ्चम्यन्त किम् आदि शब्दों से तसिल् प्रत्यय होता है विकल्प से।

११९९. किम् शब्द के स्थान में कु आदेश होता है तकारादि और हकारादि विभक्ति परे रहते।

१२००. **इदम इश्** ५।३।३ ॥ प्राग्दिशीये परे । इतः ।

१२०१. **अन्** ५।३।५ ॥ एतदः प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः । अमुतः । यतः । बहुतः । द्वयादेस्तु-द्वाभ्याम् ।

१२०२. **पर्यभिभ्यां च** ५।३।९ ॥ अभ्यां तसिल् स्यात् । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ।

१२०३. **सप्तम्यास्त्रल्** ५।३।१० ॥ कुत्र । यत्र । तत्र । बहुत्र ।

१२०४. **इदमो हः** ५।३।११ ॥ त्रलोऽपवादः । इह ।

१२०५. **किमोऽत्** ५।३।१२ ॥ वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् । पक्षे त्रल् ।

१२०६. **क्वाति** ७।२।१०५ ॥ किमः क्वादेशः स्यादति । क्व । कुत्र ।

---

**इतः** । अस्मादितिविग्रहे इदम्शब्दात्पञ्चम्यन्तात्तसिलि सुब्लुकि इदम इशि अव्ययत्वात्सोर्लुक् ।

**अतः** । एतस्मादिति एतद्शब्दात्तसिलि एतदः अन् इत्यादेशे नलोपः ।

**अमुतः** । पञ्चम्यन्ताददस्शब्दात्तसिलि सुब्लुकि 'प्राग्दिशो विभक्तिः' तसिलो विभक्तित्वात्तस्मिन्परे 'त्यदादीनामः' इत्यत्वे पररूपे 'अदसोऽसेर्दादुदोमः' इति मुत्वे अव्ययत्वात्सोर्लुक् ।

**यतः** । यद्शब्दात्तसिलि त्यदाद्यत्वे पररूपत्वम् ।

**कुत्र** । कस्मिन्निति विग्रहे सप्तम्यन्तकिम्शब्दात् त्रलि सुब्लुकि किमः कुइत्यादेशेऽव्ययत्वात्सोर्लुक् ।

**इह** । अस्मिन्निति विग्रहे इदम्शब्दात् त्रलं बाधित्वा हप्रत्यये इदम इशि सोर्लुक् ।

**क्व** । किमः अत्प्रत्यये क्वादेशे अलोपः ।

---

१२००. प्राग्दिशीय प्रत्यय परे रहते इदं के स्थान में इश आदेश होता है ।

१२०१. प्राग्दिशीय प्रत्यय परे रहते एतत् शब्द के स्थान में अन् आदेश होता है ।

१२०२. परि, अभि उपसर्गो से तसिल् प्रत्यय होता है ।

१२०३. किम् सर्वनाम और बहु शब्दों से सप्तम्यन्त होने पर त्रल प्रत्यय होता हैं ।

१२०४. सप्तम्यन्त इदं शब्द से हप्रत्यय होता है ।

१२०५. सप्तम्यन्त किम् शब्द से अत्प्रत्यय होता है विकल्प से ।

१२०६. किम् शब्द के स्थान में क्व आदेश होता है अति प्रत्यय परे रहते ।

**१२०७. इतराभ्योऽपि दृश्यन्ते** ५।३।१४ ॥ पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तम्भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः । देवानाम्प्रियः । आयुष्मान् ।

**१२०८. सर्वैकान्यकियत्तदः काले दा** ५।३।१५ ॥ सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ।

**१२०९. सर्वस्य सोऽन्यतरस्यां दि** ५।३।६ ॥ दादौ प्राग्दिशीये सर्वस्य सो वा स्यात् । सर्वस्मिन् काले सदा । सर्वदा । अन्यदा । कदा । यदा । काले किम्—सर्वत्र देशे ।

**१२१०. इदमो र्हिल्** ५।३।१६ ॥ सप्तम्यन्तात् । काले इत्येव ।

**१२११. एतेतौ रथोः** ५।३।४ ॥ इदम्शब्दस्य एत इत् इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । अस्मिन् काले—एतर्हि काले । इह देशे ।

**१२१२. अनद्यतने र्हिलन्यतरस्याम्** ५।३।२१ ॥ कर्हि । कदा । यर्हि ।

---

**सदा** । सप्तम्यन्तसर्वशब्दात्काले दाप्रत्यये सुब्लुकि सर्व इत्यस्य स इत्यादेशः ।

**कदा** । कस्मिन्काले इति विग्रहे किम्शब्दाद् दाप्रत्यये तस्य विभक्तित्वात्तस्मिन्परे 'किमः कः' इति किमः कादेशोऽव्ययत्वात्सोर्लुक् ।

**एतर्हि** । इदम् शब्दात् र्हिलि इदमः एत इत्यादेशः ।

**कर्हि** । किमो र्हिलि किमः कादेशः ।

**यर्हि** । यदो र्हिलि त्यदाद्यत्वे पररूपत्वम् ।

---

१२०७. पञ्चमी सप्तमी से इतर विभक्त्यन्तो से भी तसिल आदि प्रत्यय होते हैं ।

१२०८. सर्व, एक, अन्य, किम् यत् तत् सप्तम्यन्त शब्दों से काल अर्थ में स्वार्थ में द प्रत्यय होता है ।

१२०९. दादि प्राग्दिशीय प्रत्यय परे रहते सर्व शब्द के स्थान में श आदेश होता है विकल्प से ।

१२१०. सप्तम्यन्त इदं शब्द से र्हिल प्रत्यय होता ।

१२११. इदं शब्द के स्थान में एत, और इत आदेश होते है, रेफादि थकारादि प्राग्दिशीय परे रहते ।

१२१२. अनद्यतन काल में वर्तमान सप्तम्यन्त किम् सर्वनाम् और बहु शब्दों से र्हिल प्रत्यय होता है विकल्प से ।

यदा। तर्हि। तदा।

१२१३. **एतदः** ५।३।५॥ एत इत् एतौ स्तो रेफादौ थादौ च प्राग्दिशीये। एतस्मिन्काले–एतर्हि।

१२१४. **प्रकारवचने थाल्** ५।३।२३॥ प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे। तेन प्रकारेण तथा। यथा।

१२१५. **इदमस्थमुः** ५।३।२४॥ थालोपवादः। ( एतदोऽपि वाच्यः )। अनेन एतेन वा प्रकारेण इत्थम्।

१२१६. **किमश्च** ५।३।२५॥ केन प्रकारेण कथम्।

इति प्राग्दिशीयाः॥ १३॥



## अथ प्रागिवीयाः।

१२१७. **अतिशायने तमबिष्ठनौ** ५।३।५५॥ अतिशयविशिष्टार्थवृत्तेः सुबन्तात् स्वार्थ एतौ स्तः। अयमेषामतिशयेनाढ्यः–आढ्यतमः। लघुतमः। लघिष्ठः।

१२१८. **तिङश्च** ५।३।५६॥ तिङन्तादतिशये द्योत्ये तमप् स्यात्।

---

**तथा**। तद्शब्दात् थालि त्यदाद्यत्वे पररूपादिः।

**इत्थम्**। इदम्शब्दाद् एतद्शब्दाद्वा थमुप्रत्ययेऽनुबन्धलोपे इत् इत्यादेशः।

इति प्राग्दिशीयाः॥

**लघिष्ठः**। अतिशयेन लघुरितिविग्रहे लघुशब्दादिष्ठनि 'टेः' इति टिलोपे सुः।

---

१२१३. एतत् शब्द के स्थान में एत और इत आदेश होते है रेफादि थकारादि प्राग्दिशीय प्रत्यय परे रहते।

१२१४. प्रकार अर्थ में वर्तमान किम् सर्वनाम बहु शब्दों से थाल प्रत्यय होता है स्वार्थ में,

१२१५. इदं शब्द से थम् प्रत्यय होता है।

( वा० ) एतत् शब्द से भी थम् प्रत्यय होता है।

१२१६. किम शब्द से भी थम् प्रत्यय होता है।

१२१७. अतिशय विशिष्ट अर्थ में वर्तमान सुबन्त से स्वार्थ में तमप् और इष्ठन् प्रत्यय होते है।

१२१८. तिङन्त से अतिशय अर्थ में तमप् प्रत्यय होता है।

१२१९. **तरप्तमपौ घः** १।१।२२ ॥ एतौ घसंज्ञौ स्तः।

१२२०. **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** ५।४।११ ॥ किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे। किन्तमाम्। प्राह्णेतमाम्। पचतितमाम्। उच्चैस्तमाम्। द्रव्यप्रकर्षे तु उच्चैस्तनस्तरुः।

१२२१. **द्विवचनविभज्योपपदे तरबीयसुनौ** ५।३।५७ ॥ द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुः—लघुतरोः। लघीयान्। उदीच्याः प्राच्येभ्यः पटुतराः पटीयांसः।

१२२२. **प्रशस्यस्य श्रः** ५।३।६० ॥ अस्य श्रादेशः स्यादजाद्योः परतः।

१२२३. **प्रकृत्यैकाच्** ६।४।१६३ ॥ इष्टादिष्वेकाच् प्रकृत्या स्यात्। श्रेष्ठः। श्रेयान्।

१२२४. **ज्य च** ५।३।६१ ॥ प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः।

१२२५. **ज्यादादीयसः** ६।४।१६० ॥ आदेः परस्य। ज्यायान्।

---

**कितमाम्**। किमस्तमपि तत आमुः अनुबन्धलोपेऽव्ययत्वात्सोर्लुक्।

**लघीयान्**। अयमनयोरतिशयेन लघुरितिविग्रहे लघुशब्दादीयसुन्प्रत्यये 'टेः' इतिटिलोपे लघीयस्शब्दात्सौ 'उगिदचाम्' इति नुमि सान्तमहतः' इति दीर्घे 'हल्ङ्याब्भ्यः' इति सुलोपे संयोगान्तलोपः।

**श्रेष्ठः**। अयमनयोरतिशयेन प्रशस्यः इतिविग्रहे प्रशस्यशब्दात् इष्ठनि प्रशस्य इत्यस्य श्रइत्यादेशे प्रकृतिभावान्न टिलोपः।

**ज्यायान्**। प्रशस्यशब्दादीयसुनि प्रशस्य इत्यस्य ज्य इत्यादेशे प्रकृतिभावात्

---

१२१९. तरप् और तमप् की घ संज्ञा होती है।

१२२०. किम् एत् ( एकार ) तिङ् और अव्यय से विहित जो घ तदन्त से आमु प्रत्यय होता है द्रव्य प्रकर्ष को छोड़कर।

१२२१. दो में से एक का अतिशय बताना हो तो उसके उपपद रहते सुबन्त और तिङन्त से तरप् और ईयसुन् प्रत्यय होते हैं।

१२२२. प्रशस्य के स्थान में श्र आदेश होता है अजादि परे रहते,

१२२३. इष्ठादि का एकाच प्रकृति के तुल्य बना रहता है।

१२२४. प्रशस्य के स्थान में ज्य आदेश होता है इष्ठन् और ईयसुन् प्रत्यय परे रहते,

१२२५. ज्य शब्द से परे ईयसुन् प्रत्यय के स्थान में आत् आदेश होता है।

१२२६. **बहोर्लोपो भू च बहोः** ६।४।१५८ ॥ बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् ।

१२२७. **इष्ठस्य यिट् च** ६।४।१५९ ॥ बहोः परस्य इष्ठस्य लोपः स्याद्यिडागमश्च । भूयिष्ठः ।

१२२८. **विन्मतोर्लुक्** ५।३।६५ ॥ विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान्-त्वचिष्ठः । त्वचीयान् ।

१२२९. **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** ५।३।६७ ॥ ईषदूनो विद्वान्-विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ।

१२३०. **विभाषा सुपो बहुच् पुरस्तात्तु** ५।३।६८ ॥ ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद् बहुज्वा स्यात्स च प्रागेव न तु परतः । ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम्—जयतिकल्पम् ।

१२३१. **प्रागिवात्कः** ५।३।७० ॥ इवे प्रतिकृतावित्यतः प्राक्काधिकारः ।

---

टिलोपाभावे ईयसुन ईकारस्य आकारे दीर्घे ज्यायस्शब्दात्सौ नुमि 'सान्त' इति दीर्घे सुलोपे संयोगान्तलोपः ।

**भूमा** । बहोर्भाव इति विग्रहे बहुशब्दात् 'पृथ्वादिभ्य इमनिज्वा' इति इमनिच्प्रत्यये इकारलोपे बहोर्भूभावे सुः ।

**भूयिष्ठः** । अयमनयोरतिशयेन बहुरितिविग्रहे बहुशब्दाद् इष्ठनि इलोपे यिट् ।

**स्रजिष्ठः** । स्रज्शब्दात् 'अस्मायामेधास्रजोविनिः' इति विनिप्रत्यये तत अतिशायने इष्ठनि विनो लुक् ।

---

१२२६. बहु शब्द से परे इम् और इयस् का लोप होता है और बहु शब्द के स्थान में भू आदेश होता ।

१२२७. बहु शब्द से परे इष्ठ का लोप होता है यिट का आगम होता है ।

१२२८. इष्ठन् और ईयसुन् प्रत्यय परे रहते विन और मतुप का लोप होता है ।

१२२९. ईषत् ऊन अर्थ में कल्पप् देश्य और देशीयर् प्रत्यय होता है ।

१२३०. ईषत् ऊन अर्थ में सुबन्त से बहुच् प्रत्यय होता है विकल्प से । यह प्रत्यय शब्द से पहले ही बैठता है बाद में नहीं ।

१२३१. इवे प्रतिकृतौ सूत्र तक क का अधिकार चलता है ।

१२३२. **अव्ययसर्वनाम्नामकच् प्राक् टेः** ५।३।७१ ॥ कापवादः । तिङश्चेत्यनुवर्तते । ( ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य ) ।

१२३३. **अज्ञाते** ५।३।७३ ॥ कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वकैः । युष्मकाभिः । युवकयोः । त्वयका ।

१२३४. **कुत्सिते** ५।३।७४ ॥ कुत्सितोऽश्वोऽश्वकः ।

१२३५. **कियत्तदो निर्धारणे द्वयोरेकस्य डतरच्** ५।३।९२ ॥ अनयोः कतरो वैष्णवः । यतरः । ततरः ।

१२३६. **वा बहूनां जातिपरिप्रश्ने डतमच्** ५।३।९३ ॥ जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः ।

इति प्रागिवीयाः ॥ १४ ॥



## अथ स्वार्थिकाः ।

१२३७. **इवे प्रतिकृतौ** ५।३।९६ ॥ कन्स्यात् । अश्व इव प्रतिकृतिरश्वकः । ( सर्वप्रातिपदिकेभ्यः स्वार्थे कन् ) । अश्वकः ।

---

**अश्वकः** । अश्वशब्दाद्‘अज्ञाते’ इति अकच् ।

**कतरः** । किम्शब्दाद् डतरचि डित्वाट्टिलोपः ।

इति प्रागिवीयाः ।

---

१२३२. अव्यय और सर्वनाम से टि के पूर्व अकच् प्रत्यय होता है ।

( वा० ) ओकार सकार भकारादि सुप परे रहते सर्वनाम शब्द से टि के पूर्व अकच् होता है । अन्यत्र सुवन्त से पूर्व अकच् होता है ।

१२३३. अज्ञात अर्थ में क प्रत्यय होता है ।

१२३४. कुत्सित अर्थ में क प्रत्यय होता है ।

१२३५. दो में से एक के अतिशय निर्धारण करने में किम् यत्, तत् शब्दो से डतरच् प्रत्यय होता है ।

१२३६. वहुतों के जातिपरि प्रश्न में डतमच् प्रत्यय होता है विकल्प से ।

१२३७. प्रतिकृति अर्थ में इव शब्द से कन् प्रत्यय होता है ।

( वा० ) सर्व प्रातिपदिकों से स्वार्थ में कन् प्रत्यय होता है ।

**१२३८. तत्प्रकृतवचने मयट्** ५।४।२१ ॥ प्राचुर्येण प्रस्तुतं प्रकृतम् । तस्य वचनं प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये प्रकृतमन्नमन्नमयम् । अपूपमयम् । द्वितीये तु अन्नमयो यज्ञः । अपूपमयं पर्व ।

**१२३९. प्रज्ञादिभ्यश्च** ५।४।३८ ॥ अण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ।

**१२४०. बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्** ५।४।४२ ॥ बहूनि ददाति बहुशः । अल्पशः । ( आद्यादिभ्यस्तसेरुपसंख्यानम् ) । आदौ आदितः । मध्यतः । अन्ततः । पार्श्वतः । आकृतिगणोयम् । स्वरेण स्वरतः । वर्णतः ।

**१२४१. कृभ्वस्तियोगे संपद्यकर्तरि च्विः** ५।४।५० ॥ ( अभूततद्भाव इति वक्तव्यम् । विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ।

**१२४२. अस्य च्वौ** ७।४।३२ ॥ अवर्णस्य ईत्स्यात् च्वौ । वेर्लोपे च्व्यन्त्वादव्ययत्वम् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् । ( अव्ययस्य च्वावीत्वं नेति वाच्यम् ) । दोषा भूयमहः । दिवाभूता रात्रिः ।

---

**दैवतः** । देवता एवेतिविग्रहे देवताशब्दादणि अदिवृद्धौ आलोपे सुः ।

**ब्रह्मीभवति** । न ब्रह्म अब्रह्म अब्रह्म ब्रह्म सम्पद्यमानं भवतीति विग्रहे ब्रह्मन्-शब्दात् च्वौ इचावितौ 'वेरपृक्तस्य' इति वलोपे नलोपे अस्य ईत्वम् ।

---

१२३८. प्रकृत वचन में प्रथमान्त प्रातिपदिक से मयट् प्रत्यय होता है ।

१२३९. प्रज्ञादिगण पठित शब्दों से अण् प्रत्यय होता है स्वार्थ में ।

१२४०. बह्वर्थक और अल्पार्थक कारकाभिधायक शब्दों से शस् प्रत्यय होता है विकल्प से स्वार्थ में ।

( वा० ) आद्यादिगण पठित शब्दों से तसि प्रत्यय भी कहना चाहिए ।

१२४१. विकार रूपता प्राप्त करने वाली प्रकृति में वर्तमान विकार शब्द से स्वार्थ में च्वि प्रत्यय होता है विकल्प से कृ भू अस्ति के योग में ।

( वा० ) यह सूत्र अभूततद्भाव अर्थात् जैसा न हो वैसा होने अर्थ में लगता है ।

१२४२. अवर्ण को ईत होता है स्वार्थ में ।

( वा० ) अव्ययों को च्वि प्रत्यय परे रहते ईत्व नहीं होता ।

१२४३. **विभाषा साति कार्त्स्न्ये ५।४।५२ ॥** च्विविषये सातिर्वा स्यात्साकल्ये।

१२४४. **सात्पदाद्योः ८।३।१११ ॥** सस्य षत्वं न स्यात्। कृत्स्नं शस्त्रमग्निः संपद्यतेऽग्निसाद्भवति दधि। सिञ्चति।

१२४५. **च्वौ च ७।४।२६ ॥** च्वौ परे पूर्वस्य दीर्घः स्यात्। अग्नीभवति।

१२४६. **अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ५।४।५७ ॥** द्व्यजेवाऽबरं न्यूनं, न तु ततो न्यूनम्। अनेकाजिति यावत्। तादृशमर्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे। ( डाचि विवक्षिते द्वे बहुलम् ) इति डाचि विवक्षिते द्वित्वम्। ( नित्यमाम्रेडिते डाचीति वक्तव्यम्। ) डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटा करोति। अव्यक्तानुकरणात्किम्–ईषत्करोति। द्व्यजवरार्धात्किम्–श्रत्करोति। अवरेति किम्–खरटखरटा करोति। अनितौ किम्—पटिति करोति। इति स्वार्थिकाः। १५।

इति तद्धिताः॥



---

**अग्निसाद्भवति**। अग्निशब्दात्सातिप्रत्यये 'सात्पदाद्योः' इति षत्वनिषेधः।

**पटपटाकरोति**। पटत्शब्दस्य 'डाचि विवक्षिते' इति द्वित्वे ततो डाचि टिलोपे नित्यमाम्रेडिते' इति तकारपकारयोः पकारः। इति स्वार्थिकाः।

इति तद्धिताः॥

---

१२४३. च्वि के विषय में साति प्रत्यय होता है विकल्प से साकल्य अर्थ में।

१२४४. पद के आदि में वर्तमान स को षत्व नहीं होता।

१२४५. च्वि प्रत्यय परे रहते पूर्व को दीर्घ होता है।

१२४६. यदि इति परे न हो तो अनेकाच अर्ध भाग वाले अव्यक्तानुकरण वाची शब्दों से कृ भू अस् इन धातुओं के योग में डाच् प्रत्यय होता है।

( वा० ) डाच् की विवक्षा में बहुलं द्वित्व होता है।

( वा० ) डाच् से परे जो आम्रेडित उससे परे पूर्व पर वर्णों को पररूप होता है नित्य ही।

## अथ स्त्रीप्रत्ययाः ।

१२४७. **स्त्रियाम्** ४।१।३ ॥ अधिकरोऽयम् । समर्थानामिति यावत् ।

१२४८. **अजाद्यतष्टाप्** ४।१।४ ॥ अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप्स्यात् । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होढा । मन्दा । विलाता । इत्यादि । गङ्गा । सर्वा ।

१२४९. **उगितश्च** ४।१।६ ॥ उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् भवती । भवन्ती । दीव्यन्ती ।

१२५०. **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ४।१।१५ ॥ अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां

---

**अजा** । अजत्वजातिविशिष्टा स्त्री इति बिग्रहे अजशब्दात् 'जातेरस्त्रीविषया-दयोपधात्' इति ङीषि प्रासे 'अजाद्यतष्टाप्' इति टापि अनुबन्धलोपे सवर्णदोर्घे सौ 'हल्ङ्याब्भ्यः' इति सुलोपः ।

**मूषिका** । 'मुष स्तेये' इति धातोः 'मुषेर्दीर्घश्च' इत्यौणादिकसूत्रेण किकंन्प्रत्यये उकारस्य दीर्घे च मूषिकशब्दः । मूषिकत्वजातिविशिष्टा स्त्रीतिविग्रहे मूषिकशब्दात् जातिलक्षणङीषं बाधित्वा टाप् ।

**बाला** । बालत्ववयोविशिष्टा स्त्री इति विग्रहे बालशब्दात् 'वयसि प्रथमे' इति ङीपि प्राप्ते टापि सवर्णदीर्घः ।

**भवती** : भाधातोः डवतुप्रत्यये टिलोपे भवत्शब्दाद् 'उगितश्च' इति ङीप् ।

**भवन्ती** । भूधातोः शतृप्रत्यय शपि गुणेऽवादेशे पररूपे भवत्शब्दात् ङीपि 'शप्श्यनोर्नित्यम्' इति नुमि भवन्तीति ।

---

१२४७. समर्थानां प्रथमाद्वा सूत्र तक स्त्रियां का अधिकार है ।

१२४८. अजादिगण पठित शब्दों और अकारान्त शब्दों का वाच्य जो स्त्रीत्व उसके द्योतन के लिए टाप् प्रत्यय होता है ।

१२४९. उगिदन्त प्रातपदिक से स्त्री में ङीप् होता है ।

१२५०. अनुपसर्जन जो टित ढ अण् अञ् द्वयसच् दघ्नच् मात्रच् तयप् ठक् ठञ् कञ् और क्वरप् प्रत्यय तदन्त और अदन्त जो प्रतिपदिक उनसे स्त्रीत्व विवक्षा में ङीप् प्रत्यय होता हैं ।

ङीप्स्यात् । कुरुचरी । नदट् नदी । देवट् देवी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । प्रास्थिकी । लावणिकी । यादृशी । इत्वरी । ( नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसं-

---

**कुरुचरी** । कुरूपपदात् चरधातोः 'चरेष्टः' इति टप्रत्यये कुरुचरशब्दात् 'टिड्ढाणञ्' इत्यादिना ङीपि 'यस्येति च' इत्यकारलोपे सुलोपः ।

**नदी** । नदट्इत्यस्य पचादिगणे टितः पाठात् स्वतः टित्त्वम् । ततश्च नद-शब्दान्ङीपि अलोपः ।

**देवट देवी**। पचादिगणे टितोऽस्य पाठात्स्वतष्टित्त्वम्' । ततश्च देवशब्दान्ङीपि अलोपे देवीति ।

**सौपर्णेयी** । सुपर्ण्याः अपत्यं स्त्री इति विग्रहे सुपर्णीशब्दात् 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेयी' इति ढस्य एयि 'यस्येति च' इतीकारलोपे 'किति च' इत्यादिवृद्धौ सौपर्णेयशब्दान्ङीपि अलोपे सुलोपः ।

**ऐन्द्री** । इन्द्रो देवता अस्याः इति विग्रहे इन्द्रशब्दात् 'सास्य देवता' इत्यणि अलोपे आदिवृद्धौ ऐन्द्रशब्दान्ङीप् ।

**औत्सी** । उत्से भवा इति विग्रहे उत्सशब्दाद् 'उत्सादिभ्योऽञ्' इत्यञि अलोपे आदिवृद्धौ औत्सशब्दान्ङीप् अलोपः ।

**ऊरुद्वयसी** । ऊरू प्रमाणमस्या इति विग्रहे ऊरुशब्दात् 'प्रमाणे द्वयसज्दघ्नञ्-मात्रचः' इति द्वयसच्प्रत्यये ऊरुद्वयसशब्दान्ङीप् ।

**पञ्चतयी** । पञ्च अवयवाः अस्याः इति विग्रहे पञ्चन्शब्दात् 'सङ्ख्याया अवयवे-तयप्' इति तयपि नलोपे पञ्चतयशब्दान्ङीपि अलोपः ।

**आक्षिकी** । अक्षैर्दीव्यतीति विग्रहे अक्षशब्दात् 'तेन दीव्यति खनति जयति जितम्' इति ठकि 'ठस्येकः' इति ठस्य इकादेशे अलोपे 'आदिवृद्धौ' आक्षिक-शब्दान्ङीपि अलोपः ।

**प्रास्थिकी** । प्रस्थः परिमाणमस्या इति विग्रहे प्रस्थशब्दात् 'तदस्य परिमाणम्' इति ठञि इके अलोपे आदिवृद्धौ प्रास्थिकशब्दान्ङीप् ।

**लावणिकी** । लवणं पण्यमस्या इति 'लवणाट्ठञ्' इति ठञि लावणिकान्ङीप् ।

**यादृशी** । यद्शब्दोपपदात् दृशधातोः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति कञि 'आ सर्वनाम्नः' इत्याकारे दीर्घे यादृशशब्दान्ङीपि' अलोपः ।

**इत्वरी** । इण्धातोः 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरपि 'ह्रस्वस्य पिति कृति तुक्' इति तुकि इत्वरान्ङीप् ।

---

( वा० ) नञ्, स्नञ्, ईकक्, ख्युन्, प्रत्यायान्तों और तरुण तलुन शब्दों से भी स्त्रीत्व विवक्षा में ङीप् होता है ।

ख्यानम् ) । स्त्रैणी । पौस्नी । शाक्तीकी । याष्टीकी । आढ्यङ्करणी । तरुणी । तलुनी ।

**१२५१. यञश्च ४।१।१६ ॥** यञन्तात् प्रातिपदिकात् स्त्रियां ङीप्स्यात् । अकारलोपे कृते ।

**१२५२. हलस्तद्धितस्य ६।४।१५० ॥** हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यात् ईति परे । गार्गी ।

**१२५३. प्राचां ष्फ तद्धितः ४।१।१७ ॥** यञन्तात् ष्फो वा स्यात् स्त्रियां स च तद्धितः ।

**१२५४. षिद्गौरादिभ्यश्च ४।१।४१ ॥** षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात् । गार्ग्यायणी ।

---

**स्त्रैणी** । स्त्रीशब्दात् 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञि वृद्धौ णत्वे स्त्रैणशब्दान्ङीपि अलोपः ।

**पौंस्नी** । पुंसः स्नञि सस्य संयोगान्तलोपे वृद्धौ पौंस्नशब्दान्ङीप् ।

**शाक्तीकी** । शक्तिः प्रहरणमस्या इति विग्रहे शक्तिशब्दात् 'शक्तियष्टयोरीकक्' इतीकक्प्रत्यये आदिवृद्धौ 'यस्येति च' इतीकारलोपे शाक्तीकशब्दान्ङीपि अलोपः ।

**आढ्यङ्करणी** । अनाढ्य आढ्यः क्रियते अनया इति विग्रहे आढ्यपूर्वात्कृञः 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति ख्युन् प्रत्यये 'युवोरनाकौ' इति योरनादेशे गुणे रपरे णत्वे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि अनुस्वारे परसवर्णे आढ्यङ्करणशब्दान्ङीपि अलोपः ।

**गार्गी** । गर्गस्यापत्यं स्त्रीति विग्रहे गर्गशब्दाद् 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ अलोपे गार्ग्यशब्दान्ङीपि अलोपे यलोपः ।

**गार्ग्यायणी** । गर्गस्यापत्यं स्त्रीतिविग्रहे गर्गाद् यञि गार्ग्यशब्दात्ष्फे फस्यायनि अलोपे णत्वे गर्ग्यायणशब्दान्ङीपि अलोपः ।

---

१२५१. यञन्त प्रतिपदिक से स्त्रीत्व विवक्षा में ङीप होता है ।

१२५२. हल से परे उपधाभूत जो तद्धित यकार उसका लोप होता है दीर्घ इकार परे रहते ।

१२५३. यञन्त शब्दों से ष्फ प्रत्यय होता है विकल्प से स्त्रीत्व की विवक्षा में और वह तद्धित प्रत्यय माना जाता है ।

१२५४. षित और गौरादिगण पठित शब्दों से स्त्रीत्व की विवक्षा में ङीप होता है ।

नर्तकी । गौरी । अनडुही । अनड्वाही । आकृतिगणोऽयम् ।

**१२५५. वयसि प्रथमे** ४।१।२० ॥ प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप्स्यात् । कुमारी ।

**१२५६. द्विगोः** ४।१।२१ ॥ अदन्ताद् द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात् त्रिफला । त्र्यनीका सेना ।

**१२५७. वर्णादनुदात्तात्तोपधात्तो नः** ४।१।३९ ॥ वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् तकारस्य नकारादेशश्च । एता, एनी । रोहिता, रोहिणी ।

**१२५८. वोतो गुणवचनात्** ४।१।४४ ॥ उदन्तात् गुणवाचिनो वा ङीष्स्यात् । मृद्वी, मृदुः ।

---

**नर्तकी** । नर्तनं शिल्पमस्या इति विग्रहे नृत्धातोः 'शिल्पिनि ष्वुन्' इति ष्वुन्प्रत्यये वोरकादेशे लघूपधगुणे रपरे नर्तकशब्दान्ङीपि अलोपः ।

**अनडुही** । अनडुहशब्दात् 'षिद्गौरादिभ्यश्च' इति ङीषि 'आमनडुहः स्त्रियां वा' इत्यामि यणि अनड्वाहीति । आमोऽभावेऽनडुहीति ।

**कुमारी** । कुमारत्ववयोविशिष्टा स्त्रीतिविग्रहे कुमारशब्दान्ङीपि अलोपः ।

**त्रिलोकी** । त्रयाणां लोकानां समाहारः इति लौकिकविग्रहः । त्रि आम् लोक आम् इत्यलौकिकविग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुकि त्रिलोकशब्दान्ङीपि अलोपः ।

**त्रिफला** । त्रयाणां फलानां समाहार इति विग्रहे 'तद्धितार्थ' इति समासे सुब्लुकि 'अकारान्तोत्तरपद' इति स्त्रीत्वात् 'अजाद्यतष्टाप्' इति टापि सवर्णदीर्घः ।

**एता** । एतवर्णविशिष्टा स्त्रीति विग्रहे चित्रवर्णवाचकाद् एतशब्दान्ङीपि तकारस्य नकारे अलोपे एनीति । ङीपोऽभावे टापि एतेति ।

**मृद्वी** । मृदुगुणविषिष्टा स्त्रीतिविग्रहे मृदुशब्दान्ङीषि यण् ।

---

१२५५. प्रथम वयोवाची अदन्त प्रातिपदिक से स्त्रीत्वविवक्षा में ङीप् होता है ।

१२५६. अदन्त द्विगु शब्दों से ङीप् प्रत्यय होता है ।

१२५७. वर्णवाची जो अनुदात्तान्त तोपध तदन्त जो अनुपसर्जन प्रातिपदिक उससे ङीप् होता है विकल्प से और उपधाभूत तकार के स्थान में नकारादेश भी होता है ।

१२५८. उदन्तगुण वाची शब्दों से ङीप् प्रत्यय होता है विकल्प से ।

१२५९. **बह्वादिभ्यश्च ४।१।४५ ॥** एभ्यो वा ङीष् स्यात् । बह्वी, बहुः । ( कृदिकारादक्तिनः ) । रात्री, रात्रिः । ( सर्वतोऽक्तिन्नर्थादित्येके ) । शकटी । शकटिः ।

१२६०. **पुंयोगादाख्यायाम् ४।१।४८ ॥** या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री गोपी । ( पालकान्तान्न )

१२६१. **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७।३।४४ ॥** प्रत्ययस्थात्कात्पूर्वस्याकारस्येकारः स्यादापि, स आप्सुपः परो न चेत् । गोपालिका । अश्वपालिका । सर्विका । कारिका । अतः किम्–नौका । प्रत्ययस्थात्किम्-शक्नोतीति शका । असुपः किम्–बहुपरिव्राजका नगरी ( सूर्याद्देवतायां

---

**बह्वी** । बहुशब्दान्ङीषि यण् ।

**रात्री** । रा दाने' इतिधातोः 'राशदिभ्यां त्रिप्' इत्योणादिके त्रिप् प्रत्यये रात्रिशब्दात् 'कृदिकारादक्तिनः' इति पाक्षिके ङीषि सवर्णदीर्घः ।

**गोपी** । गोपशब्दान्ङीषि अलोपः ।

**सर्विका** । सर्वशब्दात् टापि सवर्णदीर्घे 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकचि 'प्रत्ययस्थात्' इति ककारात्पूर्वस्याकारस्य इत्वम् ।

**कारिका** । कृधातोर्ण्वुलि 'इति वोरकादेशे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे कारकशब्दात् टापि इत्वम् ।

**नौका** । नौरेवेति विग्रहे नौशब्दात्स्वार्थे कप्रत्यये टाप् । 'प्रत्ययस्थात्' इति सूत्रे अत इत्यस्याभावे नौकेत्यत्रापीत्वं स्यादतस्तवावश्यकम् ।

**शका** । शक्लृ शक्तौ इत्यस्मात् 'नन्दिग्रहि' इति पचादित्वादच्प्रत्यये टाप् ।

---

१२५९. बह्वादि गण पठित जो शब्द उनसे ङीष होता है विकल्प से ।

( वा० ) कृत जो इकार तदन्त जो प्रतिपदिक उससे ङीष होता है विकल्प से क्तिन्नन्त को छोड़कर,

( वा० ) इकारान्त समस्त प्रतिपदिकों से ङीष होता है विकल्प से, क्तिनर्थ प्रत्ययान्तों को छोड़कर,

१२६०. जो पुंम वाचक शब्द पुरुष के संयोग से स्त्री में वर्तमान हो उससे ङीष् प्रत्यय होता है ।

(वा०) पालकान्त पुं शब्द यदि स्त्री में वर्तमान हो तो उससे ङीष नही होता ।

१२६१. प्रत्ययस्थ ककार के पूर्व अकार के स्थान में इकार होता है आप परे रहते, यदि वह आप सुप से परे न हो तब ।

( वा० ) सूर्य शब्द से स्त्री देवता अर्थ में चाप प्रत्यय होता है ।

चाब्बाच्यः )। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्–( सूर्यागस्त्ययोश्छे च ङ्यां च ) यलोपः। सूरी-कुन्ती। मानुषीयम्।

१२६२. **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** ४।१।४९॥ एषामानुगागमः स्यात् ङीष् च। इन्द्रस्य स्त्री—इन्द्राणी। वरुणानी। भवानी। शर्वाणी। रुद्राणी। मृडानी। ( हिमारण्ययोर्महत्त्वे )। महद्धिमं हिमानी। महदरण्यमरण्यानी। ( यवाद्दोषे )। दुष्टो यवो यवानी। ( यवनाल्लिप्याम् )। यवनानां लिपिर्यवनानी। ( मातुलोपाध्याययोरानुग्वा ) मातुलानी, मातुली। उपाध्यायानी, उपाध्यायी। ( आचार्यादणत्वं

---

सूत्रे प्रत्ययस्थाद्ग्रहणभावेऽत्रापीत्वं स्यादतस्तदावश्यकम्। कृते तु तस्मिन् प्रत्ययककाराभावात् अत्र कात्पूर्वस्याकारस्य नेत्त्वम्।

**बहुपरिव्राजका** : बहवः परिव्राजकाः यस्यामितिविग्रहे बहुव्रीहिसमासे सुब्लुकि टाप् सवर्णदीर्घः। 'प्रत्ययस्था' इति सूत्रे असुपः इत्यस्याभावेऽत्रपीत्त्वं स्यात्। कृते तस्मिन् टापः प्रत्ययलक्षणेम सुपः परत्वान्नेत्त्वम्।

**सूरी**। सूर्यस्य स्त्रीति विग्रहे सूर्यशब्दात् 'पुंयोगादाख्यायाम्' इति ङीषि 'यस्येति च' अलोपे 'सूर्यागस्त्ययोश्छे च ङ्यां च' इति यलोपः। सूर्याद्देवतायाम् चाप्' इतिवार्तिके देवतायामित्यस्याभावे अत्रापि चाप्प्रत्ययः स्यात्। कृते तस्मिन् इयं कुन्ती मानुषी न तु देवता केवलं सूर्यसम्बन्धात्सूर्यस्त्री इति न सूर्यशब्दादत्र चाप्प्रत्ययः।

**इन्द्राणी**। इन्द्रस्य स्त्रीतिविग्रहे इन्द्रशब्दात् 'इन्द्रवरुण' इतिङीषि आनुगागमे अनुबन्धलोपे सवर्णदीर्घे णत्वे सोर्लोपः।

---

( वा० ) सूर्य और अगस्त शब्द से छ और ङीप् प्रत्यय परे रहते य लोप होता है।

१२६२. इन्द्र, वरूण, यव, शर्व, रूद्र, मृड, हिम, अरण्य, यव, पवन, मातुल और आचार्य शब्द से आनुक का आगम और ङीष् प्रत्यय होता है।

( वा० ) हिम और अरण्य शब्द से महत्व अर्थ में ङीष और आनुक होते है।

( वा० ) यव में दोष होने पर यवशब्दसे ङीष् और आनुक होते हैं।

( वा० ) यवन शब्द से लिपि अर्थ में ङीष और आनुक् होते हैं।

( वा० ) मातुल और उपाध्याय शब्दों से ङीष् होता है और आनुक होता है विकल्प से।

( वा० ) आचार्य शब्द से परे नकार को णत्व नहीं होता।

च )। आचार्यस्य स्त्री–आचार्यानी। ( अर्यक्षत्रियाभ्यां वा स्वार्थे ) अर्याणी अर्या। क्षत्रियाणी, क्षत्रिया।

**१२६३. क्रीतात्करणपूर्वात्** ४।१।५०॥ क्रीतान्ताददन्तात् करणादेः स्त्रियां ङीष् स्यात्। वस्त्रक्रीती। क्वचिन्न। धनक्रीता।

**१२६४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ४।१।५४॥ असंयोगोपधमुपसर्जनं यत् स्वाङ्गं तदन्ताददन्तात् ङीष् वा स्यात्। केशानतिक्रान्ता–अतिकेशी,

---

**वस्त्रक्रीती :** वस्त्रेण क्रीता इति विग्रहः। वस्त्र टा क्रीत इत्यलौकिकविग्रहे 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति परिभाषया सुबुत्पत्तेः पूर्वं 'कर्तृकरणे कृता बहुलम्' इति समासे सुब्लुकि ङीषि अलोपः।

**क्वचिन्न-धनक्रीता।** 'कर्तृकरणे कृता बहुलम्' इत्यत्र बहुलग्रहणात् 'गतिकारकोपपदानाम्' इत्यस्य क्वचिदप्रवृत्त्या सुबन्तेन समासः। तत्र सुपः प्रागेवान्तरङ्गत्वाट्टाप्। तथा च धनक्रीतेत्यत्र धन टा क्रीता सु इति विग्रहे समासे सुब्लुकि अदन्तत्वाभावान्न ङीष्। किन्तु अजादिवात् टाप्।

**स्वाङ्गादिति**—अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम्॥

इति त्रेधा स्वाङ्गम्। अद्रवम्–द्रवरहितम्, मूर्तिमत्–स्पर्शवद्। द्रव्यपरिमाणं मूर्त्तिः तद्वत्, प्राणिस्थम्–प्राणिनि विद्यमानम्, अविकारजं–रोगादिविकारानुत्पन्नं यत् तत्प्रथमं स्वाङ्गम्। अतत्स्थं–प्राणिनि अविद्यमानम् तत्र प्राणिनि दृष्टं यत् तद् द्वितीयं स्वाङ्गलक्षणम्। तेन–प्राणिस्थेन स्तनादिना तत्–प्रतिमादि तथा–प्राणिद्रव्यसदृशं युतं-संबद्धं चेद्-यदि तदा तत्स्तनादिकम् अप्राणिनो स्वाङ्गम् इति तृतीयम्।

**अतिकेशी।** केशानतिक्रान्तेति लौकिकविग्रहः। केश शस् अति इति विग्रहे

---

( वा० ) अर्य, और क्षत्रिय शब्दों से स्वार्थ में ङीष् और आनुक् होता है विकल्प से।

१२६३. क्रीतान्त, अदन्त और करणदि शब्दों से स्त्रीत्व विवक्षा में ङीष् होता है।

१२६४. असंयोगोपध उपसर्जन जो स्वाङ्ग तदन्त जो अदन्त प्रातिपदिक उससे स्त्रीत्व विवक्षा में ङीष् होता है विकल्प से

अतिकेशा । चन्द्रमुखी, चन्द्रमुखा । असंयोगोपधात्किम् । सुगुल्फा । उपसर्जनात्किम् । शिखा ।

**१२६५. न क्रोडादिबह्वचः ४।१।५६ ॥** क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृतिगणोऽयम् । सुजघना ।

**१२६६. नखमुखात्संज्ञायाम् ४।१।५८** ॥ न ङीष् ।

**१२६७. पूर्वपदात्संज्ञायामगः ८।४।३** ॥ पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने । शूर्पणखा । गौरमुखा । संज्ञायां किम्-ताम्रमुखी कन्या ।

---

'अत्यादयः' इति समासे सुब्लुकि अतिकेशशब्दान्ङीषि अलोपः । पक्षे टाप् सवर्णदीर्घः ।

**चन्द्रमुखी ।** चन्द्र इव मुखं यस्या इति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि ङीषि अलोपः । पक्षे टाप् दीर्घः ।

**सुगुल्फा ।** शोभनौ गुल्फौ यस्या इति विग्रहे समासे सुब्लुकि टापि दीर्घः । 'स्वाङ्गात्' इति सूत्रेऽसंयोगोपधग्रहणाभावे अत्रापि ङीष् स्यादतस्तदावश्यकम् ।

**शिखा ।** 'शीङ स्वप्ने' इत्यस्मात् 'शीङो ह्रस्वश्च' इत्युणादिसूत्रेण खे इकारस्य ह्रस्वे च शिखशब्दाट्टाप् । 'स्वाङ्गात्' इत्यत्रोपसजर्नग्रहणाभावेऽत्रापि ङीष् स्यात् । सुशिखा इतिपाठः प्रामादिकः । टाबन्तेन समासे अदन्तत्त्वाभावादेव ङीषोऽप्रवृत्तेः ।

**कल्याणक्रोडा ।** अश्वानामुरः क्रोडा । कण्याणी क्रोडा यस्या इति विग्रहे समासे सुब्लुकि 'स्त्रियाः पुंवद्भाषित' इति कल्याणी शब्दस्य पुंवद्भावे 'एकविभक्ति' इत्युपसर्जजनत्वात् 'गोस्त्रियोरुपसर्जनस्य, इति क्रोडाशब्दस्य ह्रस्वे ङीषो निषेधात् टाप् ।

**सुजघना ।** शोभनं जघनं यस्या इति विग्रहे समासे सुब्लुकि सुजघनशब्दात् 'स्वाङ्गाच्चोपसर्जनाद' इति ङीषि प्राप्ते 'न क्रोडादिवह्वचः' इति तन्निषेधे टाप् ।

**शूर्पणणा ।** शूर्प इव नखं यस्या इति विग्रहे समासे सुब्लुकि 'स्वाङ्गात्' इति प्राप्तस्य ङीषो 'नखमुखात्सज्ञायाम्, इति तन्निषेधे टापि णत्वम् ।

---

१२६५. क्रोडादि गण पठित शब्दों तथा वह्वच् जो स्वाङ्ग वाचक शब्द उनसे ङीष् नहीं होता ।

१२६६. नख और मुख शब्द से संज्ञा में ङीष् नहीं होता ।

१२६७. पूर्व पदस्थ निमित्त से परे नकार के स्थान में णकार होता है संज्ञा में, यदि गकार का व्यवधान न हो तव ।

१२६८. **जातेरस्त्रीविषयादयोपधात्** ४।१।६३ ॥ जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । तटी । वृषली । कठी । बह्वृची ॥ जातेः किम्–मुण्डा । अस्त्रीविषयात्किम्–बलाका । अयोपधात्किम् क्षत्रिया । (योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः) ।

---

आकृतिग्रहणा जातिः लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥

इति त्रेधा जातिः । आकृतिग्रहणा-एकाकारप्रतीतिविषया जातिः इति प्रथमलक्षणम् । यथा-सर्वेषु घटेषु अयं घट इत्येकैव प्रतीतिर्जायते इति घटशब्दो जातिवाचकः । लिङ्गानां च—असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनापि सुज्ञेया जातिः इति द्वितीयं लक्षणम् । यथा वृषलशब्दो न सर्वलिङ्गस्तस्य एकस्यां व्यक्तौ अयं वृषल इति कथनाद् व्यक्त्यन्तरे तत्पुत्रादिषु वृषलोऽयमितिकथनं विनापि बृषलशब्दो जातिवाचकः । गोत्रं च चरणैः सह–इति तृतीयं लक्षणम् । यथा–अपत्यप्रत्ययान्तः औपगवादिशब्दः, शाखाध्येतृवाची कठादिशब्दश्च जाति कार्यं लभते ।

**तटी** । तटत्वजातिविशिष्टा स्त्रीति विग्रहे तटशब्दान्ङीषि अलोपः ।

**वृषली** । वृषलत्वजातिबिशिष्टा स्त्रीति विग्रहे वृषलशब्दान्ङीषि अलोपः ।

**कठी** । कठेन प्रोक्तमधीयाना इति विग्रहे कठशब्दात् 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः तस्य 'कठचरकाल्लुक्' इयि लुक् । ततः 'तदधीते तद्वेद' इत्यण् तस्य 'प्रोक्ताल्लुक्' इति लुक् ततो ङीष् अलोपः ।

**बह्वृची** । बह्वयः ऋचोऽध्येतव्या यया इति विग्रहे समासे सुब्लुकि यणि 'ऋक्पूरब्धूः पथामानक्षे, इत्यचि ङीषि अलोपः ।

**मुण्डा** । मुण्डशब्दात् टापि सवर्ण दीर्घः । सूत्रे जातिग्रहणाभावेऽत्रापि ङीष् स्यात् । सति तु तस्मिन् मुण्डशब्दस्य जातिवाचकत्वाभावान्न ङीष् ततः टाप् ।

**बलाका** । बलाकशब्दात् टाप् दीर्घः । 'जातेरस्त्री' इति सूत्रे अस्त्रीविषयादित्यस्याभावेऽत्रापि ङीष् स्यात् । सति तु यस्मिन् बलाकाशब्दस्य नियतस्त्रीविषयत्वान्न ङीप् ततः टाप् ।

---

१२६८. जाति वाचक वह शब्द जो स्त्रीलिङ्ग में नियत न हो और जिसके उपधा में यकार न हो उससे स्त्रीत्व विवक्षा में ङीष् हौता है ।

( वा० ) योपध प्रतिषेधों में हय, गवय, मुकय, मनुष्य और मत्स्य शब्दों को अप्रतिषेध कहना । अर्थात् इन शब्दों से ङीष् होता हैं ।

हयी । गवयी । मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी ( मत्स्यस्य ङ्याम् ) यलोपः । मत्सी ।

**१२६९. इतो मनुष्यजातेः ४।१।६५ ॥** ङीष् । दाक्षी ।

**१२७०. ऊङुतः ४।१।६६ ॥** उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । अयोपधात्किम्—अध्वर्युः ब्राह्मणी ।

**१२७१. पङ्गोश्च ४।१।६८ ॥** पङ्गूः । ( श्वशुरस्योकाराकारलोपश्च ) । श्वश्रूः ।

---

**हयी** । हयत्वजातिविशिष्टा स्त्रीति विग्रहे हयशब्दात् योपधत्वात् 'जातेरस्त्री' इति ङीषः अप्राप्तौ 'हयगवय' इतिवार्तिकवलान्ङीषि अलोपः !

**मनुषी** । मनुष्यत्वजातिविशिष्टा स्त्रीति विग्रहः । मनुशब्दात् 'मनोर्जातावञ्यतौ षुक् च' इति यत्प्रत्यये षुगागमे च मनुष्यशब्दात् 'हयगवय' इति वार्तिकबलात् 'जातेरस्त्री' इति ङीषि 'यस्येति च' इत्यलोपे 'हलस्तद्धितस्य' इति यलोपः ।

**मत्सी** । मत्स्यत्वजातिविशिष्टा स्त्रीतिविग्रहे मत्स्यशब्दात् 'हयगवय' इति-वार्तिकबलात् 'जातेरस्त्री' इति ङीषि अलोपे 'मत्स्यस्यङ्याम्' इति यलोपः ।

**दाक्षी** । दक्षस्यापत्यं स्त्रीतिविग्रहे दक्षशब्दाद् 'अत इञ्' इति इञि अलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ दाक्षिशब्दाङीपि 'यस्येति च' इतीकारलोपः ।

**कुरूः** । कुरोरपत्यं स्त्रीतिविग्रहे कुरुशब्दात् 'कुरुनादिभ्यो ण्यः' इतिण्यप्रत्यये तस्य 'स्त्रयामवन्तिकुन्तिकुरुभ्यश्च' इति लुकि अपत्यप्रत्ययान्तत्वेन जातिवाचकात् कुरुशब्दादूङि सुः ।

**श्वश्रूः** । श्वशुरस्य स्त्रीति विग्रहे श्वमुरशब्दात् 'पुंयोगादाख्यायाम्' इति ङीषि प्राप्ते 'श्वमुरस्योकाराकारलोपश्च' इति ङीष् उकाराकारयोर्लोपः ।

---

( वा० ) मत्स्य शब्द के यकार का लोप होता है ङी प्रत्यय परे रहते ।

१२६९. मनुष्य जाति वाचक एकारान्त प्रातिषदिक से स्त्रीत्व विवक्षा में ङीष् होता है ।

१२७०. उकारान्त जो योपध न हो मनुष्य जाति वाची प्रातिपदिक उनसे स्त्रीत्व विवक्षा में ऊङ् प्रत्यय होता है ।

१२७१. पंगु शब्द से भी ऊङ् प्रत्यय होता है ।

(वा०) श्वसुर शब्द के उकार और अकार का लोप होता है ।

**१२७२. ऊरूत्तरपदादौपम्ये ४।१।६९ ॥** उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ।

**१२७३. संहितशफलक्षणबामादेश्च ४।१।७० ॥** अनौपम्यार्थं सूत्रम् । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ।

**१२७४. शार्ङ्गरवाद्यञो ङीन् ४।१।७३ ॥** शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् । शार्ङ्गरवी । बैदी । ब्राह्मणी । ( नृनरयोर्वृद्धिश्च ) । नारी ।

**१२७५. यूनस्तिः ४।१।७७ ॥** युवन्छब्दात् स्त्रियां तिः प्रत्ययः स्यात् । युवतिः ।

इति स्त्रीप्रत्ययाः ।



---

**करभोरूः** । करभाविव ऊरू यस्या इति विग्रहे समासे सुल्लुकि गुणे करभोरुशब्दादूङ् ।

**शार्ङ्गरवी** : श्रृङ्गरोरपत्यं स्त्रीति विग्रहे श्रृङ्गरुशब्दादपत्येऽणि आदिवृद्धौ रपरे 'ओर्गुणः' इति गुणेऽवादेशे शार्ङ्गरवशब्दात् 'टिड्ढाणञ्' इति ङीपं बाधित्वा 'जातेरस्त्री' इति ङीषि प्राप्ते ङीनि अलोपः ।

**वैदी** । विदस्यापत्यं स्त्रीति विग्रहे विदशब्दात् 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इति अञि आदिवृद्धौ अलोपे वैदशब्दात् 'टिड्ढाणञ्' इतिङीपं बाधित्वा 'जातेरस्त्री' इति ङीषि प्राप्ते ङीनि अलोपः ।

**नारी** । नृशब्दात् 'ऋन्नेभ्यो ङीप्' इति ङीपं बाधित्वा ङीनि वृद्धौ रपरत्वम् । नरशब्दात्तु 'जातेरस्त्री' इतिङीषं बाधित्वा ङीनि वृद्धौ रपरे अलोपः ।

**युवतिः** : युवन्शब्दात् तिप्रत्यये 'स्वादिषु' इति पदत्वान्नलोपः ।

इति स्त्रीप्रत्ययाः ॥

---

१२७२, उपमान वाचक जो पूर्वपद और ऊरू उपपद जो प्रतिपदिक उससे ऊङ् प्रत्यय होता है ।

१२७३. संहित, शफ, लक्षण और वामादि शब्दों से परे ऊरू शब्द को ऊङ प्रत्यय होता है ।

१२७४. शार्ङ्गरव से परे जो अञ् प्रत्यय का अकार तदन्त जो जाति वाचक शब्द उनसे ङीन् होता है ।

(वा०) नृ और नर शब्द को वृद्धि भी होती है ।

१२७५. युवन् शब्द से स्त्रीत्व विवक्षा में ति प्रत्यय होता है ।

इति स्त्रीप्रत्ययाः ॥

**शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका ॥**
**कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥ १ ॥**

इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी समाप्ता ॥



---

कृता मया सम्प्रति काशिकायां विद्यार्थिवृन्दाखिलसौख्यदात्री ।
प्रीत्यै च भूयात्परमेश्वरस्य सटिप्पणा बालमनोरमेयम् ॥ १ ॥

गुणाङ्कनवभूवर्षे वैक्रमे गुरुवासरे ।
माघासितद्वितीयायां टीकेयं पूर्णतामगात् ॥ २ ॥

**इति श्रीसूर्यनारायणशुक्लकृता बालमनोरमा समाप्ता ॥**



---

जो व्याकरण शास्त्र छोड़कर अन्य शास्त्र में प्रविष्ट बालक हैं उनको उपकृत करने वाली इस लघुसिद्धान्तकौमुदी की रचना आचार्य वरदराज ने की ।

**इति न्यायव्याकरणाचार्य श्रीब्रह्मदत्तमिश्र कृता**
**श्रीरामगोविन्द शुक्लपरिवर्धिता हिन्दी टीका**
**समाप्ता ॥**

# अथ लघुकौमुद्यन्तर्गतोऽष्टाध्यायीक्रमानुसारेण गणपाठः

## प्रथमोऽध्यायः

ऊर्यादिच्विडाचश्च ।१।४।६१। ऊरी उररी कन्थी ताली आताली वेताली धूसी शकला शंसकला ध्वंसकला भ्रंसकला गुलगुधा ( सजूस् ) सजुष् फल फली विल्की आक्ली आलष्ठी केवाली केवासी सेवा ( ली ) सी पर्याली शेवाली वर्षाली अत्यूमशा वश्मसा मस्मसा औषट् श्रौषट् ( वौषट् ) वषट् स्वाहा स्वधा पा ( म्पी ) पी प्रादुस् श्रत् आविस् इत्यूर्यादयः ॥ १ ॥

साक्षात्प्रभृतीनि च । १।४।७४॥ साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरुहा वीजर्या वीजरुहा ससर्या सर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने विहसने प्रतपने प्रादुस् नमस् । आकृतिगणोऽयम् । इति साक्षात्प्रभृतिगणः ॥ २ ॥

## द्वितीयोऽध्यायः

सप्तमी शौण्डैः २।१।४० ॥ शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण । इति शौण्डादयः ॥ १ ॥

शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । शाकपार्थिव कुत ( तु ) पसौश्रुत अजातौल्वलि । आकृतिगणौयम् । कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका मानोन्मानिका । इति शाकपार्थिवादिः ॥ २ ॥

राजदन्तादिषु परम् ।२।२।३१ ॥ राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोतम् ( अर्पितोप्तम् ) उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरड्वायनि ( अरग्वायनबन्धकी ) चित्ररथबाह्लीकम् अवन्त्यश्मकम् मूद्रार्यम् स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थों धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतम् गाजवाजम् ( गोजवाजम् ) गोपालिधानपूलासम् ( गोपालधानी पूलासम् ) पूलासककारण्डम् ( पूलासकक्करण्डम् ) स्थूलासम् ( स्थूलपूलासम् ) उशीरबीजम् ( जिज्ञास्थि ) सिञ्जास्थम् ( सिञ्जाश्वत्थम् ) चित्रा स्वाती ( चित्रस्वाती ) भार्यापती दम्पती जम्पती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोबिजु ( शिरोबीजम् )

शिरोजानु सर्पिर्मधुनी मधुसर्पिषी। आद्यन्तौ अन्तादी गुणवृद्धी वृद्धिगुणौ। इति राजदन्तादिः।

अर्धर्चाः पुंसि च ।२।४।३१॥ अर्धर्च गोमय कषाय कार्षापण कुतप कुसप (कुणप) कपाट शङ्ख गूथ यूथ ध्वज कवन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान् नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारवाण (वारवारण) प्रोथ कपित्थ (शुष्क) शाल शील शुक्ल (शुल्क) शीधु कवच रेणु (ऋण) कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त वुस्त क्ष्वेडित शृङ्ग निगड (खल) मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक (कर्पट) शिखर कल्क (वल्कल) नटमक (नाटमस्तक) वलय कुसुम तृण पङ्क कुण्डल किरीट (कुमुद) अर्बुद अङ्कुशतिमिर (आश्रय) अश्राय भूषण इक्कस (इष्वास) मुकुल वसन्त तटाक (तडाग) पिटक विटङ्क बिडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास (विशाल) चषाल (चखाल) खण्ड दर विटप (रण वल मक) मृणाल हस्त आर्द्र हल (सूत्र) ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल (छल) पुर (पुरा) राष्ट्र अम्बर विम्ब कुट्टिम मण्डलं (कुक्कुट) कुडप ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य (वाल) छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन (स्तन स्वर) संगम निष्क क्षेम शूक क्षत्र पवित्र (यौवन कलह) मालक (पालक) मूषिक (मण्डल वल्कल) कुज (कुञ्ज) विहार लहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन (लोमश) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुष मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डल॥ इत्यर्धर्चादिः॥

## तृतीयोऽध्यायः

कण्ड्वादिभ्यो यक् ।३।१।२७॥ कण्डूञ् मन्तु हृणीङ् वल्गु असु (मनस्) महीङ् (लाट्) लेट् इरस् इरज् इरञ् (दुवस्) (उवस) उषस् वेट् मेधा कुषुभ (नमस्) मगध तन्तस पम्पस् (पपस) सुख दुःख (भिक्ष चरण चरम अवर) सपर अरर (अरर्) भिषज् भिष्णज् (अपर आर) इषुध वरण चुरण तुरण (भुरण) भरण गद्गद एला केला खेला (वेला शेला) लिट् लोट् (लेखा

लेख ) रेखा द्रवस् तिरस् अगद् उरस तरण ( तरिण ) पयस् सम्भ्यस सम्बर ॥ आकृतिगणोऽयम् । इति कण्ड्वादिः ॥ १ ।

नन्दि १ ग्रहि २ पचा ३ दिभ्यो ल्युणिन्यचः ३।१।१३४॥

१. नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् । नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः सहितपिदमः संज्ञायाम् । सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः ( शत्रुदमनः ) इति नन्द्यादिः ॥ २ ॥

२. ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी रक्षश्रुवपशां नौ । निरक्षी निश्रावी निवापी निशायी । याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम् । अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी । अचामचित्तकर्तृकाणाम् । अकारी अहारी अविनायी ( विशायी विषायी ) विषयी विशयी देशे विशयी विषयी देशः । अभिभावी भूते । अपराधी उपरोधी परिभवी परिभावी ॥ इति ग्रह्यादिः ॥ ३ ॥

३. पच वच वप वद चल पत नदट् भषट् ( प्लवट् ) प्लुवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् ( दोषट् ) जर ( रज ) मर ( मद ) क्षम ( क्षप ) सेव मेष कोप ( कोष ) मेध नर्त व्रण दर्श सर्प ( दम्भ दर्प ) जार भर श्वपच ॥ पचादिराकृतिगणः ॥ ४ ॥

मूलविभुजादिभ्य उपसंख्यानम् । मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिरिध्र । आकृतिगणोऽयम् । इति मूलविभुजादिः ।

## चतुर्थोऽध्यायः

**अजाद्यतष्टाप्** ।४।१।४॥ अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा ( पूर्वापहाणा ) अपरापहाणा । सम्भस्त्राजिनशणपिण्डेभ्यः फलात् । सदच् काण्डप्रान्तशतैकेभ्यः पुष्पात् । शूद्रा चामहत्पूर्वा जातिः । क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा । मध्यमा पुंयोगेऽपि । मूलान्नञः । दंष्ट्रा एते अजादयः ॥ १ ॥

**षिद्गौरादिभ्यश्च** ।४।१।४१॥ गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य ( पुट तूण ) द्रुणु द्रोण हरिण कोकण ( काकण ) पटर उणक ( आमल ) आमलक कुवल बिम्ब बदर ( फर्कर ) कर्करक ( कर्कर ) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल पा ( षा ) ण्डश आढक आथक आनन्द आश्वत्थ सृपाट आखुक ( आपच्चिक ) शष्कुल सूर्य

( सूर्म ) शूर्प सूच यूष ( पूष ) यूथ सूप मेथ वल्लक घातक सल्लक मालक मालत साल्वक वेतस वृक्ष ( वृस ) अतस ( उभय ) भृङ्ग मह ( मठ ) मेह छेद पेश मेद श्वन् तक्षम् अनडुही अनड्वाही । एषणः करणे । देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि ( आद्गाहमानि ) गौतम ( गोतम ) ( पारक ) अयस्थूण ( अयः स्थूण ) भौरिकि भौलिकि भौलिङ्गि यान मेघ आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन ( पोतन ) पातन पाठन ( पानठ ) आस्तरण अधिकरण अधिकार अग्रहायणी ( आग्रहायणी ) प्रत्यवरोहिणी ( सेचन )। सुमङ्गलातसंज्ञायाम् । अण्डर सुन्दर मण्डल मन्थर मंगल पट पिण्ड ( षण्ड ) षण्ड उर्द गुर्द शम सूद औड ( आर्द्र हृद ह्रद ) पाण्ड ( भाण्डल ) भाण्ड ( लोहाण्ड ) कटर कन्दर कदल तरुण तलुन कल्माष वृहत् महत् ( सोम ) सौधर्म । रोहिणी नक्षत्रे । रेवती नक्षत्रे । ( विकल ) निष्कल पुष्कल । कटन्च्छ्रोणिवचने । पिप्पल्यादयश्च । पिप्पली हरितकी ( हरीतकी ) कोशातकी शमी वरी शरी पृथिवी क्रोष्टृ मातामह पितामह इति गौरादिः ॥ ३ ॥

बह्वादिभ्यश्च ४।१।५४॥ बहु पद्धति अञ्चति अङ्कति अंहति शकटि (शकति) शक्तिः शस्त्रे । शारि वारि राति राधि ( शाधि ) अहि कपि यष्टि मुनि । इतः प्राण्यङ्गात् । कृदिकारादक्तिनः । सर्वतोऽक्तिन्नर्थादित्येके । चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज । चन्द्रभागान्नद्याम् । ( चन्द्रभागा नद्याम् ) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा वाल शफ गुद ॥ आकृतिगणोऽयम् ॥ तेन गल भग राग इत्यादि ॥ इति ब्रह्वादयः ॥ ४ ॥

शार्ङ्गरवाद्यञो ङीन् ।४।१।७३॥ शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय ( आनिचेय ) आनिधेय आशोकेय वात्स्यायन मौञ्जायन् ( कैकश ) कैकस काप्य ( काव्य ) शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड । भोगवद्गौरिमतोः संज्ञायाम् घादिषु [ ६।३।४३। ] नित्यं ह्रस्वार्थम् ।)नृनरयोर्वृद्धिश्च । शार्ङ्गरवादिः ॥ ५ ॥

अश्वपत्यादिभ्यश्च ।४।१।८४॥ अश्वपति ( ज्ञानपति ) शतपति धनपति गणपति [ स्थानपति यज्ञपति ] राष्ट्रपति कुलपति गृहपति ( पशुपति ) धान्यपति धन्वपति ( वण्धुपति धर्मपति ) सद्यापति प्राणपति क्षेत्रपति ॥ इत्यश्वपत्यादिः ॥६॥

उत्सादिभ्योऽञ् ।४।१।८६ ॥ उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन। वष्कयासे । पृथिवी ( धेनु ) पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण । उदस्थानदेशे । पृषदंब भल्लकीय रथन्तर

मध्यंदिन वृहत् महत् सत्वत् कुरु प ( पा ) ञ्चाऌ इन्द्रावसान उष्णिह ककुम्भ सुवर्ण देव ग्रीष्मादच्छन्दसि ॥ इत्युत्सादिः ॥ ७ ॥

बाह्वादिभ्यश्च ।४।१।९६ ॥ बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपनिन्दु ( उपविन्दु ) वृषली वृकला चूडा वलाका मूषिका कुशला भगला (छगला) ध्रुवका ( धुवका ) सुमित्रा दुर्मित्रा पुष्करसद् अनुग्ररत् देवशर्मन् अग्निशर्मन् ( भद्रशर्मन् सुशर्मन् ) कुनामन ( सुनामन् ) पञ्चन् सप्तन् अष्टन् । अमितौजसः सलोपश्च । मु ( सु ) धावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न राम रक्तम् ( उदङ्क ) । उदकः संज्ञायाम् । संभूयोम्भसोः सलोपश्च । आकृतिगणोयम् ॥ तेन, सात्वकिः ( सात्यकिः ) जाङ्घिः ऐन्द्रशर्मिः आजधेनविः । इत्यादि ॥ इति बाह्वादयः ॥ ८ ॥

अनृष्यान्तर्ये विदादिभ्योऽञ् ।४।१।१०४॥ विद उर्व कश्यम् कुशिक भरद्वाज उपमन्यु किलात कन्दर्प ( किदर्भ ) विश्वानर ( ऋषेण ) ऋष्टिषेण ऋतभाग हर्यस्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक ( शुनक् ) धेनु गोपवन शिग्रु विन्दु ( भोगक ) भाजन ( शमिक ) अश्वावतान श्यामाक श्यामक् ( श्यावलि ) श्यापर्ण हरित किन्दास वह्यस्क अर्कजूष ( अर्कलूष ) वध्योग विष्णुवृद्ध प्रतिवोध रचित ( रथीतर ) रथन्तर गविष्ठिर निषाद ( शबर अलस ) मठर ( मृडाकु ) सृपाकु मृदु पुनर्भू पुत्र दुहितृ ननान्दृ । परस्त्री परसुं च ॥ इति विदादिः ॥ ९ ॥

गर्गादिभ्यो यञ् ।४।१।१०५॥ गर्ग वत्स । वाजासे । संकृति अज व्याघ्रपात् विदभृत् प्राचोनयोग ( अगस्ति ) पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक धूम एक अवट मनस धनञ्जय वृक्ष विश्वावसु जरमाण लोहित शंसित वभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु आलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष ( वृक्ष ) ( तनु ) तरुक्ष तलुक्ष तण्ण वतण्ड कपिकत ( कपि कत) कुरुकत अनहुह कण्व शकल गोकक्ष अगस्त्य कण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृगगण रहूगण शण्डिल वर्णक ( चणक ) चुलुक मुद्गल मुसल जमदग्नि पराशर जतूकर्ण ( जातूकर्ण ) महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अदरक ( अररक ) एलाक पिङ्गल कृष्ण गोलिन्द उलूक तितिक्ष भिषज् ( भिषज् भिष्णज ) भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलु पिप्पलू वृहदग्नि ( सुलोहिन् ) सुलाभिन् उक्थ कुटीगु ॥ गर्गादिः ॥ १० ॥

शिवादिभ्योऽण् ।४।१।११२॥ शिव प्रोष्ठ प्रौष्ठक ( प्रोष्ठिक ) चण्ड जम्भ भूरि दण्ड कुठार ककुभ ( ककुभा ) अनभिम्लान कोहित मुख ( सुख ) सन्धि मुनि

ककुत्स्थ कहोड कोहड कहूय कहय रोध कपिञ्जल ( कुपिञ्जल ) खञ्जन वतण्ड तृण कर्ण क्षीरह्रद जलह्रद परिल पथिक पिष्ठ हैहय पार्षिका गोपिका कपिलिका जटिलिका वधिरिका मञ्जीरक ( मजिरक ) वृष्णिक खञ्जास खञ्जाह ( खञ्जार खञ्जाल कर्मार ) रेख लेख अलेखन बिश्रवण रवण वतनाक्ष ग्रीवाक्ष ( विटप पिटक ) विटाक तृक्षाक नभाक ऊर्णनाभ जरत्कारु ( पृथा उत्क्षेप ) पुरोहितिका सुरोहितिका सुरोहिका आर्यश्वेत ( अर्यश्वेत ) सुपिष्टि मसुरकर्ण ययूरकर्ण ( खर्जुरकर्ण ) कदूरक तक्षन् ऋषिकेण ( ऋष्टिषेण ) गङ्गा विपास यस्क लह्य द्रुह्य अयस्थूण तृणकर्ण ( तृण कर्ण ) पर्ण भलन्दन विरूपाक्ष भूमि इला सपत्नीं । द्व्यचोनद्याः त्रिवेणी त्रिवणं च । इति शिवादिः । आकृतिगणः ॥ ११ ॥

रेवत्यादिभ्यष्ठक् ।४।१।१४६॥ रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकवन्धु वृकग्राह ( कर्णग्राह ) कुक्कुटाक्ष ( ककुदाक्ष ) चामरग्राह ॥ इति रेवत्यादिः ॥ १२ ॥

कम्बोजाल्लुक् ।४।१।१७५॥ कम्बोज चोल केरल शक यवन इति कम्बोजादिः ॥ १३ ॥

भिक्षादिभ्योऽण् ।४।२।३८॥ भिक्षा गर्भिणी क्षेत्र करीष अङ्गार चर्मिन् धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा भरत विषय श्रोत्र ॥ इति भिक्षादिः ॥ १४ ॥

क्रमादिभ्यो वुन् ।४।२।६१॥ क्रम पद शिक्षा मीमांसा सामन् । इति क्रमादिः ॥ १५ ॥

वरणादिभ्यश्च ।४।२।८२॥ वरणा शृङ्गि शाल्मलि शुण्डि शयाण्डि पर्णी ताम्रपर्णी गोद आलिङ्गचायन जालपदी ( जानपदी ) जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयनी गया मथुरा तक्षशिला उरसा गोमती बलभी । इति वारणादिः ॥ १६ ॥

नद्यादिभ्यो ढक् ।४।२।९७॥ नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी काशपरी काशफारी ( काशफरी ) खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी । वडवाया वृषे ॥ इति नद्यादिः ॥ १७ ॥

दिगादिभ्यो यत् ।४।३।५४॥ दिश् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जवन मेघ यूथ । उदकात्संज्ञायाम् । ज्ञाय ( न्याय ) वंश वेश काल आकाश ॥ इति दिगादिः ॥ १८ ॥

नित्यं वृद्धशरादिभ्यः ।४।३।१४४॥ शर दर्भ मृद् ( मृत् ) कुटी तृण सोम बल्वज ॥ इति शरादिः ॥ १९ ॥

## पञ्चमोऽध्यायः

उगवादिभ्यो यत् ।५।१।२।। गो हविस् अक्षर विष वर्हिस अष्टका स्खदा युग मेधा स्रुच् । नाभि नभं च । शुनः सम्प्रसारणं वा च दोर्घत्वं तत्संनियोगेन चान्तोदात्तत्वम् ।।ऊधसोऽनङ् च । कूप खद दर खर असर अध्वन् ( अध्वन ) क्षर वेद वीज दीस ( दीप्त ) ।। इति गवादिः ।। १ ।।

दण्डादिभ्योः यः ।-।१।६६।। दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग ।। इति दण्डादिः ।। २ ।।

पृथ्वादिभ्य इमनिज्वा ।५।१।१२२।। पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिंचन वाल होड साक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु ।। इति पृथ्वादिः ।। ३ ।।

वर्णदृढादिभ्यः ष्यञ्च ।५।१।१२३।। दृढ वृढ परिवृढ भृश् कृश वक्र शुक्र चुक्र आम्र कष्ट ( कृष्ट ) लवण ताम्र शीत उष्ण जड वधिर पण्डित मधुर मूर्ख मूक स्थिर । वेर्यातलावमतिर्मनः शारदानाम् । समो मतिमनसोः । जवन । इति दृढादिः ।। ४ ।।

गुणवचनब्राह्मणादिभ्यः कर्मणि च ।५।१।१२४।। ब्राह्मण वाडव माणव अर्हतोनुम्च । चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निश्न वालिश अलस दुष्पुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात । सर्ववेदादिभ्यः स्वार्थे । चतुर्वेदस्योभयपदवृद्धिश्च । शौटीर ।। आकृतिगणः । इति ब्राह्मणादिः ।। ५ ।।

पत्यन्तपुरोहितादिभ्यो यक् ।५।१।१२८।। पुरोहित । राजासे । ग्रामिक पिण्डित सुहित वालमन्द ( वाल मन्द ) खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शीलिक सूतिम मूलिक तिलक अञ्जलिक ( अन्तलिक ) रूपिक ऋषिक पुत्रिक अविक क्षत्रिक पर्षिक पथिक चर्मिक प्रतिक सारथि आस्तिक सूचिक संरक्ष सूचक ( संरक्षसूचक ) नास्तिक अजानिक शाक्वर नागर चूडिक ।। इति पुरोहितादिः ।। ६ ।।

तदस्य संजातं तारकादिभ्य इतच् ।५।२।३६।। तारका पुष्प कर्णक मञ्जरी ऋजीष क्षण ( सूच ) सूत्र मूत्र निष्क्रमण पुरीष उच्चार प्रचार कुड्मल कण्टक मुसल मुकुल कुसुम कुतूहल स्तबक ( स्तवक ) किसलय पल्लव खण्ड वेग निद्रा मुद्रा वुभुक्षा धेनुष्या पिपासा श्रद्धा अभ्र पुलक अंगारक वर्णक द्रोह दोह सुख दुःख

उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरंग तिलक चन्द्रक अन्धकार गर्व कुमुर ( मुकुर ) हर्ष उत्कर्ष रण कवलय गर्ध क्षुध सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थफुट फल कञ्चु ( ल ) क श्रृङ्गार अंकुर शैवल वकुल श्वभ्र अराल कलङ्क कर्दम कन्दल मूर्च्छा अंगार हस्तक प्रतिविम्ब विघ्न तन्त्र प्रत्यय दीक्षा गर्ज । गर्भादप्राणिनि ।। इति तारकादिः ।। आकृतिगणः ।। ७ ।

इष्टादिभ्यश्च ।५।२।८८।। इष्ट पूर्त उपासादित निगदित परिगदित परिवादित निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्रात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुति ।। इतीष्टादि ।। ८ ।।

व्रीह्यादिभ्यश्च ।५।२।११५।। वीहि माया शाला शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा वलाका यवखदनौ कुमारी । शीर्षान्नञः ।। इति व्रीह्यादिः ।। ९ ।।

अर्श आदिभ्योऽच् ।५।२।१२७।। अर्शस् उरस तुन्द चतुर पलित ( कलित ) जटा घटा घाटा अभ्र अर्घ कर्दम अम्ल लवण । स्वाङ्गाद्धीनात् वार्णात् । इत्यर्श आदिः । आकृतिगणः ।। १० ।।

अव्ययीभावे शरत्प्रभृतिभ्यः ।५।४।१०७।। शरद् विपास अनस् मनस् उपानह अनदुह दिव हिमवत हिरुक विद सद दिश् दृश विश् चतुर त्यद् तद् यद् कियत । जराया जरसश्च । प्रतिपरिसमनुभ्योऽक्ष्णः । पथिन ।। इति शरदादिः ।। ११ ।।

पादस्य लोपोऽहस्त्यादिभ्यः ५।४।१३८ । हस्तिन कुद्दाल अश्व कशिक कुरत कटोल कटोलक गण्डोल गण्डोलक [ कण्डोल कण्डोलक ] अजकपोत जाल गण्ड महिला दासी गणिका कुसूल ।। इति हस्त्यादिः ।। १२ ।।

उरःप्रभृतिभ्यः कप् ५।४।१५१।।उरस् सर्पिस उपानह पुमान् अनड्वान् पयः नौ लक्ष्मीः दधि मधु शाली शालिः । अर्थान्नञः । इत्युरः प्रभृतयः ।। १३ ।।

## षष्ठोऽध्यायः

शकन्ध्वादिषु पररूपं वाच्यम् ।६।१।९४ ।। शकन्धुः कर्कन्धुः कुलटा । सीमन्तः केशवेशे । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । सारङ्गः पशुपक्षिणोः । इति शकन्ध्वादिः ।। १ ।।

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपुरणी प्रियादिषु ६।३।३४। प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामा अवला तनया । इति प्रियादिः ।। २ ।।

तसिलादिष्वाकृत्वसुचः ६।३।३५। तसिल् त्रल् तरप् तमप् चरट् जातीयर् कल्प् देशीयर रूपप् पाशप् थल थाल् दा हिल् तिल् थ्यन् ॥ इति तिसलाद्यः ॥ ३ ॥

## सप्तमोऽध्यायः

अनुशतिकादीनां च ७।३।२०। अनुशतिक अनुहोड अनुसंवरण [ अनुसंचरण अनुसंवत्सर अङ्गारवेणु असिहत्य अस्यहत्य अस्यहेति वध्योग पुस्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि परस्त्री । राजपुरुषात्ष्यञि । सूत्रनड । इत्यनुशतिकादिः । आकृतिगणोऽयम् ॥ तेन अभिगम अ [ धि ] भिभूत अ [ भि ] धिदेव चतुर्विद्या इत्यादि ॥ ४ ॥

## अष्टमोऽध्यायः

मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।८।२९। यव दल्मि ऊर्मि [ उर्मि ] भूमि क्रमि कुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि व्रजि ध्वजि निजि सिजि सञ्जि हरित् कुकुत् मरुत् गरुत् इक्षु द्रु मधु ॥ इति यवादिः । आकृतिगणः ॥ १ ॥

कस्कादिषु च ८।३।४८। कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्क्रः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बहिष्पलम् [ र्वहिष्पलम् ] यजुष्पात्रम्–अयस्कान्तः तमस्काण्डः-अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः । इति कस्कादिराकृतिगणः ॥ २ ॥

क्षुभ्नादिषु च ८।४।३९। क्षुभ्न नृनमन् नन्दिन् नन्दन नगर एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी हरिनन्दनः । गिरिनगरम् । नृतिर्यङि प्रयोजयन्ति । नरीनृत्यते, नर्तन, गहन, नन्दन निवेश निवास अग्नि अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनं परिगहनं परिनन्दनं शरनिवेशः शरनिवासः शराग्निः दर्भानूपः । आचार्यादणत्वं च । अकृतिगणोऽयम् । पाठान्तरम् । क्षुम्ना तृन्नु नृनमन नरनगर नन्दन । यङ्नृती । गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्यभोगीन चतुर्हायन । इरिकादीनि वनोत्तरपदानि संज्ञायाम् । इरिका तिमिर समीर कुबेर हरि कमीर इति क्षुभ्नादिः ॥ ३ ॥

॥ इति गणपाठः ॥

# लघुकौमुदीस्थ-सूत्राणामनुक्रमणिका



१ अइउण् । २ ऋऌक् । ३ एओङ् । ४ ऐऔच् । ५ हयवरट् । ६ लण् । ७ ञमङणनम् । ८ झभञ् । ९ घढधष् । १० जबगडदश् । ११ खफछठथचटतव् । १२ कपय् । १३ शषसर् । १४ हल् । इति माहेश्वराणि सूत्राणि ।

सूत्राङ्काः सूत्राणि

सूत्राङ्काः सूत्राणि



इति लघुसिद्धान्तकौमुदीस्था सूत्रानुक्रमणिका समाप्ता ॥

# अथ लघुकौमुद्यन्तर्गतवार्तिकानामकारादिक्रमेण सूची



# अथ लघुकौमुद्यन्तर्गतधातुसूची

| सूत्राङ्काः | धातवः | सूत्राङ्काः | धातवः | सूत्राङ्काः | धातवः | सूत्राङ्काः | धातवः |
|---|---|---|---|---|---|---|---|
| | [ अ ] | ६५९ | कुट | ४९४ | ग्लै | ६६० | णू |
| ४४४ | अत | ६९४ | कुष | | [ घ ] | | [ त ] |
| ५५३ | अद | ६७८ | (डु) कृञ् | ७०३ | घट | ६७३ | तञ्चू |
| ६७२ | अञ्जू | ६५८ | कृती | ५६५ | घुट | ६७५ | तनु |
| ५३६ | अय | ६६८ | कृती | | [ च ] | ६८६ | तप |
| ६९४ | अर्श | ६५४ | कृष | ६४८ | चिञ् | ६१३ | तुद |
| ४६५ | अश | ६६१ | कॄ | ४५४ | चिती | ५४० | तुभ |
| ५७५ | अस् | ६९३ | कॄञ् | ६९५ | चुर | ६७८ | तृणु |
| | [ इ ] | ६९० | क्रूञ् | | [ छ ] | ६७८ | (उ)तृदिर |
| ५८६ | इङ् | ४८६ | क्रमु | ६६८ | छिदिर | ६५९ | तृप् |
| ५६९ | इण् | ६८५ | (डु)क्रीञ् | ६६८ | (उ) छृदिर् | ६५९ | तृम्फ् |
| ६७४ | (ञि) इन्धी | ६७८ | क्षणु | ६३५ | छो | ६६८ | तृह |
| ६५९ | इषु | ४३० | क्षि | | [ ज ] | ५४३ | त्रपूष् |
| | [ उ ] | ६७८ | क्षिणु | ६४० | जनी | ६३२ | त्रसी |
| ६५८ | उछि | ६६८ | क्षुदिर् | ६६६ | जुषी | | [ द ] |
| ६५८ | उज्झ | ५४० | क्षुभ | ७०४ | ज्ञप | ५४२ | दद् |
| ५७२ | उन्दी | २४० | (ञि)क्ष्विदा | ६९४ | ज्ञा | ६२४ | (डु) दाञ् |
| | [ ऊ ] | | [ ख ] | | [ ड ] | ५६६ | दाप् |
| ५०० | ऊर्णुञ् | ६५८ | खिद | ६४० | डीङ् | ६३१ | दिवु |
| | [ ऋ ] | ५६६ | ख्या | | [ ण ] | ५९४ | दिह |
| ६५८ | ऋच्छ | | [ ग ] | ४५९ | णद | ६३८ | दीङ् |
| | [ ए ] | ६९५ | गण | ५४० | णभ | ६४३ | दीपी |
| ५१० | एध | ४५४ | गद | ६३६ | णश् | ५९० | दुह |
| | [ क ] | ५०५ | गम्लृ | ६४६ | णह | ६३८ | दूङ् |
| ४६६ | कटे | ४६८ | गुपू | ६२७ | णिजिर | ६३५ | दो |
| ६९६ | कथ | ६६४ | गॄ | ५४७ | णीञ् | ५३८ | द्युत |
| ५२६ | कमु | ६९३ | ग्रह | ६५३ | णुद् | ५६९ | द्रा |

| सूत्राङ्काः | धातवः | सूत्राङ्काः | धातवः | सूत्राङ्काः | धातवः | सूत्राङ्काः | धातवः |
|---|---|---|---|---|---|---|---|
| ६९० | द्रूञ् | | [ब] | | [य] | ६६० | विश |
| | [ध] | ६४५ | बुध | ५४६ | यज | ५९३ | वृङ् |
| ६२६ | (डु)धाञ् | ५९४ | ब्रूञ् | ५६८ | या | ६९३ | वृञ् |
| ६५१ | धूञ् | | [भ] | ५६६ | यु | ५४१ | वृतु |
| ६९३ | धूञ् | ५६६ | भज | ६६८ | युजिर् | ६५८ | व्यच् |
| ५४७ | धृञ् | ६७३ | भञ्जो | ५९० | युञ् | ६३५ | व्यध् |
| ५४० | ध्वंसु | ५६९ | भा | ६४५ | युध | ६३६ | व्रज |
| ५४० | ध्वंसु | ६६८ | भिदिर | | [र] | ६५८ | (ओ)व्रश्चू |
| | [न] | ६१० | (ञि) भी | ५६९ | रा | | [श] |
| ४६३ | (टु)नद्रि | ६७३ | भुज | ६६८ | रिचिर् | ६६० | शद्लृ |
| ६३१ | नृती | ६६० | भुजो | ५४० | रुच | ६७३ | शिष्लृ |
| | [प] | ३७६ | भू | ६६० | रुजो | ५८४ | शीङ् |
| ५४७ | (डु)पचष् | ६१० | (डु) भृञ् | ६६० | रुधिर | ५५४ | शुच |
| ७०५ | पठ | ५४४ | भृञ् | | [ल] | ६५९ | शुन |
| ६४४ | पद | ६५३ | भ्रस्ज | ५६९ | ला | ५४० | शुभ |
| ४८८ | पा | ५४० | भ्रंसु | ६५८ | लिप | ६३६ | शुष् |
| ५६९ | पा | | [म] | ५९४ | लिह | ६३३ | शो |
| ६५८ | पिश् | ६८४ | मनु | ६५६ | लुप्लृ | ५६९ | श्रा |
| ६७३ | पिष्लृ | ६६० | (टु)मस्जो | ६५८ | लुभ | ५४६ | श्रिञ् |
| ६४० | पीङ् | ६२३ | माङ् | ६९१ | लूञ् | ६८५ | श्रीञ् |
| ६५९ | पुट | ६४० | माङ् | | [व] | ५०० | श्रु |
| ६३६ | पुष् | ५४० | (ञि)मिदा | ६८४ | वनु | ५४० | श्विता |
| ६९० | पृञ् | ६५५ | मिल | ४४९ | वह | | [ष] |
| ६६६ | पृङ् | ६८५ | मीङ् | ५६९ | वा | ६७६ | षणु |
| ६५९ | पृड | ६५५ | मुच्लृ | ६६८ | विचिर | ६६१ | षद्लृ |
| ६११ | पॄ | ६९४ | मुष | ६६६ | (ओ)विजी | ६५६ | षिच् |
| ६६५ | प्रच्छ | ६६५ | मृङ् | ६७३ | (ओ)विजी | ६८६ | षिञ् |
| ६८५ | प्रीञ् | ६५९ | मृड | ६४५ | विद | ४४९ | षिध |
| ५६९ | प्सा | ६६० | मृश | ६७४ | विद | ६३१ | षिवु |

॥ इति धातुसूची ॥

## हमारे प्रकाशन





## हमारे प्रकाशन

१. अध्यात्मरामायण—आचार्य चन्द्रमा पाण्डेय ७५=००
२. काव्यमीमांसा—नर्मदेश्वर त्रिपाठी १०=००
३. शिवदृष्टिः ( हिन्दी टीका सहित ) डॉ० राधेश्याम चतुर्वेदी ७०=००
४. तन्त्रसारः ( अभिनवगुप्तकृत ) हेमेन्द्रनाथ चक्रवर्ती ७०=००
५. केरल प्रश्न संग्रह—आचार्य चन्द्रमा पाण्डेय ५=००
६. योगतारावली—स्वामी दयानन्दशास्त्री ८=००
७. भारतीय सुषिरवाद्यों का इतिहास-डा० राधेश्याम जायसवाल ५१=००
८. शाङ्कर वेदान्ते ज्ञान मीमांसा—डा० के० पी० सिह ४०=००
९. वरिवस्यारहस्यम्—आचार्य विश्वनाथ पाण्डेय २५=००
१०. दायभाग प्रकाशिका—डा० बदरीनारायण पाण्डेय ८=५०
सम्पादिका-डा० कु० रामेश्वरी कुमारी रासेश्वरी
११. यौतकम्—आ० शिवजी उपाध्याय ५=००
१२. सर्वदर्शन विमर्शः—आचार्य शिवजी उपाध्याय ४०=००
१३. पालिपाठमाला—डॉ० बाँकेलाल मिश्र १२=५०
१४. देवी गीता—उपेन्द्र पाण्डेय १५=००
१५. भजगोविन्दम्—( मूल भोजपुरी पदानुवाद ) डा० अर्जुन तिवारी २=००
१६. गरुड़ पुराण की दार्शनिक एवं आयुर्वेदिक सामाग्री का अध्ययन—डॉ० जयन्ती भट्टाचार्या ८९=००
१७. रेखागणितम् ( १, ४ )—डॉ० नागेन्द्र पाण्डेय १६=००
१८. पञ्चस्वराः—डॉ नागेन्द्र पाण्डेय १८=००
१९. समरसारः ( दैवज्ञरामविरचित ) हिन्दी व्या०—डॉ० नागेन्द्र पाण्डेय १३=५०
२०. रघुवंशमहाकाव्यम् (१३-१४ सर्ग)—पं० चन्द्रधर शुक्ल १०=००

